# किरातार्जुनीयमहाकाव्यम्

[ ३-६ सर्गाः ]

राजविर्बद्धिनीसंस्कृतटीकाकारः
**डॉ० बदरीनारायण पाण्डेयः**
अध्यापको भारतीयविद्यासंस्कृति एवं संस्कृतप्रमाणपत्रीयविभागस्य
सम्पूर्णानन्द संस्कृत विश्वविद्यालयः, वाराणसी

❀

राजेश्वरी हिन्दी टीकाकर्त्री
**डॉ० कु० रामेश्वरीकुमारी 'रासेश्वरी'**
अध्यापिका, प्राचीनराजशास्त्र एवं अर्थशास्त्रविभागीया
सम्पूर्णानन्द संस्कृत विश्वविद्यालयः, वाराणसी

प्रकाशक
**वाराणसेय संस्कृत संस्थान**
सी २७/६४ जगतगंज, वाराणसी

# श्री पं० बुद्धिबल्लभ पाठक

अध्यक्ष

भारतीयविद्यासंस्कृति एवं संस्कृतप्रमाणपत्रीय विभाग
सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी

डॉ० बदरीनारायण पाण्डेय, मेरे विभाग में ही कार्यरत हैं। मैं इनके व्यक्तित्व और विद्या से पूर्ण परिचित हूँ। इन्होंने, इसके पूर्व भी कई स्वतन्त्र मौलिक पुस्तकें तथा काव्यशास्त्रों की संस्कृत टीकायें लिखा है। प्रस्तुत ग्रन्थ किरातार्जुनीय-महाकाव्य का तीन से छः सर्गात्मक काव्य है।

इन्होंने भारवि के इस महाकाव्य की टीका का नाम राजबिर्बद्धिनी रखा है जो इसके आशय को समाङ्कित करती है। इसमें काव्य का वास्तविक सामाजिक उपयोग राजनीति परिपेक्ष्य में प्रभावोत्पादक दिखाया गया है।

डॉ० पाण्डेय ने इस टीका के माध्यम से कवि के हृदयस्थ भावों को पूर्ण प्रकाशित कर दिया है। इसमें प्रकृति चित्रों का मौलिक स्वरूप है जिसे कवि ने चित्रित किया है, उसके भावों का अभिव्यञ्जन अनायास हो जाना—इस टीका की विशेषता है। इन्द्रकील पर्वत पर जाते समय अर्जुन का ममत्व द्रौपदी की बातों में तिरोहित हो उठा है। जिसे वह अपने अपमान का ही सर्वस्व समझती है। शत्रु पराजित हो—इस निमित्त उसे अर्जुन का वियोग नहीं जान पड़ता है। यहाँ द्रौपदी के शौर्य का मनोरम चित्र है। शरद्काल के वर्णन का सौन्दर्यदर्शन इस टीका ने इतना अद्भुत उपस्थित किया है कि—कवि के प्रकृतिस्थ मनोभाव स्वतः स्फुटित हो उठते हैं। प्रकृति अन्तस्थल का अपूर्व चित्रण कवि हृदय को प्रकृति प्रेमी संकेतित करता है। ततः इन्द्रकील पर्वत की प्राकृतिक घटा का अत्युत्कृष्ट वर्णन पर्वत सुषमा का निराला अंकन है। तपस्या की सावधानियों को इंगित करते हुए सिद्धि साधना का अपूर्व स्वरूप उपकल्पित किया गया है जिसे टीकाकार ने अपने शब्दों में स्फुट किया है।

इसके साथ डॉ० कु० रासेश्वरी कुमारी रासेश्वरी की राजेश्वरी हिन्दी टीका भी संस्कृत से अनभिज्ञ विद्वानों के लिए सुबोध एवं लाभकारी है। इन दोनों टीकाओं से इस काव्य का अपूर्व भावाङ्कन है। हिन्दी टीका के साथ अभिप्रायों का प्रकाशन इंगित करता है कि कवि में वास्तविक यही भाव हृदयस्थ है।

वस्तुतः इन दोनों टीकाओं का एक साथ समायोजन किये जाने से संस्कृत-हिन्दी दोनों प्रकार के विद्वानों का अपूर्व हित अर्जन होगा। विद्यार्थियों को काव्यस्थित कविभाव को भी समझने में इन आयामों से सरलता होगी।

इस प्रकार काव्यस्थित ज्ञानतत्वों को पाठकों तक पहुँचाने के इस कार्यक्रम से मैं अत्यन्त प्रसन्न हूँ। मुझे विश्वास है कि श्री पाण्डेय अपनी लेखनी को इसी प्रकार प्रौढ़ ज्ञान जगत में चलाते रहने का दृढ़ प्रयास करते रहेंगें।

बुद्धिबल्लभ पाठक

# अत्र किञ्चिद्

भारतीयवायङ्मयेषु संस्कृतसाहित्येषु काव्यजगत्सु च सर्वत्र महाकवेर्भारविकृतस्य किरातार्जुनीयमहाकाव्यस्यातीव प्रसिद्धिरवलोक्यते। अत्र ग्रन्थे तृतीयसर्गादारभ्य षट्सर्गात्मकं काव्यस्याख्यानं कृतिमस्ति, तत्राख्याने हि सर्गात्मिका कथा तथा चोक्तानां देशकाल-समयादीनामपि चित्रं विचित्रतयोक्तमवलोक्यते। अतस्तेषामत्रोपस्थापनमावश्यकमिति मत्वा ह्यत्र कथावस्तुरुच्यते। विशेषव्याख्यानन्तु किरातार्जुनीयमहाकाव्यस्य प्रथमसर्गात्मके ग्रन्थेऽवलोकनीयम् विद्वभिः विद्यार्थिभिश्च। इह सर्गबन्धात्मिका कथा यथाक्रमेंणोच्यते।

## तृतीयसर्गीया कथा

व्यासं प्रति युधिष्ठिरस्योक्तिः—दिव्यरूपो देदिप्यमानतपस्यामूर्तिः भवगत्स्वरूपो व्यासो युधिष्ठिरमागतवान्। तमवलोक्य धर्मराज इत्थमवोचत्—हे तपोपुञ्ज ? पुष्पसंचयेनैव भवतो गुणानामाख्यानं कर्त्तुं प्रभविष्यति जनः। भवदागमनेन मदीया यज्ञक्रिया ब्राह्मणानामाशीर्वादश्च सफलतामगात्। साम्प्रतमहमत्र लोके श्रद्धाभाजनो जातः। यतोहि भवदीयदर्शनेन ममास्ति दशा—

तवागमनेन बन्धुविरहितो मे मनस्तृप्तो नवजीवनमाप्नोति। यद्यपि भवदृशाः महानुभावाः मत्तो नहि किञ्चिद् वाञ्छन्ति तथापि तवागमनप्रयोजनं ज्ञातुमभिलषामि। ततो महर्षिव्यासोऽवदत्। इहलोके परलोके चैश्वर्येच्छया कुटुम्बिनां समादर अत्यावश्यकः। तथा हि नृप ! तव गुणैः मुग्धोऽस्मि। यतोहि विरक्तानां मनुष्याणां साधुजने गुणवति च भवति महान्स्नेहः। किं यूयं न स्थ धृतराष्ट्रवंशजाः ? उत वा गुणैः दुर्योधनात् न्यूनतमः ? नह्येवम्। तथापि सः राज्यात् परिभ्रंशितः युष्मान्। निश्चयेन तस्य कार्यसिद्धिर्न भविष्यति, यतो व्यवहारविनिर्णये जातसन्देहे सः कर्णादीनां मन्त्रं व्यवहरति। दुष्टजनसंसर्गः विजयाय न प्रभवति भवतिचापदस्थानम्। दुःखमनुभवन्तो यूयं पराक्रमशालिनः, धैर्येणैव पृथिवीं जेतुं शक्नुथ। संघे

तमेव विजयमङ्करोति यस्य प्रशस्तं सैन्यबलान्यस्त्राणि च भवन्ति। प्रमाणमत्र भीष्म परशुरामयुद्धम्। संयुगे दुर्योधनपक्षीयाः बलशालिनः भीष्म-द्रोण-कर्णप्रभृतयः प्रमुखाः शूराः वर्तन्ते। अत एव सम्प्रति तैःसह तव विग्रहो नोचितः। विजयार्थं दिव्यास्त्राणां परमावश्यकता। तदर्थञ्चात्राहमर्जुनाय मन्त्रमुपदिशामि। येनेन्द्रमनुकूल्य प्रभूतबलानि शराणि चाधिकर्त्तुं शक्यते। इहागमनस्यैतावन्मात्रमेवास्ति प्रयोजनन्मे। हे धनञ्जय? त्वन्मन्निर्दिष्टं सशरं कार्मुकं धारयन्मुनिवेशमाकलय्य तपस्व। यत्र च वर्तते तपोभूमिस्तत्रायं यक्षस्त्वां नेष्यति। ततश्चान्तर्हिते व्यासे यक्षस्तत्र समागतः। संकल्पिततपोव्रतमर्जुनमवलोक्य विरहातुरा द्रौपदी तं व्याजहार।

विगतचिन्तो भूत्वा भवान् दत्तचित्तः तपस्व, यतोहि दार्ढ्यं विना नैव भवति हस्तगतासिद्धिः। संसारेऽस्मिन् मर्यादान्वितानां पुरुषाणां मानहानिः प्राणादपि श्रेयसी। शत्रुभ्यः पराजयेन लोके भवति जनस्यानादरः। रिपुभिः यानि यानि कृत्यानि कारितानि तानि नह्यत्र स्मारयामि। अद्यापि जाते त्वयि ते मयि दुःखमुत्पादयिष्यन्ति। तथापि सर्वं सोढयाहमाशासे यत्त्वं परपीडनं दैवीशक्तिमादाय प्रत्यावर्तनं करिष्यसि। प्रस्थातु तपस्यार्थं, शिवास्ते पन्थाः; पूर्णाः जान्तुमस्माकं मनोरथाः। प्रत्यायाते च सफलमनोरथैस्त्वां स्तनोत्पीडनेनालिङ्गनं करिष्यामि। श्रुत्वा च सकलवृत्तमुद्दीप्ततेजोऽर्जुनः सशरं कार्मुकं खड्गञ्चादाय यक्षनिर्दिष्टैमध्वानैस्तपस्यार्थमिन्द्रकीलपर्वतमगात्। गतेऽर्जुने पाण्डवाः क्षुब्धा अभूवन्। प्रस्थानकाले धनञ्जयस्य मङ्गलसूचकानि मङ्गलकार्याणि जातानि, खाज्जाता पुष्पवृष्टिः मङ्गलवाद्यानि निनदितानि देवै, रित्थमवलोक्य युधिष्ठिरप्रभृतयः प्रमुदितमनाः विराजन्ते।

## चतुर्थसर्गीया कथा

### शरदृतुवर्णनम्

यक्षेण सार्धमिन्द्रकीलप्रस्थं गच्छन्नर्जुनः पथि शारदीसुषमामवलोकयामास। यस्याख्यानमत्र महाकविभिः भारविमहोदयैः इत्थमुकल्पितम्—

विगते च प्रावृट्कालेऽध्वानं पङ्करहितमभूत्। कृशोदर्यो नद्यो निर्मलसलिलाः स्वच्छवालुकामयैः सुशोभिताः विराजन्ते। जलाशयेषु विकचितानि कमलानि स्थला-

रविन्दानां भ्रमोत्पादयन्ति। शालिशस्यान्वितानि क्षेत्राणि पथिकानां मनांसि रमयन्ति। इत्थञ्च धनञ्जयं ससिक्तं शारदीयशोभामवलोक्य निजेन वचसा तस्याः सुषमायाः रमणियतां प्रदृष्टचित्तं वचनमेवमवोचत्।

हे पार्थ! शरद्कालोऽयमतीव रमणीयः। सस्यान्विता च सम्प्रति वसुन्धरा। अकर्दमाः नद्यः पल्वलाश्च विराजन्ते। निरभ्रो नभ्रः श्रियमादधाति। पक्षिणः ससुखाः मुदाश्च कलरवयुताः नभसि विहरन्ति। शीतलमन्द-सुगन्धान्विताः वायवो लोकामनुरञ्जयन्ति। आशाश्च निर्मलाः जायन्ते, धान्यक्षेत्रेषु स्थिताः जलराशयः हरितलताभिः स्वेतकमलैः, पक्वैश्च धान्यैः पीताभां शोभामाकलय्य पुरन्दरधनुरिव प्रतीयन्ते। गोपाङ्गनाः सुमधुरैः रसान्वितैः वचोभिः मयूरमपि तिरस्कुर्वन्ति आह्लादयन्ति च लोकान्। तत्रैव तैः कोकिलस्वरैः सुमधुरगीतैः प्रभान्विताः मृगास्तृणान्यपहाय चपलाः विलोकयन्ते। इत्थञ्च यक्षकृतं शरद्कालस्य रामणियकमाख्यानमाकर्ण्य पार्थः परमानन्दमनुभवन् वनजैः हरितवर्णैः तथाभूतं नगराजं हिमालयं ददर्श।

## पञ्चमसर्गीया कथा

### इन्द्रकीलवर्णनम्

इन्द्रकीलं प्रति गच्छनर्जुनो नगराजस्यापि सुषमामवलोकयामास। विलोक्य च नगाधिराजमर्जुनस्तं प्राणिनामाश्रयदाताऽवमन्यत। यतोहि तत्रासन् विविधानां धातूनां मणिरत्नानां च संग्रहः। मूर्ध्नि च विराजते हिमाभा। मध्यभागे नायं वृहदाकारः तथापि तत्र विचरन्ति मेघाः यथायथम्। इत एव भागीरथ्याः समुद्गमः। जलप्रपातेषु च हरिततृणानि जातानि तैश्च जायते महती सुषमा तस्य। अभिभूतचित्तमर्जुनमवलोक्य यक्षोऽपि तत्रस्थां श्रियमाख्यातवान्।

इह सन्ति हिमाच्छादिताः नभप्रायिन्तो प्रस्थानि। इहैव विराजेते मानसरोवरकैलासौ च। मध्ये चास्य वनानि, तत्र निवसन्ति सिंहाः, व्याघ्राः, हिस्रजन्तवः। निशि च जायते प्रभूतप्रकाशस्तत्र महौषधिभिः, तस्मिन्नैव देवाङ्गनाःविहरन्ति च। भगवत्याः पार्वत्या अपि तपोभूमिरियमेव। भूतभावनस्य क्षेमकरस्य शिवस्यापि वर्तते इहैवासभूः। तपसिरतान् तपःपूतान् ऋषिमुनिमनुजान् पातयन्ति

परिभ्रंशयन्ति स्वानुष्ठानात् किन्नर्यः। कृषकाश्चावसन्ति समाश्रयन्ति प्रस्थेष्वस्य ससुखा; मोदमनाश्च। अत्रैव वर्तते इन्द्रकीलपर्वतस्य ससुखान्विताः रमणीयाः कन्दराः। इहैव देवराजो मघवा समागत्य विहरति। अयमेवास्ति तस्य परम-हृद्यमधिष्ठानम्। इहास्थाः चन्दनवृक्षाः गजकण्डुयनैः भुजङ्गरहिताः दृश्यन्ते। अत्रस्थाः मरकतमणयोऽतिवाहयन्ति तिरस्कुर्वन्ति च भास्करमयूखम्।

ततश्च यक्षोऽर्जुनमादिशति शास्त्रान्वितस्तपश्चरणाय। विज्ञापयति तं यत्तपसि काले भविष्यन्ति विविधानि विघ्नानि किन्तु धैर्येण प्रसादेन च साध्यं स्वकीयं मनोभिलषितं कृत्यम्। अवश्यम्भविष्यसि सफलमनोरथवान्। नहि भेतव्यमिह करिष्यन्ति साहाय्यं लोकपालाः शक्राश्च तव। उक्तवति निर्गते च यक्षेऽर्जुनः गङ्गा-मासाद्य इन्द्रकीलमधितिष्ठति। वृक्षेषु स्थिताः पक्षिणः पुष्पसंसिक्ताः मिलिन्दाः गुञ्जारैः स्वरैः धनञ्जयस्य जयमुदीयन्तीतीत्थं प्रतीयते। पवनैश्चोदिताः पुष्पवृक्षाः सुगंधैः सुमनैस्तमभिनन्दयन्ति। शीतकराः ससुखाः गन्धवहाः वायवोऽपि तमेवा-तिथिसस्कारं पुरःसरन्ति। चन्दनतरुयुतं वेतलतावरितं हंसकलरवपूतं भ्रमरगुञ्जारित-मिन्द्रकीलस्थस्थानमवलोक्य पार्थः मोदमाततान।

## षष्ठसर्गीया कथा

### अर्जुनस्य तपश्चरणम्

शोभान्वितमिन्द्रकीलमासाद्य धनञ्जयः तपसि प्रावर्तत। तत्रार्जुनः विषयभोगा-नपवार्य एकाग्रचित्तस्तपश्चकार। अनेन क्रमेण तपसि मनः निधाय पार्थः समोद मानसः विलक्षणं तेजमवाप। ततश्च तपसः प्रभावात् सः मार्तण्ड इव जातः। तैस्तपसः हिस्रोऽपि नैसर्गिकविग्रहमपहाय ससुखो विहरन्ति। सुखदो वायुः प्रवहति। सूर्यरश्मयः सुखंकराः जाताः। वृक्षेषु किसलयानि जातानि। निरभ्रो नभः निर्मलोऽभवत्। अथ च तस्य तपश्चरणस्यायं प्रभावः स्वस्मिननुभवन्तो वनेचराः शक्रमुपसृत्य तपस्यायाः स्वरूपस्य तस्य तपोवेशस्याख्यानं कृतवन्तः। इन्द्रश्च पार्थपरोक्षणार्थमायातं प्रशंसनपसरास्तत्र सम्प्रेषिताः। तास्तत्र सालङ्कृताः समागताः गन्धर्वैः सह कटाक्षैरलिङ्गनादिभिश्च प्रेरिताः, किन्तु नहि तस्मिन् रागोजातः अपितु चराचराननुकूल्य वशीकृत्य चार्जुनोऽपूर्वां सिद्धिमगात्।

सम्प्रति किरातार्जुनीयमहाकाव्यस्य ३-६ सर्गात्मकस्य ग्रन्थस्य राजविर्बद्धिनीं-टीकां ग्रथकारस्य हृदयस्थभावं प्रकाशनाय प्रस्तौम्यहम् । अत्र श्रमे विद्वभिराशीर्वाचं प्राप्तुमिच्छामि । विद्यार्थिनामनयाऽनायासेन सारल्येनार्थबोधाय कृतोऽयं श्रमः प्रभविष्यतीति विश्वसिमि । यथा सुकुमारमतिवतां हृदि कवेरभिप्रायम् ऋजुतया संगच्छेदिति टीकायां सरलाः प्रयोगबहुलाश्च शब्दाः प्रयुक्ताःवर्तन्ते सरलेन संस्कृतेन भावार्थप्रदर्शनमपि यथायथमुपकल्पितमत्र । अतः निश्चयेनास्य ग्रन्थस्य हितयोगो भविष्यति विदुषां विद्यार्थिनां कृतेति कृत्वा विरमामि ।

भावतः
डॉ० बदरीनारायण पाण्डेयः
अध्यापको भारतीयविद्यासंस्कृति एवं
संस्कृतप्रमाण पत्रीय विभागस्य
सम्पूर्णानन्द संस्कृत विश्वविद्यालयस्य

मकरसंक्रान्ति संवत् २०४२
१४ जनवरी १९८५
वाराणसी

## प्राक्कथन

किरातार्जुनीय महाकाव्य संस्कृत काव्यों में सर्वातिशायी प्रसिद्धि प्राप्त कर चुका है। इसके रचयिता महाकवि भारवि का नाम भी संस्कृत साहित्य जगत में जगमगाता ही दीखता है। यहाँ मैं छात्रों के हित में कवि के परिचय तथा इस महाकाव्य की समग्र विशिष्टताओं का पुनः पल्लवित नहीं करना चाहती हूँ। क्यों? यह कि—इस सम्बन्ध में प्रथम सर्ग के आदि में ही विधिवत् लिखा जा चुका है। उस लेख पुञ्ज से ही संस्कृत विद्वान् एवं छात्र सर्वहितकारी स्वाध्याय-साधना सफल कर सकते हैं। यहाँ उसका पुनः पृष्टिपेषणा करना उपयुक्त नहीं जान पड़ता। अतः मैं इस ( ३-६ सर्ग ) के प्रकाशन खण्ड में मात्र प्रत्येक सर्गों की कथा तथा उसमें वर्णित साहित्य-तरङ्गों का ही आख्यान कर रही हूँ।

## तृतीयसर्ग की कथा

### व्यासजीके प्रति युधिष्ठिरकी सदुक्ति

दिव्यरूपस्व तेजपुञ्ज शान्त तपस्याकी मूर्ति भगवान् व्यासके आगमन का कारण जानने की इच्छासे धर्मराज युधिष्ठिरने कहा—

विना पुण्यसंचयोंके आप जैसे व्यक्तिका वर्णन दुर्लभ है। आपके आगमन से मेरी यज्ञादि क्रियायें और ब्राह्मणोंके आशीर्वाद सफल हो गये हैं। संसारमें मैं आज सबसे अधिक आदर का पात्र हो गया हूँ। आप के अमोघ दर्शन से श्रीवृद्धि, पापोंका नाश, कल्याणकी वर्षा और कीर्तिका विस्तार होता है। आप के दर्शन से मैं तृप्त हो गया हूँ। मेरा हृदय वन्धुवियोग के दुःख को छोड़कर पुनर्जीवित हो उठा है। आप जैसे परोपकारी व्यक्तिका यद्यपि हमसे क्या प्रयोजन हो सकता है, फिर भी आपके आगमन का कारण जाननेके लिए मेरी उत्कृष्ट इच्छा मुझे बोलनेको प्रेरित कर रही है।

युधिष्ठिरके इस उक्तिवैचित्र्यसे प्रसन्न हो महर्षि व्यासने कहा—ऐहलौकिक और पारलौकिक ऐश्वर्यके इच्छुक प्राणियों द्वारा अपने कुटुम्बियोंके साथ ममता का

व्यवहार उचित है। तपस्वियोंका तो सबके साथ विशेष रूपसे समानताका व्यवहार होना चाहिये। फिर भी हे राजन्! आपके गुणोंपर मैं मुग्ध हूँ क्योंकि विरक्त मुमुक्षुओंका भी साधु और गुणवानों पर स्नेह होता है। क्या आपलोग धृतराष्ट्रके वंशज नहीं है? या गुणोंमें दुर्योधनसे श्रेष्ठ नहीं हैं? जो कि मोहमें पड़कर उसने तुम्हें निकाल दिया। उसे कार्यसिद्धि कैसे होगी जो कि कार्यमें सन्देह होने पर कर्ण आदि दुष्ट मंत्रियों पर निर्भर रहता है। क्योंकि दुष्टोंका संसर्ग विजय में बाधक और विपदाओं का स्थान होता है। सारी सभा जब धर्मसे च्युत हो गई उस समय विपत्ति सहकर भी धर्ममें दृढ़ रहते हुए आपने गुणोंके प्रति प्रशंसनीय प्रेम दिखाया है। आपके अपकारी शत्रुओंने भी कष्ट देकर आपका उपकार ही किया है क्योंकि अन्यथा आपकी बुद्धि और शील का पता कैसे चलता। अब आपको पराक्रमसे पृथ्वी जीतनी है और शत्रुपक्ष आपसे अधिक बलशाली है। अतः शत्रुसे भिड़नेके लिए उपाय करें, क्योंकि रणमें विजयश्री प्रकर्षके ही अधीन होती है। २१ बार पृथ्वीको निःक्षत्रिय करनेवाले परशुरामको जिससे हार खानी पड़ी और यमराज भी जिससे कांपता है ऐसे भीष्मसे, प्रलयकालकी अग्निके समान युद्धमें द्रोणाचार्यके बाणोंकी विभीषिकासे तथा परशुरामजीसे प्राप्त विद्याके बलपर मृत्युको भी डरानेवाले कर्णसे कौन नहीं डरेगा। तुममेंसे कौन इनकी बराबरी कर सकता है। इसलिए दुश्चर तपस्या द्वारा जिस दुर्लभ विद्याको पाकर इन महाबलियों को अर्जुन परास्त कर देगा वही विद्या देने के लिए मैं यहाँ आया हूँ।

व्यासजीके इन वचनोंको सुनकर और 'जाओ सीखो' यह युधिष्ठिरकी आज्ञा पाकर अर्जुन शिष्यकी भाँति उनके पास गया और वह विद्या मंत्ररूपमें व्यासजी के मुखसे निकलकर अर्जुनके मुखमें इस प्रकार चली गई जैसे सूर्य की दीप्ति कमल में। व्यासजीने योग्यशिष्य अर्जुनको ज्योंही विद्या दी त्यों ही तत्त्वज्ञानसे उसकी आँख जैसी खुली। अपनी इच्छानुरूप उसके स्वरूपको देखकर उसे तपस्यामें नियुक्त करते हुए मुनिने कहा—

इस योग से अपने तेज और पराक्रमकी वृद्धि करते हुए इसे गुप्त रखकर शस्त्र धारण पूर्वक जपोपवासादिसे मुनिवृत्ति धारण करो और जहाँ तुम्हें तपस्या

करनी है उस पर्वतपर यह यक्ष तुम्हें पहुँचा देगा। इतना कहकर व्यास अन्तर्धान हो गये और क्षण में ही यक्ष वहाँ उपस्थित हो गया। यक्षने प्रणाम करके शीघ्र ही अर्जुनकी मित्रता प्राप्त कर ली क्योंकि सज्जनोंका सम्पर्क शीघ्र विश्वास उत्पन्न करा देता है। जैसे उदय होता हुआ सूर्य जब सुमेरु शिखरोंको पीछे छोड़ता है तो उनमें अंधेरा घिर जाता है वैसे ही कल्याणके लिए भी अर्जुनके जानेकी आशंका से पाण्डवोंको मोह सताने लगा। कार्यके गौरवका विचारकर उसे उन्होंने उस भ्रातृवियोग को बाँट लिया और वह उन्हें हलका प्रतीत होने लगा। व्यासजी-पर अत्यन्त श्रद्धा; शत्रुओंके दुर्व्यवहारका खेद और अर्जुनके शौर्यका विचार करके उनका दुःख तो कम हो गया किन्तु द्रौपदी अत्यन्त दुःखित हुई। अर्जुनने उसके इस स्वाभाविक प्रेम को जान लिया और तब जंगली हाथी जैसे ग्रीष्मकालीन नदी की निर्मलताको नष्ट कर देता है ऐसे ही शत्रुओंने जिसकी प्रसन्नताको छीन लिया है ऐसी द्रौपदी गद्गद कण्ठसे बोली—

द्रौपदीकी उक्ति

जबतक तपस्या पुरी न हो तबतक आप हमारे बिना व्यग्र न हों, क्योंकि कीर्ति सुख और महत्त्वकी आकांक्षावाले व्यक्तिको दृढ़ आग्रहके बिना सिद्धि नहीं होती। संसारमें तेजस्वी पुरुषोंके लिये मानहानि मृत्युके समान होती है। शत्रुओंने हमारा जो अपमान किया है वह संसारमें अच्छी तरह फैल चुका है और उससे आपके पूर्व पुरुष श्री हीन हो गया है। उनके वे दुर्व्यवहार जो धीरे-धीरे मेरे हृदयमें सूख जैसे रहे थे तुम्हारे विरहमें फिर नये जैसे हो जायँगे। दाँत टूटे हुए हाथीकी तरह आपका प्रताप नष्ट और शत्रुओंके तेजसे अभिभूत हो गया है। काममें न लानेसे आपके अस्त्र कुंठित हो गये हैं। इस सबस आपका स्वरूप ही विरूप-सा लगता है। क्या आप वही धनञ्जय हैं जिनके रहते हुए अनाथकी तरह मेरे केशोंको खींचा गया। रक्षा न कर सकनेसे क्षत्रिय शब्दकी और कर्ममें प्रयुक्त न होनेसे कार्मुक शब्दकी व्युत्पत्ति आज व्यर्थ हो रही है। सब कुछ नष्ट होनेपर जैसे हमलोग केवल आपकी सिद्धिकी प्रतीक्षामें एक साथ रह रहे हैं ऐसे ही आपके शौर्यादि गुण क्षीण होते हुए भी आपके द्वारा होनेवाली भावी उन्नति की प्रतीक्षा

कर रहे हैं। हाथी जैसे असावधान सिंहके बाल नोंचे, ऐसे आप अपमानित हुए हैं किन्तु अब दिनकी शोभा जैसे सूर्यके आश्रित रहती है ऐसे ही हमारी दुर्दशाको दूर करनेका भार तुम्हारे आश्रित है। अपने कर्तव्योंसे अपनी योग्यताको प्रमाणित कर दिखानेवाला व्यक्ति ही समाजमें अद्वितीय कहलाता है। हे पार्थ! विजयके लिये जाते हुए आपके, प्रियजनोंके विरहमें होनेवाले उन दुःखोंको, देवराज, इन्द्र नष्ट करें। एकान्त और निर्विघ्नतापूर्ण स्थानमें रहते हुए भी आप असावधान कभी न हों क्योंकि रागद्वेषसे आकृष्ट हुए महात्माओं के चित्त भी कभी-कभी विकृत हो जाते हैं। अतः अब शीघ्र ही महर्षि व्यासके वचनोंको पूर्ण करते हुए हमारे मनोरथोंको सफल करें। कृतार्थ होकर आये हुए आपका मैं गाढ़ा आलिङ्गन करना चाहूँगी।

द्रौपदीके इन वचनोंसे अर्जुनके हृदयमें शत्रुकृत अपकार ताजा हो आया और वे उत्तरायणके सूर्यकी भाँति तमतमा उठे। उसी समय पुरोहित धौम्यने मंत्रपूर्वक सारे अस्त्र-शस्त्र उनके सामने उपस्थित कर दिये जिनसे उनकी आकृति और भी भयंकर हो उठी। उन्होंने अपने विख्यात धनुष गाण्डीवको और कवच तथा तरकसों को यथास्थान धारण किया इसके बाद द्वैतवनके तपस्वियोंको वियोगसे दुःखी करते हुए अर्जुन यक्षके निर्दिष्ट मार्गसे उत्तरदिशा को चल दिये। उस समय देवताओंने दुन्दुभियां बजायी, फूलोंकी वर्षा की, समुद्र में उल्लासकी लहरें उठने लगीं। अन्यमङ्गल सूचक भी अनेक कार्य हुए।

## चतुर्थसर्गकी कथा

### भारविकृत शरद्वर्णन

यक्ष के साथ इन्द्रकील पर्वत को जाते हुए अर्जुन किसानों को उस शस्य सम्पदा के पास पहुँचा जहाँ पके हुए धान के खेत पीले-पीले सुन्दर लग रहे थे। झुकी हुई धान की बालों से भरे, स्वच्छ मार्गों तथा फूले कमलों से संयुक्त जलों वाले सीमा-प्रदेशों को शरद का उपहार समझकर वह प्रसन्न हुआ। तालाबों में खिले कमल नेत्रों जैसे तथा घूमती हुई मछलियाँ आँखों की पुतली-सी लग रही थी। जो जानपड़ता था कि तालाब अपने नेत्रों से अर्जुन को देख रहा है। धान

के खेतों में इकट्ठे जल में कमल खिल रहे थे। पानी में इतना केसर झड़ रहा था कि पानी भूमि-सा और उसमें खिले कमल गुलाब जैसे लग रहा था। जब पाठीन नामक महामत्स्य इधर-उधर घूमता था तब पानी स्पष्ट दीखने पर अर्जुन का भ्रम दूर होता था। वर्षा के पानी का वेग ज्यों-ज्यों कम होता जा रहा था त्यों-त्यों बालू में लहरों के चिह्न स्पष्ट दीख रहे थे, जिनसे स्वच्छ बालू चमकते रेशम के वस्त्रजैसी दीप्त हो रहा था। धानों की रखवाली करती हुई कृषिकाङ्गनाओं के माथे पर केतकी के लसीले पराग से चिपकाया हुआ दुपहरिया का फूल ओठों में लगी लिपिस्टिक की लाली की समानता कर रहा था। उनके स्तनों पर लगे लाल-लाल कमल पराग पर पसीने की बूंदे चमक रही थी उनके कानों में खोंसे हुए उत्पल नेत्रों की कान्ति से दुगुनी शोभा पा रहे थे, और उनकी इस शोभा से अर्जुन ने शरद् ऋतु को कृतार्थ समझा। रात के पिछले पहर बछड़ों से बिछुड़ी हुई, अंतः उनसे मिलने को उत्कण्ठित होने पर भी बड़े-बड़े ऊधतों के भार से दौड़ न सकती हुई गायों के झुण्ड अर्जुन को अपनी ओर बलात् आकृष्ठ कर रहे थे, उन गायों के बीच रँभाता हुआ वृषभ साक्षात् दर्प की मूर्ति-सा लग रहा था। नदियों के किनारों से ज्यों-ज्यों गायों के झुण्ड खिसक रहे थे ऐसा लगता था मानो किसी नायिका की कमर से वस्त्र सरक रहा हो। इसके बाद अर्जुन ने उन ग्वालों को देखा जो निरन्तर पशुओं के साथ रहने से सीधे-साधे पशु जैसे ही स्वभाव के हो गये हैं। दही मथंतीहुई ग्वालिनों को, जो कि नाचती हुई नर्तकियों जैसी लग रही थीं, अर्जुन देखता ही रह गया। इसके बाद वह उन मार्गों से चलने लगा जो वर्षा-कालिक टेढ़ापन छोड़कर सीधे हो गये थे, जिनके आस-पास के धान बैल चर गये थे और जिन पर गाड़ियों के पहियों के निशान बन गये थे। वह जिन ग्रामों से होकर जा रहा था वे प्रत्येक घरों में खिले फूलों वाले लताकुंज और भोले-भाले ग्रामिणों के निवास से आश्रम जैसे लगते थे।

यक्षकृत शरद्वर्णन

शरद् की शोभा देखने में लगे अर्जुन से यक्ष ने कहा—

हे पार्थ! मंगलमय भाग्य के फल-दान का काल यह शरदृतु जो निर्मल जल तथा स्वच्छ बालों वाली है, तुम्हें भी विजयश्री प्रदान करे। यद्यपि इस ऋतु

में न तो बकपंक्तियाँ आकाश में उड़ती हैं, न इन्द्रधनुष ही दीखता है फिर भी आकाश सुन्दर लग रहा है। जैसे पति के विरह में स्त्रियाँ कृश हो जाती है वैसे ही वर्षा-रूप पति के विरह में दिशाएँ जैसे कृश हो गई हैं। किन्तु यह कृशता भी सुन्दर लग रही है। मोरों की ध्वनि अब कानों को अच्छी नहीं लगती, प्रत्युत हंसों का कलरव सुनने को जी चाहता है। पके धानों के गुच्छे जो नीचे को झुक रहे हैं वे मानो खेतों के जल में खिले कमलों की गन्ध सूंघ रहे हैं। कमलिनी का हरा रंग, फूलों के लाल रंग तथा धान के पौधों के पीले रंग की छाया पड़ने से जल से इन्द्रधनुष सा प्रतीत हो रहा है। ये वन-पंक्तियाँ उड़ती हुई छितौन की सफेद धूल से हँसती हुई सी तथा कटसरैया के नीले फूलों से आँभावाली सी लग रही है। आकाशमार्ग बादलों द्वारा सूर्य के ढक जाने से शीतल, साधारण जलकणों से युक्त होने से मन्द, तथा कमलों की गन्ध से सुगन्धित वायु से शुभ तथा बिजली की चकाचौंध से रहित है। दौड़ते हुए हंसों के कलरव से ऐसा प्रतीत होता है जैसे बादलों के पंजे से छूटी हुई दिशाएँ आपस में बात कर रही हों। ये गायें अपने-अपने बछड़ों के लिये उपहार लाई हैं! संसार की रक्षा करने में समर्थ और पवित्र इन गायों के झुण्ड गोठों में अपने बछड़ों से मिल रहे हैं जैसे ऋगादि मंत्र आहुतियों से मिल रहे हो। इन गोपललनाओं के मधुर गीतों में आसक्त हुई हरिणियां भूख-प्यास सब भूल गई हैं। कमलिनी से तिरस्कृत हुआ शालिधान ऐसे सूखकर पिला पड़ता जा रहा है—जैसे किसी कामिनी से फटकारा हुआ कामी। ये कमल-पराग तथा जलकणों से युक्त भौंरे शीतल, मन्द, सुगन्ध पवन से आकृष्ट हुए रक्षा के लिये कहाँ जायँ, यह निश्चय नहीं कर पा रहे हैं। ये हरे-हरे तोते अपनी लाल-लाल चोंचों में पीले धान की बालियों को लिये हुए इन्द्रधनुष जैसे लगते हैं। यक्ष द्वारा इस प्रकार शरद् का वर्णन चल ही रहा था कि हिमालय पर्वत दूर से दीखने लगा। नीचे नीले वनस्पतियों से घिरा और और ऊपर में श्वेत वर्फ से ढका वह हिमालय नीली धोती पहने श्वेतवर्ण के बलदेवजी की याद दिला रहा था।

## पञ्चमसर्गकी कथा

इन्द्रकील पर्वत पर जाते हुए अर्जुन ने हिमालय की अपूर्व शोभा देखा।

'वस्तुतः वह संसार के समस्त प्राणियों का आश्रयदाता जान पड़ता है। क्योंकि इसी के बीच में अनेकानेक धातु और मणिरत्नों का संग्रह है। इसके शिखर हिमाच्छादित है। इसका मध्य भाग सुविस्तृत है जो मेघों के विचरने का स्थल है। यहीं से भगवती भागीरथी का प्रसव हुआ है तथा इसके अतिरिक्त अन्य अनेक नदियाँ भी यहीं से प्रवाहित होती हैं। जल प्रपातों के किनारे आर्द्रता से समुद्भूत इसी घासों की छवि अर्जुन के मस्तिष्क को सुखी बना देती है। इस प्रकार संसिक्त मन अर्जुन को देखकर यक्ष स्वयं वर्णन करना प्रारम्भ करता है। जो इस प्रकार है।

हिमालय की चोटियाँ हिम से ढकी हुई है। इसी के पास मानसरोवर और कैलास पर्वत भी विराजमान है। अर्धरात्रि में यहाँ वनस्पतियों की प्रभा इतनी अधिक प्रोद्भासित हो उठती हैं कि लोग चकाचौंध हो उठते हैं। इसके मध्यभाग में सिंह व्याघ्र तथा अन्य हिंसाकारी जानवर निवास करते हैं। यहाँ देवाङ्गनाएं विहार करने आया करती है। ऋषि मुनियों की यही तपस्थली भी है। इसकी उपत्यका में कृषक निवास करते हैं तथा आमोद भरते रहते हैं।

यही समीप में इन्द्रकील की रमणीय गुफाए भी है। यहाँ देवराज इन्द्र भी विहार के लिए स्वर्ग लोक से अवतीर्ण होते हैं। उनका यह अतीव प्रिय पर्वत है। यहाँ के चन्दन वृक्षों की छालें मदमत्त हाथियों के कपोल खुजलाने से छूट गई हैं जिससे सर्प भी इनसे विमुक्त हो गये हैं। यहाँ की मरकतमणि ऐसी प्रकाशित है जिससे सूर्य किरणों का भी प्रकाश हतप्रभ हो जाता है। इस प्रकार यक्ष अर्जुन से कहता है कि हे अर्जुन ! आप सशस्त्र यहाँ तपस्या करें। तपस्या करते समय आप को अन्यान्य कठिनाई हो सकती है किन्तु धैर्य पूर्वक लक्ष्य की सम्प्राप्ति में डटे रहें। आप की इच्छा अवश्य पूरी होगी। लोकपाल तथा इन्द्र भी स्वयं उपस्थित हो आप की सहायता करेंगे। यक्ष के इतना कहकर चले जाने पर अर्जुन गङ्गा के पास सुस्थित इन्द्रकील को प्रस्थान किया। जहाँ पेड़ों पर बैठे मोर मानो इनकी जयकार कर रहे थे। हवा के झोके से हिलते वृक्ष मानो इन पर पुष्पवर्षा कर रहे थे। गङ्गा की तरङ्गों से संयुक्त पवन शीतल हो अरविन्द पराग को धारणकर सुरभित हो मानो अर्जुन का आगे बढ़ कर स्वागत कर रहा है चन्दन के वृक्ष,

ा की लताए, हंसो की कलरव ध्वनि, मदमत्त भ्रमरों की मधुर गुञ्जार अर्जुन
ो अत्यन्त मुग्ध कर रही थी। ऐसे सुषमा युक्त इन्द्रकील पर्वत पर तपस्या के
मित्त अर्जुन प्रवृत्त हुए।

## षष्ठसर्गकी कथा

### र्जुनका इन्द्रकील पर्वत पर चढ़ना

इसके बाद सुन्दर आकृतिवाला और सन्मार्ग में प्रवृत्त हुआ अर्जुन, इन्द्रकील
र्वत पर चढ़ने लगा। उसके आरूढ़ होते समय पर्वत के वृक्ष भ्रमरों की गुंजाररूप
प्रध्वनि करते हुए फूल बरसाते थे। कमल-पराग की सुगन्ध तथा गङ्गाजी के
जलकणों की शीतलता से युक्त वायु सामने से आकर मित्र की भाँति उसका आलि-
ङ्गन कर रही थी। ऊँचे-ऊँचे चट्टानों से टकराकर गिरते हुए हंस-सारसों की
ध्वनियों से पूर्ण नदियों का जल बाजों की तरह कल-कल रहा कर था।

उसी गङ्गा के किनारों पर जल के प्रबल वेग से टकराकर गिरे देवदारु वृक्षों
ा तथा झुककर अपने को बचाते हुए वेंत के वृक्षों को, तरङ्गों में उछलते हुए एवं
कमल पराग से रंगे हंसों को, तथा हाथियों से तोड़े हुए तटों को अर्जुन ने देखा।
सुनहले शिखरों के पास उछलती तरङ्गों से रंगे हुए चकवे को, पास होने पर भी
खोजती हुई चकवी को देखकर वह बड़ा प्रसन्न हुआ। जिन मणिमय शिखरों पर
होकर यह जल बह रहा था उन मणियों की किरणें जल के बाहर स्पष्ट झलक रही
थी। फेन समूह नदियों के हास्य जैसा लग रहा था। स्थान-स्थान पर हाथियों के
मद जल से बने चन्द्रकों से नदियाँ सैकड़ों आँखों वाली-सी लग रही थी। जलों में
स्वच्छ छोटे-छोटे फेन के टुकड़ों से मिले प्रवाल लता के पल्लवों को देख उसे दन्त-
कान्ति से युक्त प्रिया के अधरों का स्मरण हो रहा था। तरङ्गों में बहे हाथियों के
मदगन्धको सूंघकर प्रतिस्पर्द्धी हाथियों जैसे ग्राहों को जल से ऊपर उठते उसने देखा
किनारे पर लेटे हुए अजगरों की फुंफकार से आकाश में उछलते जल को देख उसे
आश्चर्य हुआ। इस प्रकार गंगा की ओर बढ़ती हुई चंचल आँखों जैसी मछलियों
की चिलकों वाली छोटी-छोटी पहाड़ी नदियों को देखता हुआ अर्जुन इन्द्रकील की
भीतरी भूमि में पहुँचा जहाँ फलों-फूलों से वृक्ष लदे थे। प्रत्येक शिखर पर

लतानिकुंजों और फलों से भरे वृक्षों को देख तपस्या करने के लिए अर्जुन
उत्साह बढ़ने लगा।

## अर्जुन की तपस्या

तब विधिपूर्वक चित्तवृत्तिको रोककर तपस्या करते हुए अर्जुन को दुष्कर त
जनित कष्ट भी नहीं-सा प्रतीत होता था। इन्द्रियों को वश में किए हुए, मैत्री आदि
गुणों से युक्त उसकी प्रतिदिन तपोवृद्धि हो रही थी। वह विवेक द्वारा कामादिक
जीतकर शान्तिसुखका अनुभव करता था। विषयासक्तिको छोड़कर जप, ध्या
नमस्कारादिसे इन्द्र की आराधना करता हुआ स्वाभाविक वीररस और तत्काली
शांतरस के संयुक्त तेज से वह अत्यन्त शोभित हो रहा था। मरकतमणि-सा सांवला
अर्जुन, पीली जटाओं से उस तमाल वृक्ष जैसा दीखता था जिसकी चोटी पर प्रात
कालीन अरुणोदय की किरणें पड़ रही हों। इस प्रकार तपस्या करते अर्जुन
धनुषधारी होने पर भी तपस्या के प्रभाव से जंगली जीव आपस में हिंसावाद छो
कर उसे घेरे रहते थे। वायु उस तपोवन में शीतल, मन्द और सुगन्धित होक
बहती थी। सूर्य किरणों में प्रखरता नहीं रह गई थी। वृक्ष नए-नए पल्लवों
युक्त और सुखग्राह्य फलोंवाले हो गये थे। हरी घास उगने से शयनीय स्थ
दिव्य शय्या जैसे हो गये थे। आकाश बादलों से रहित होने पर भी जलकणों
बरसाता सा प्रतीत होता था। पृथ्वी धूलरहित निर्मल हो गई थी सर्वत्र खिले फू
अर्जुन की तपःसिद्धिकी सूचना दे रहे थे।

## वनरक्षकों द्वारा इन्द्रको सूचना

अर्जुन के इस अद्‌भुत तीव्र प्रभावकों देखकर वहाँ के वनरक्षकों को चिन्ता हु
और वे इन्द्र के पास जाकर बोले—हे भगवान्! आपके इन्द्रकोल पर्वत पर को
वल्कलधारी, धनुष लिए हुए, सूर्य जैसा तेजस्वी, अपने प्रभाव से तपस्वियों को
तुच्छ करता हुआ सा तपस्या कर रहा है। उसके तपःप्रभाव से वायु सुन्दर बह
रही है। पृथ्वी हरी-भरी हो गई है, आकाश निर्मल हो गया है। धूल नहीं उड़ती
जंगली जीव जन्तु वैर-भाव छोड़कर उसे घेरे रहते हैं, वृक्ष फूलों-फलों के भार से
लदे रहते हैं। अत्यन्त तपोजनित श्रम से भी उसके मुखपर म्लानि नहीं दीखती।

की यह विजय सूचक आकृति स्वभावतः हमें भय उत्पन्न कर रही है, हम यह र्णय नहीं कर पाते कि वह कोई ऋषिपुत्र है या दैत्यवंशज, इसलिए अज्ञान से हत बुद्धिवाले हम लोगों ने जो अयुक्त कहा हो उसे क्षमा करें।

## ोभङ्ग के लिए अप्सरा-प्रेषण

त तब इन्द्र ने अपने योग बल द्वारा अर्जुन का यह समाचार जानकर उसकी भक्ति से संतुष्ट होने पर भी, तपस्या की दृढ़ता जानने के लिए अप्सराओं को दिशाकर कहा—हे अप्सरागण ! आपलोग के पास कामदेव का संसार-विजयी अस्त्र या आपलोगों के कटाक्षपात से बड़े-बड़े जितेन्द्रिय और निरस्तमोह तपस्वी भी रीझ लते हैं। आप ही लोगों के प्रसाद से स्वर्ग अन्य लोकों से प्रशंसनीय समझा वा है। अतः जाकर उसकी तपस्याओं में विघ्न करो। उससे किसी प्रकार के ाप की आशङ्का न करना। क्योंकि वह विजय के लिए तप कर रहा है मोक्ष के न ् नहीं।

छो तब देवसभा में खूब प्रशंसा करके इन्द्रद्वारा विसर्जित, स्तनों के भार से व ती हुई पर्वतोत्पन्न स्थल कमलिनी की सी शोभावाली, प्रसन्न होकर सभा में ों इन्द्र को भी मोहित करती हुई सी अप्सराएँ, उसे प्रणाम कर अर्जुन की तपस्या थ विघ्न करने को चल दी।

फू उपर्युक्त कथा-संक्षेपों को उद्धृत कर अब मैं अपनी लेखनी का श्रमापनोदन ना चाहती हूँ। इसके अगले प्रकाशन में पुनः अभिनव सिद्धान्तों और युक्तियों समावेश अवश्य करना चाहूँगी।

मैं अपने श्रम की तभी कृतार्थता समझूंगी जब कि सुरभारती समुपासक मेरे हु कार्य से लाभान्वित हो और आगामी सन्ततियों को काव्य रसों से आप्यायित कोई ते रहेंगे।

बह मेरा विश्वास है इस कार्य में हुई त्रुटियों को श्रद्धास्पद गुरुजन कन्या समझकर तीश्य क्षमा करेंगे। मैं उनसे यह भी आशा करती हूँ कि वे समय-समय पर मेरा र्ग निर्देश भी निश्चित करेगें।

।

अन्त में मैं गुरुजन एवं मातृ पितृ चरणों में अपनी प्रणामाञ्जलि समर्पित विराम करती हूँ ।

विद्वज्जनकृपाकाङ्क्षिणी
डॉ० कु० रामेश्वरीकुमारी रासेरु
अध्यापिका
प्राचीनराजशास्त्र एवं अर्थशास्त्र वि
सम्पूर्णानन्द संस्कृत विश्वविद्यालय
वाराणसी

मकरसंक्रान्ति २१४२
१४ जनवरी १९८५
वाराणसी

## श्लोकानुक्रमणिका–( ३–६ सर्गाः )

श्रीः

# किरातार्जुनीयमहाकाव्यम्

## अथ तृतीयः सर्गः

ततः शरच्चन्द्रकराभिरामैरुत्सर्पिभिः प्रांशुमिवांशुजालैः ।
बिभ्राणमानीलरुचं पिशङ्गीर्जटास्तडित्वन्तमिवाम्बुवाहम् ॥ १ ॥

श्रीगणेशाय नमः

### राजविबोधिनी-संस्कृत-व्याख्या

अन्वयः—अतः शरच्चन्द्रकराभिरामैः, उत्सर्पिभिः अंशुजालैः प्रांशुम् इव, आनीलरुचम्, पिशङ्गीः, जटाः बिभ्राणं ( तं ) तडित्वन्तम्, अम्बुवाहम् इव स्थितं युधिष्ठिरो मुनिं आवभषे ) इति चतुर्थश्लोकेन सम्बन्धः ॥ १ ॥

व्याख्या--ततः = उपवेशानन्तरम्, शरच्चन्द्रकराभिरामैः = तात्कालि किरणवन्मनोहरैः, उत्सर्पिभिः, उपरि प्रसरणशीलैरिति यावत् । अंशुजालैः = किरणकदम्बैः, प्रांशुम्=उन्नतम्, इव स्थितम्, पुनः आनीलरुचं=कृष्णवर्णम्, पिशङ्गीः=पीतवर्णाः, जटाः=सटा बिभ्राणं=संदधानं, तं व्यासं, तडित्वन्तं= विद्युत्समन्वितम्, अम्बुवाहं = मेघमिति यावत् । वर्त्तमानो युधिष्ठरः, आवभाषे=उवाच ॥ १ ॥

सरलार्थः—उपदेशनानन्तरं युधिष्ठिरः शारदेन्दुकराह्लादकैरूर्ध्वं प्रसारिभिः प्रभापटलैरुन्नतमिव स्थितं तथा स्वयं कृष्णवर्णः सन् पीशितवर्णा जटां धारयन्तं, पीतविद्युतशोभामुद्वहन्तं श्यामघनमिव प्रतीयमानं (मुनिं पप्रच्छ) ।

समासः—शरदः (आश्विनकार्तिकयोः) यश्चन्द्रः, स शरच्चन्द्रः, तस्य ये करास्ते शरच्चन्द्रकरास्त इव अभिरामा यैः तैः शरच्चन्द्रकराभिरामैः । अंशूनां

जालानि, तैरंशुजालैः । आ समन्ताद्भुवेन नीलो रुग् यस्य तमानीलरुचम्, अम्बूनि वहतीति अम्बुवाहः ॥ १ ॥

व्याकरणम् — बिभ्राणम्=भृ+लट्+शानच् । उत्सर्पिभिः=उत्=सृप्+णिनिः।

कोषः—'सुन्दरी रुचिरश्चारुरभिरामो मनोहर' इति कोषः । 'स्युः प्रभारुग्रुचिस्त्विडाभाश्छविद्युतिदीप्तय' इत्यमरः । 'अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहक' इत्यमरः ॥ १ ॥

श्री राधाकृष्णाभ्यां नमः

## राजेश्वरी--हिन्दी--व्याख्या

पदार्थ—ततः=इसके बाद । शरच्चन्द्रकराभिरामैः=शरत्कालके चन्द्रमा की किरणों जैसे रमणीय उत्सर्पिभिः=ऊपर को फैलती हुई । अंशुजालैः=किरणसमूहों से । प्रांशुम् इव=ऊंचे जैसे (लगते हुए) आनीलरुचं=कुछ कुछ नीली आभावाले । (और, पिशङ्गीः=पीली । जटाः=जटाओं को । बिभ्राणं=धारण किये हुए । तडित्वन्तं=बिजली सहित । अम्बुवाहम् इव=मेघको जैसे। (मुनिसे युधिष्ठिर ने कहा) ।

भावार्थ—बैठने के बाद युधिष्ठिरने शरत्कालीन चन्द्रकिरणों की तरह आह्लादक और ऊपर को फैलती हुई रश्मि के समूह से ऊंचे लगते हुए तथा स्वयं कृष्णवर्णकान्ति वाले पीली जटाओं को धारण करने से पीली बिजली से शोभित श्यामवर्ण मेघ जैसे ( मुनिसे कहा ) ।

विशेष—इन चार पद्यों की क्रिया चौथे श्लोक में स्थित "मुनिमाबभाषे" यह पद है और चारों में मुनि के ही विशेषण दिये गये है । यह कलापक कहा जाता है । दो पद्यों का अन्वय एक में होता हो तो युग्म, तीनका एक में हो तो विशेषक, चार का एक में अन्वय हो तो कलापक कहलाता है । इससे अधिक एक में अन्वय होने पर उसे कुलक कहते है । इसमें उपमा और उत्प्रेक्षा अलंकारों की संसृष्टि है । उपजाति छन्द है । उपजाति कोई स्वतन्त्र छन्द नहीं है । प्रायः समानतावाले किन्हीं भी दो छन्दों के पाद एक में मिला दिये जांय तो "उपजाति" कहलाता है । यहाँ इन्द्रवज्रा और उपेन्द्रवज्रा का एक एक पाद मिलकर उपजाति बना है । प्रत्येक पद में पद तगण, जगण, दो गुरु जिसमें हों वह इन्द्रवज्रा छन्द है । यदि इसी में प्रथम मात्रा लघु हो तो उपेन्द्रवज्रा होती है ॥ १ ॥

प्रसादलक्ष्मीं दधतं समग्रां वपुःप्रकर्षेण जनातिगेन।
प्रसह्य चेतःसु समासजन्तमसंस्तुतानामपि भावमार्द्रम् ॥ २ ॥

अन्वयः—समग्रां प्रसादलक्ष्मीं दधत, जनातिगेन वपुःप्रकर्षेण. असंस्तुतानाम्, अपि चेतःसु आर्द्रभावं प्रसह्य समासजन्तम् ( व्यासं युधिष्ठिरम् आवभाषे ) इति चतुर्थश्लोकेन सङ्गतिः ॥ २ ॥

व्याख्या-समग्रां=सम्पूर्णां। प्रसादलक्ष्मीं=सौभाग्यश्रीं दधतं=दधानं जनातिगेन, लोकोत्कृष्टेन वपुःप्रकर्षेण = शरीरोत्कर्षेण, असंस्तुतानाम्=अज्ञातानाम्, अपि जनानामिति शेषः, चेतःसु=मनःसु आर्द्रं=प्रेमरसपूर्णम् भावम्=अभिप्रायम्, प्रसह्य=हठात्, समासजन्तं=संयोजयन्तं, तं व्यासं युधिष्ठिर उवाचेति शेषः। अर्थात् परिचितं जनं दृष्टवा साधारणस्य स्नेहार्दो भाव उत्पद्यते, अपरिचतं विलोक्य यावदालापो न भवति तावन्मिथः सम्पुटितमिव मुखं, कीलितमिव मनः, उदासीने नयने, एवं भवति, परन्तु, इदं सामान्यस्य लक्षणम्। परिचितमपि जनमपरिचितवदौदासीन्यं दर्शयतीति, अधर्मस्य लक्षणम्। तथोदारचरितस्य लक्ष्म, यद् व्यासस्योचितमेवेति किं चित्रम् ?॥ २ ॥

भावार्थः—स्वकीयप्रसन्नयाऽऽकृत्या प्रोज्ज्वलदेहश्रिया चापरिचितजनानामपि हृदयेषु हठात् श्रद्धाभावं जनयन्तं ( मुनिम् आवभाषे )।

समासः—प्रसादस्य लक्ष्मीः प्रसादलक्ष्मीस्तां प्रसादलक्ष्मीम्। वपुषः प्रकर्षः वपुःप्रकर्षस्तेन वपुःप्रकर्षेण। अति गच्छतीति अतिगः, जनेभ्योऽतिगः जनातिगस्तेन जनातिगेन, न संस्तुता असंस्तुतास्तेषामसंस्तुतानाम् ॥ २ ॥

पदार्थ—समग्रां=सम्पूर्ण। प्रसादलक्ष्मी=सौम्यतारूप सम्पत्तिको। दधतं=धारण करते हुए। जनातिगेन=लोकोत्कृष्ट। वपुःप्रकर्षेण=शरीर की तेजस्विता से असंस्तुतानामपि=अपरिचित ( जनों ) के भी। चेतःसु=हृदयोंमें। प्रसह्य=बलात्। आर्द्रं भावं=कोमल अभिप्राय को। समासजन्तं=बैठाते हुए ( मुनि से बोले )।

भाषार्थ—अपनी प्रसन्न आकृति और उज्वल शरीर की कान्ति से अपरिचित व्यक्तियों के हृदय में भी बलात् अपने प्रति सुन्दर ( श्रद्धापूर्ण ) भावना उत्पन्न करते हुए ( मुनिसे युधिष्ठिर ने कहा )।

विशेष—कालुष्य दूर हो जानेसे स्वच्छ हृदय होकर अनुग्राह्य भक्तों के गुणों के अनुसार उनपर अनुग्रह की इच्छा होना ही प्रसाद शब्द का अर्थ है। व्यासजीका जो सम्बन्ध कौरवों के साथ है वही पाण्डवों के साथ भी है किन्तु कौरवों की उद्धतासे खिन्न हुए ये गुणवान् पांडवों पर अनुग्रह करना चाहते है और उसमें अपनी तेजस्विता एवं तपोबल से पूर्ण समर्थ है। इसलिए कहा है समग्र प्रसादलक्ष्मी को धारण किये हुए हैं। जो व्यक्ति उन्हें नहीं पहिचानते कि ये व्यास जी है वे भी उनके प्रताप से प्रभावित हो जाते और अपने मन में श्रद्धापूर्वक सोचने लगते है कि यदि ये मुझपर अनुग्रह कर देते तो मेरा कल्याण हो जाता, यह तात्पर्य है ॥ २ ॥

अनुद्धताकारतया विविक्तां तन्वन्तमन्तःकरणस्य वृत्तिम् ।
माधुर्यविस्रम्भविशेषभाजा कृतोपसम्भाषमिवेक्षितेन ॥ ३ ॥

अन्वयः—अनुद्धताकारतया, अन्तःकरणस्य विविक्तां वृत्तिम् तन्वन्तम् माधुर्यविस्रम्भविशेषभाजा, ईक्षितेन कृतोपसम्भाषम्, इव (स्थितं व्यासं युधिष्ठिर आवभाषे) ॥ ३ ॥

व्याख्या—अनुद्धतया=नम्रचेष्टया, अन्तःकरणस्य=हृदयस्य, विविक्तां सुस्पष्टाम्, अगोपितामित्यर्थः। वा, विविक्ताम्=पवित्रां; निर्मलामित्यर्थः। वृत्तिं=चित्तचेष्टां, तन्वन्तम्=विकासयन्तम्, माधुर्यविस्रम्भविशेषभाजा=सौम्यत्व विश्वासयुतेन, ईक्षितेन=अवलोकनेन, कृतोपसम्भाषं=कृतालापम्, इव स्थितं व्यासं युधिष्ठिर उवाचेति शेषः ॥ ३ ॥

भावार्थः—सौम्येनाकारेणैव हृदयस्य पवित्रं भावं प्रकटयन्तं, स्निग्धेन विश्वासपूर्णेन चावलोकनेन पूर्वमेव जनैः सह कृतालापमिव (मुनिमावभाषे)।

समासः—न उद्धतोऽनुद्धत आकार इत्यनुद्धताकारस्तस्य भावस्तत्ता इत्युनुद्धताकारता तयाऽनुधताकारतया, मधुरस्य भावो माधुर्यम्, माधुर्यं, च विस्रम्भश्च माधुर्यविस्रम्भौ तयोर्यो विशेषः स माधुर्यविस्रम्भविशेषस्तं भजतीति माधुर्यविस्रम्भविशेषभाक् तेन माधुर्यविस्रम्भविशेषभाजा। कृता उपसम्भाषा येन सः तं कृतोपसम्भाषम् ॥ ३ ॥

व्याकरणम्—तन्वन्तम्=तनु+शतृ ॥ ३ ॥

कोषः—'विविक्तौ पूतविजनौ' इत्यमरः 'आजीवो जीविका वार्ता वृत्ति

वर्त्तनजीवने' इत्यमरः। "समो विमो विस्रम्भविश्वासौ" इत्यमरः 'दर्शनालोकनेक्षितम्' इत्यमरः।

पदार्थ—अनुद्धताकारतया=शान्त आकृति होने से, अन्तः करणस्य=चित्तकी। विविक्तां शुद्ध। वृत्ति=व्यवहार को। तन्वतं=प्रकट करते हुए। माधुर्यविस्रम्भविशेषभाजा=अत्यन्त कोमलता (स्नेह) और विश्वास से भरे हुए। ईक्षणेन=दर्शन से। कृतोपसंभाषमिव=पहिले जिनसे वार्ता हो चुकी है ऐसे, जैसे—

भाषार्थ—जिनकी शान्त आकृति से ही हृदय की स्वच्छता के भाव प्रकट हो रहे है और स्नेह तथा विश्वास से भरी दृष्टि से जिसकी ओर देखते है उसे पूर्वपरिचित से लगते है, ऐसे (मुनि से युधिष्ठिर ने कहा)।

विशेष—मनुष्य के हृदय में जैसे भाव उत्पन्न होते है वे ही उसकी आकृति से प्रगट होते हैं। व्यास जी की आकृति स्वभावतः शान्त है इसलिये निश्चय है कि उनका हृदय भी स्वच्छ है। फिर जिस पर वे स्नेह; और विश्वासपूर्ण दृष्टि से देखते है उसे ऐसा प्रतीत होता है कि जैसे इनसे हम पहिले कभी बातचीत कर चुके हैं। जिस व्यक्ति से एक बार संभाषण हो चुका हो उसके सामने दुवारा बोलने में कोई झिझक नहीं होती। फिर जो शुद्ध हृदय का व्यक्ति है उसके सामने बोलने में तो कोई बाधा नहीं। कहने का अभिप्राय यह है कि व्यास जी के आशय को समझे विना युधिष्ठिर का बोलना कोई उद्धता नहीं थी प्रत्युत व्यासजी ने अपनी शान्त आकृति और स्नेह पूर्ण दृष्टि से स्वयं ही युधिष्ठिर को बोलने का अवसर दिया॥ ४॥

धर्मात्मजो धर्मनिबन्धिनीनां प्रसूतिमेनःप्रणुदां श्रुतीनाम्।
हेतुं तदभ्यागमने परीप्सुः सुखोपविष्टं मुनिमावभाषे॥ ४॥

अन्वयः तदभ्यागमने हेतुं पुरीप्सु., धर्मात्मजः, धर्मनिबन्धिनीनाम् एनःप्रणुदां, श्रुतीनाम् प्रसूतिं, सुखोपविष्टं मुनिम्, आवभाषे॥ ४॥

व्याख्या—तदभ्यागमने=व्यासागमने, हेतुं=कारण, किमर्थं निरीहोऽति भावस्यकिञ्चित्करस्य ममाश्रये यात्रा कृतेतिरूपमित्यर्थः। परीप्सुः=जिज्ञासुः, धर्मात्मजः=धर्मपुत्रः युधिष्ठिरः (कर्त्ता), धर्मनिबन्धिनीनाम् धर्मविषयाणाम् एनः प्रणुदाम्=पापोच्छेदिकानां, श्रुतीनां=वेदानाम्, प्रसूतिं=प्रसवकर्त्तारं, वेदा-

न्त्रसूत्रादेर्निर्मातृत्वात् सुखोपविष्टं = सुखासीनम् मुनिं=व्यासम्, आवभाषे= उवाचेति ॥

भावार्थः—अग्निहोत्रादिधर्मप्रतिपादकानामधर्मानिर्धारकाणां च वेदानां रचयितार मुखेनोपबिष्टं महामुनिव्यासं तदागमनकारणं जिज्ञासुर्युधिष्ठिर उवाच ।

समासः—धर्मस्यात्मजो धर्मात्मजः । धर्मान्निबध्नन्तीति धर्मनिबन्धिन्यः, तासां धर्मनिबन्धिवीनाम् । एनांसि प्रणुदन्ति यास्ता एनः प्रणुदस्तासामेनः प्रणुदाम् । तस्य अभ्यागमनं तस्मिन् तदभ्यागमने । सुखेन उपविष्टः सुखोपविष्टस्तं सुखोपविष्टम् ॥

व्याक०—परीप्सुः=परि+आप+सन्+उः । आवभाषे=आ+भाष+लिट् ।

पदार्थ—धर्मनिबन्धिनीनां=धर्मका प्रतिपादन करने वाली (और) एनःप्रणुदां=पापों को हटाने वाली । श्रुतीनां—श्रुतियों के वेदान्त आदि के । प्रसूति=रचयिता (तथा) सुखोपविष्टं=सुखपूर्वक बैठे हुए मुनिं=व्यासजी को । तदभ्यागमने=उनके वहाँआनेमें । हेतुं=कारण को । परीप्सुः=जानना चाहते हुए । धर्मात्मजः=युधिष्ठिरने । आवभाषे=कहा ।

भाषार्थ—अग्निहोत्रादिधार्मिककृत्यों की प्रतिपादक और पापों का निवारण करनेवाली श्रुतियों के रचयिता और सुख से बैंठे हुए मुनि व्यासके उनके आगमन का कारण जानने की इच्छा से धर्मपुत्र युधिष्ठिर ने कहा ।

विशेष—'श्रूयते इति श्रुतिः' इस व्युत्पत्ति के अनुसार श्रुतिशब्द वेद के अर्थ में योगरूढ़ है । वेद इस कल्प में जैसा सुना जाता है वैसा ही इससे पूर्व कल्पों में भी सुना ही गया था । अर्थात् उसे ( वेद को ) किसी ने बनाया नहीं । नित्य होने से प्रत्येक सृष्टि कल्प में वह केवल श्रुति—श्रवण का विषय होने से ही श्रुति कहलाता है । श्रीव्यासजी ने उस एक ही श्रुति का ऋग् यजुः साम अथर्व रूप में विभाजन किया । इस लिये उनका नाम वेदव्यास (वेदों का विस्तार करने वाले) हुआ और यही विभक्त करना उपचारात् उनकी रचना अर्थ में प्रयुक्त किया गया है । वेदों की नित्यता होने से रचना का होना सम्भव नहीं है ॥ ५ ॥

अनाप्तपुण्योपचयैर्दुरापा फलस्य निर्धूतरजाः सवित्री ।
तुल्या भवद्दर्शनसम्पदेषा वृष्टेर्दिवो वीतबलाहकायाः ॥ ५ ॥

अन्वयः—अनाप्तपुण्योपचयैः, दुरापा, फलस्य सवित्री, निर्धूतरजाः, एषा भवद्दर्शनसम्पत्, वीतबलाहकायाः, दिवः, वृष्टेः, तुल्या ॥ ५ ॥

व्याख्या —अनाप्तपुण्योपचयैः—अकृतसुकृतनिचयैः । जनैरिति शेषः । दुरापा = अलभ्या । फलस्य = मनोरथस्य, सावित्री=जननी, अभीष्टकल्याण-कारिणी । निर्धूतरजाः = निर्गतरजोगुणा, सात्त्विकीति भाव । एषा=इयम् आधुनिकीति भावः । भवद्दर्शनसम्पत् = त्वदवलोकनसम्पत्तिः, वृष्टिपक्षे अनाप्त-पुण्योपचयैः = अकृतधर्मैः, कृषकैः, दुरापा = दुष्प्राप्या, फलस्य = सस्यस्य, सावित्री = उत्पादयित्री । निर्धूतरजाः = निहृतधूलिः वीतबलाहकायाः = विगतमेघायाः, दिवः = आकासस्य, वृष्टेः = वर्षायाः तुल्या=समा अर्थाद् वृष्टि-र्भवतु न वा, किन्तु नभसि वारिदे आयाते 'वृष्टिसम्भवो लोकैरुच्यते परमाकाशे मेघं दृष्ट्वा सर्वथा वृष्टेरसम्भवो ज्ञायते लोकैः तदानीं च जलवर्षणं भवति तावतकिल तथा, तथैव हतभाग्येऽपि मयि परमभाग्यवल्लोक इव स्वकृद्वृष्टिर्वि-हिता भवतेति ॥ ५ ॥

भावार्थः—निरभ्रादाकाशात सहसा जलवर्षणेन यथा लोकानां सस्य-सम्पल्लाभः सूच्यते तथैवाकृतपुण्यैर्दुर्लभया फलदात्र्या रजोरहितया च भव-द्दर्शनसंपदा मय्यपि सौभाग्यफललाभः अनुमीयते ।

समासः—पुण्यानामुपचयाः पुण्योपचयाः न आप्ताः पुण्योपचया यैस्तैर-नाप्तपुण्योपचयैः । दुःखेनावाप्यत इति दुरापा, निर्धूतं रजो यया सा निर्धूत-रजाः । बीता गता बलाहका यस्यां सा वीतबलाहका, तस्य बीतबलाह-कायाः ॥ ५ ॥

व्याकरणम्—सवित्री = सवितृ+ङीप् ॥ ५ ॥

कोषः—'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृष' इत्यमरः । 'वृष्टिर्वर्षम्' इत्यमरः । 'द्योदिवौ द्वे स्त्रियामभ्रं व्योमपुष्करमम्बरम्' इत्यमरः । अभ्रमेघो-वारिवाह' स्तनयित्नुर्बलाहक' इत्यमरः ॥ ५ ॥

पदार्थ—अनाप्तपुण्योपचयैः = नहीं किया है पुण्यों का संचय जिन्होंने, ( ऐसे व्यक्तियोंको ) दुरापा = कठिनता प्राप्त होनेवाली । फलस्य=( कल्याण-

रूप ) फलकी । सावित्री = उत्पन्न करनेवाली । निर्धूतरजाः = रजोगुण जिसे नष्ट हो गया है ऐसी । एषा = यह । भवद्दर्शनसंपत् = आपके दर्शन रूप संपत्ति । वीतबलाहकाथाः = बादल जिसमें समाप्त हो गये है ऐसे । दिवः = आकाश की । वृष्टेः = वर्षाके । तुल्या = समान है ।

भाषार्थ—जिन्होंने पुण्य न किये हों उनके लिए दुर्लभ; विविध फलों देनेवाली, रागादि रहित, आपको दर्शनरूप संपत्ति मेरे लिए बिना बादल वर्षाके तुल्य है ।

विशेष—बादलोंसे पानी बरसना स्वाभाविक है किन्तु कभी-कभी ए भी बादल आकाशमें नहीं दीखता किन्तु पानीकी बूंदें पड़ती हैं, इस वर्षा पुराणोंमें आकाशगंगाका जल मानकर पवित्र कहा गया है तथा इन बूंदों शरीरमें पड़नेसे रोग और पापका नाश होना माना जाता है ।। ५ ।।

अद्य क्रियाः कामदुघाः क्रतूनां सत्याशिषः सम्प्रति भूमिदेवाः ।
आ संसृतेरस्मि जगत्सु जातस्त्वय्यागते यद्बहुमानपात्रम् ।। ६

अन्वयः—अद्य क्रतूनां क्रियाः कामदुघा सम्प्रति भूमिदेवाः सत्याशि (जाताः) यत् त्वयि, आगते, आ संसृतेः जगत्सु बहुमानपात्रं जातः अस्मि ।।

व्याख्या—अद्य = अस्मिद् दिने, क्रतूनां = यज्ञानां, क्रियाः = कर्त्तव्या कामदुघा = इष्टपूर्त्तिप्रदाः, जाता इति शेषः । इतः कालात्पूर्वं यज्ञानां फलं वितरीत वनवासादेव जातम्, इति मम सानुरोधोऽनुभव आसीदधुना भवद्दर्श साधारणाऽपगता, अवश्यं कदाऽपि पुण्यफलं शुभं भवेत्येवेति निश्चय उत्प मम मनसीति भावः । तथा च सम्प्रति = वर्तमानसमये, इदानीमित्यर्थं भूमिदेवाः = ब्राह्मणाः, सत्याशिषः = अमिथ्याशुभवचनाः, जा इति । यद् = यस्मात्, त्वयि = भवति, व्यासे इत्यर्थः । आगते = समाय ममाश्रय प्रत्युपस्थिते सतीत्यर्थः असंसृतेः = सृष्टचादितः जगत्सु = लोकेषु ब मानपात्रम् = परमसत्कारभाजनं, जातः = जनितः अस्मि, अहमति शेषः । य द्रुभिः पुण्यैरपि दुर्लभं तन्मम समजनिः अतोऽद्य मत्तोऽधिकभाग्यवान्न कोऽप इति भावः ।। ६ ।।

भावार्थः—अद्य मम यज्ञादीन्यनुष्ठानानि मनोरथपूरकाणि जाता ब्राह्मणानां चाशिषः सत्या संजाता यद् भवानत्रागतः अतोऽहमाप्रलयाद् ज बहुसम्मानभाजनोऽभवम् ।

समासः—कामान् दुहन्ति यास्ताः कामदुघाः। सत्या आशिषो येषां ते सत्याशिषः। भूमौ ये देवास्ते भूमिदेवाः। बहुः मानः पात्रमिति बाहुमानपात्रम् ॥ ६ ॥

व्याकरणम्—अस्मि=अस्+लट्+जातः=जन्+क्तः ॥ ६ ॥

कोषः—'यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मुखः क्रतुः' इत्यमरः। एतर्हि सम्प्रतीदानीमधुना साम्प्रतम्' इत्यमरः। 'द्विजात्यग्रजन्म-भूदेव-वाडवाः। विप्रश्च ब्राह्मणोऽसौ' इत्यमरः।

पदार्थ – अद्य=आज। क्रतूनां क्रियाः=( मेरे किए हुए ) यज्ञोंकी क्रियाएँ। कामदुघाः=इच्छानुरूप फ़लदेनेवाली ( हो गई है )। संप्रति=इस समय। भूमिदेवाः=ब्राह्मण लोग। ( मेरे लिए ) सत्याशिषः=सच्चे आशीर्वादों वाले हुए हैं। यत्=जो कि त्वयि आगते=आपके आनेपर। अस्मि=मैं। आसमृतेः=प्रलयपर्यन्त। जगत्सु=संसारमें। बहुमानपात्रं जातः=अत्यन्त सम्मानका पात्र हो गया हूं।

भाषार्थ—आज मेरी यज्ञादि क्रियाएँ सफल हो गई, ब्राह्मणोंका आशीर्वाद सत्य हो गया, आपके यहाँ आनेपर मैं प्रलय तकके लिए जगत्में लोगोंके लिए सम्मानका पात्र हो गया हूं।

विशेष—कामनाओंकी पूर्तिके लिए ही यज्ञादि क्रियाएँ की जाती हैं और ब्राह्मण भूमिके देवता कहे जाते हैं अतः उनके आशीर्वादसे पापोंका नाश होकर पुण्योंका उदय होता है। युधिष्ठिरने जो यज्ञादि किए थे और उनमें ब्राह्मणोंने उन्हें जो आशीर्वाद दिया था, व्यासजी वैसे महापुरुषका आगमन उसीके फ़लस्वरूप हुआ। क्योंकि कर्त्तुमकर्त्तुमन्यथाकर्त्तुं समर्थ ऐसे महापुरुष की कृपा से ऐहिक और आमुष्मिक सभी सिद्धियाँ आसानी से प्राप्त होती हैं। इसीलिए युधिष्ठिर अपनेको धन्य और संसार में अत्यन्त आदरकापात्र समझते हैं। भारविके ये पद्य भारतीय शिष्टाचारके अनुपम उदाहरण हैं ॥ ६ ॥

श्रियं विकर्षत्यपहन्त्यघानि श्रेयः परिस्नौति तनोति कीर्तिम्।
संदर्शनं लोकगुरोरमोघं तावात्मयोनोरिव किं न धत्ते ॥७॥

अन्वयः—लोकगुरोः तव, अमोघं सन्दर्शनम्, आत्मयोनेः (दर्शनम्) इव,

श्रियं, विकर्षति, अघानि, अपहन्ति, श्रेयः परिस्रौति, कीर्तितनोति, किं न धत्ते ॥ ७ ॥

व्याख्या—लोकगुरोः = संसारोपदेशकस्य, तव = व्यासस्येत्यर्थः। अमोघम्=अव्यर्थं, सफलमित्यर्थः दर्शनम् = विलोकनं। आत्मयोनेः= ब्रह्मणः, दर्शनमिव, श्रियं=ऐश्वर्यं, विकर्षति=आकर्षति, गतामपि राज्यलक्ष्मीं-पुनरावर्त्तयतीति भावः। अघानि=पापानि, अपहन्ति = विनाशयन्ति, श्रेयः= कल्याण, परिस्रौति = स्रवति, कीर्तियशः, विख्याति, तनोति=विस्तारयति, एवं किं न धत्ते, सर्वं ददातीत्यर्थः ॥ ७ ॥

भावार्थः—स्वयम्भुव इव जगद्वन्द्यस्य भवतः शुभसाक्षात्कारः लोकस्य कृते सम्पदमाकर्षति व्यसनानि नाशयति पुरुषार्थं स्रवति यशश्च विस्तारयति किमपि नास्ति शुभं यन्न करोति। सर्वमेव भवद्दर्शनेन साध्यते।

समासः—लोकस्य भुवनस्य गुरुर्लोकगुरुस्तस्य लोकगुरोः। न मोघमित्य-मोघम्, आत्मा एव योनिरुत्पत्तिस्थानं यस्य स आत्मयोनिस्तस्यात्मयोनेः ॥७॥

व्याकरणम्—विकर्षति=वि+कृष्+लट्। अपहन्ति=अप+हन्+लट्। तनोति=तनु+लट्। परिस्रौति=परि+स्रु+लट्। धत्ते=धा+लट् ॥ ७ ॥

कोषः—'लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया' इत्यमरः। 'कलुषं वृजिनैनोऽघमंहो दुरितदुष्कृतम्' इत्यमरः। 'यशः कीर्त्तिः समज्ञा च' इत्यमरः। लोकस्तु भुवने जने' इति कोषः। 'ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामह' इत्यमरः ॥ ७ ॥

पदार्थ—आत्मयोनेः इव=ब्रह्माकी तरह। लोकगुरोः=जगत्के पूज्य। तव=आपका। अमोघं=सफल। संदर्शनं=शुभदर्शनं=शुभदर्शन (लोगोंके लिए) श्रियं=लक्ष्मीको। विकर्षति=खींच लाता है। अघानि=पापों को। अपहन्ति= नष्ट कर देता है। श्रेयः=कल्याणोंको। परिस्नौति=उत्पन्न करता है। कीर्ति= यशके। तनोति=बढ़ाता है। किं न धत्ते=क्या नहीं करता ? (अर्थात् सब कुछ करता है)।

भाषार्थ—जगद्गुरु ब्रह्मा की भांति आपका अमोघदर्शन लोगों के लिये सम्पत्तिको जैसे खींच लाता है (अर्थात् आपका साक्षात्कार करने वालेके पास संपत्ति आती है) दुखों का नाश करता है। पुरुषार्थ उत्पन्न करता है

और यश को फैलाता है। कौन सा ऐसा शुभ कार्य है जो आपके दर्शनसे सिद्ध नहीं होता।

विशेष—व्यासजीकी उपमा स्वयम्भूब्रह्मासे करने से यह अभिप्राय व्यक्त होता है कि जैसे ब्रह्माजी सारे जगत् को उत्पन्न करते हैं किन्तु उन्हें कोई उत्पन्न नहीं करता वे स्वयम्भू है. इसीप्रकार आपके दर्शनसे लोकका विविध कल्याण होता है किन्तु इस महत्ताके लिये आपको किसी की अपेक्षा नहीं रहती। इसीलिये आप लोकगुरु है। इससे व्यासजीकी अत्यन्त महनीयता प्रकट की गई है ॥ ७ ॥

श्च्योतन्मयूखेऽपि हिमद्यूतौ मे न निर्वृतं निर्वृतिमेति चक्षुः।
समुज्झितज्ञातिवियोगखेदं त्वत्सन्निधावुच्छ्वसतीव चेतः ॥८॥

अन्वय—श्च्योतन्मयूखे, हिमद्युतौ, अपि न निवृतं मे चक्षुः, त्वत्सन्निधौ निवृत्तिम्. एति समुज्झितज्ञातिवियोगखेदम् (मे) चेतः, उच्छ्वसिति, इव ॥८॥

व्याख्या—श्च्योतन्मयूखे=पीयूषपूरस्राविकिरणो, हिमद्युतौ=चन्द्रे, अपि, न निवृतम् अशान्तम्, मे=मम, युधिष्ठिरस्येत्यर्थः। चक्षुः=नेत्रं त्वत्सन्निधौ=भवत्समीपे, निर्वृत्तिं=शान्तिम्, एति=गच्छति, अमृतवर्षिकिरणस्यापि चन्द्रस्य दर्शनेन न तथा नेत्रं शीतलम् जातं, यथा भवत्सौम्यशरीरदर्शनेनेति भावः। बाह्यं दुखं बाह्योपचारेण दूरीभवितुमर्हति न हि आन्तरिकं तेन, किन्तु आन्तरिकमान्तरिकोपचारेणैव, यथाऽन्तर्दाहः शीतलजल-पानादिना, नहि बहिश्चन्दनलेपनेन. तद्वत् ममान्तःकरणजनिता व्यथा तु हृदयाह्लादकेन त्वद्दर्शनेनैव दूरीभूता, न हि नयनाह्लादकचन्द्रकिरणेनेति, तद्युक्तमेवेति, तद्युक्तमेति, समुज्झितज्ञातिवियोगखेद=त्यक्तबान्धवविच्छेद-दुःखम्, प्रसन्नमित्यर्थः। मम चेतः=चित्तं, त्वत्सन्निधौ, उच्छ्वसिति= ऊर्ध्वोच्छ्वासं गृह्णाति। अर्थाद् रे दुःख! अधुना तव कः प्रभावः! जितमस्म-दुदितभाग्येन, नातः परमागन्तुं शक्नोषि अस्मदन्तिके, मम भाग्योदयकरोऽयं महात्मा, एवं पुनरागमिष्यति तदा पुनःपुनस्त्वं ताडितो भविष्यसि। अतोऽयं शिवस्ते मार्गः यन्न कदापि निश्चितप्राणहरे मयि समागन्तव्यम् ॥ ८ ॥

भावार्थः—स्वकीयांशुभिरमृतं वर्षत्यपि शीतरश्मौ यन्मे चक्षुस्तृप्तिर्न भवत्, तदेवेदानीं भवत्समीपे तृप्तिमेति। चित्तं च मे बन्धूनां वियोगजन्यं खेदं परित्यज्य पुनर्जीवितमिव संजातम् ॥

समास:—श्च्योतन्तो मयूखा यस्य स श्च्योतन्मयूखस्तस्मिन् श्च्योतन्मयूखस्तस्मिन् श्च्योतन्मयूखे। हिमा हिमजननी द्युतिर्तस्य स हिमद्युतिस्तस्मिन् हिमद्युतौ। ज्ञातीनां वियोग: ज्ञातिवियोगखेद:, समुज्झितो ज्ञातिवियोगखेदो येन तत् समुज्झितज्ञातिवियोगखेदम् ॥ ८ ॥

व्याकरम्—निर्वृत्तम्=निर+भृ+क्तः। एति=इण+लट्। उच्छ्वसति=उद्=श्वस्+लट् ॥ ८ ॥

कोष:—'किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः' इत्यमरः। 'हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धव' इत्यमरः ॥ 'लोचनं नयनं नेत्रमिक्षणं चक्षुरक्षिणी' इत्यमरः। 'सगोत्रबान्धवा' इत्यमरः ॥ ८ ॥

पदार्थ—श्च्योत्न्मयूखे=(अमृत) बरसाती किरणोंवाले। हिमद्युतौ अपि=चन्द्रमा के विषय में भी। न निवृतं=न तृप्त हुआ। मे चक्षुः=मेरा नेत्र। त्वत्सन्निधौ=आप के सन्निकट। निर्वृतिमेति=तृप्ति को प्राप्त हो रहा है। (और मेरा) चेतः=चित्त। समुज्झितज्ञातिवियोगखेदं-छोड़ दिया है बान्धवों के विरह का दुःख जिसने, ऐसा होकर। उच्छ्वसिति=इव=(आनन्द से) हिलोरें ले रहा है।

भाषार्थ—अपनी किरणों से अमृत बरसाते हुए चन्द्रमा से भी जो मेरी आँखे आनन्द को प्राप्त न कर सकीं, वे ही आज आपके सान्निध्य से तृप्त हो गईं और मेरा चित्त भी अपने बान्धवादि के वियोगजन्य दुःख को छोड़कर पुनर्जीवित हो उठा है ॥ ८ ॥

निरास्पदं प्रश्नकुतूहलित्वमस्मास्वधीनं किमु निःस्पृहाणाम्।
तथापि कल्याणकरीं गिरं ते मां श्रोतुमिच्छा मुखरीकरोति ॥ ९ ॥

अन्वय:—प्रश्नकुतूहलित्वं, निरास्पदम् अस्मासु निःस्पृहाणाम्, अधीं किमु तथाऽपि कल्याणकरीं ते गिरं श्रोतुम्, इच्छा, मां मुखरीकरोति ॥९॥

व्याख्या—प्रश्नकुतूहलित्वम्=भवदागमनप्रयोजनपृच्छौत्सुक्यम्। निरास्पदम्=निराधारम्, अयुक्तमित्यर्थः। कुत इत्यत आह—अस्मासु=पाण्डवेषु विषयिष्वित्यर्थः, निःस्पृहाणां=निरीहाणाम्। अधीनम्=आयत्त किमु न किमप्यसभ्यं लभ्यं विद्यते भावादृशां वीतस्पृहाणामत आ

मनजिज्ञासा व्यर्थैवेति भावः । तथाऽपि = आगमनहेतुपृच्छौत्सुक्योऽनाश्रयेऽपि;, ते=तव, कल्याणकरीं=मङ्गलकरीं, गिरं=वाणीं, श्रोतुम्=आकर्णयितुम् इच्छा = अभिलाषा, मां=युधिष्ठिरम्, मुखरीकरोति = वाचालयति, व्याहारयतीत्यर्थः;. निःस्पृहस्य ते समागमो न स्वार्थसाधनाय, किन्तु मदर्थसम्पादनायैवजिमङ्गल-विधायकवचनश्रवणाभिलाषा मां प्रेरयति ॥ ९ ॥

भावार्थः— भवदागमनप्रश्नौत्कट्यं तु निर्मूलमेव यतोहि भवादृशविर-क्तानामस्मदायत्तं किं प्रयोजनं भविष्यति । तथापि श्रेयस्करीं भवद्गिरं श्रोतु-मिच्छा मां वक्तुं व्यवसाययति ।

समासः—कुतूहलमस्यास्तीति कुतूहली कुतूहलिनो भावः कुतुहलित्वम् प्रश्नस्य कुतूहलित्वम्, प्रश्नकुतूहलित्वम्, निर्गता स्पृहा येषां ते निःस्पृहास्तेषां निःस्पृहाणाम् ॥ ९ ॥

व्याकरणम्—मुखरीकरोति = मुखर+च्वि + कृ + लट् । श्रोतुम् = श्रु= तुमुन् ॥ ९ ॥

कोषः—'कौतूहलं कौतुकं च कुतुकं च कुतुहलम्' इत्यमरः । 'श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्' इत्यमरः । 'ब्राह्मी तु भारती भाषा गीर्वा-ग्वाणी सरस्वती' इत्यमरः । 'इच्छाऽऽकाङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथ' इत्यमरः । 'अधीनो निघ्न आयत्त' इत्यमरः ॥ ९ ॥

पदार्थ—श्च्योन्मयूखे= ( अमृत ) बरसाती किरणों वाले । हिमद्युतौ अपि=चन्द्रमा के विषय में भी । न निर्वृतं=न तृप्त हुआ । मे चक्षुः = मेरा नेत्र । त्वत्सन्निधौ=आप के सन्निकट । निर्वृतिमेति=तृप्ति को प्राप्त हो रहा है । ( और मेरा ) चेतः=चित्त । समुज्झितज्ञातिवियोगखेदं=छोड़ दिया है गान्धर्वों के विरह का दुःख जिसने, ऐसा होकर । उच्छ्वसिति = इव = ( आनन्द से ) हिलोरें ले रहा है ।

भाषार्थ—आप किस प्रयोजन से आये हैं ? यह प्रश्न तो निर्मूल है ही क्योंकि आप जैसे निस्वार्थी व्यक्तियों का हमसे क्या प्रयोजन सिद्ध हो सकता है । तो भी आपकी कल्याणकरी वाणी को सुनने की इच्छा मुझे बोलने को बाध्य कर रही है ।

विशेष—जो संसार से विरक्त है उसका किसी से क्या प्रयोजन हो सकता है। व्यासजी भी ऐसे निस्वार्थीमुनि थे। उनके आगमन से उनका अपना तो कोई काम सिद्ध हो नहीं सकता। अतः वे जो कुछ भी कहेंगे उससे दूसरों का ही कल्याण होगा। इसलिये वे कुछ कहें और उससे हमारा कल्याण हो यह इच्छा युधिष्ठिर को बोलने के लिये प्रेरित कर रही हैं॥ ९॥

इत्युक्तवानुक्तिविशेषरम्यं मनः समाधाय जयोपपत्तौ।
उदारचेता गिरमित्युदारां द्वैपायनेनाभिदधे नरेन्द्रः॥ १०॥

अन्वयः—इति, उक्तिविशेषरम्यम्, उक्तवान्, उदारचेता, नरेन्द्रः द्वैपायनेन, जयोपपत्तौ, मनः, समाधाय, इति, उदारां, गिरम्, अभिदधे॥ १०॥

व्याख्या—इति = पूर्वोक्तनवश्लोकार्थरूपम्, उक्तिविशेषरम्यं = वचनवैचित्र्यसौन्दर्यं, चमत्कृतिकरवाक्यरचनामित्यर्थः। उक्तवान् = अभिहितवान्, उदारचेताः=विशालहृदयः नरेन्द्रः=नृपः युधिष्ठिर इत्यर्थः। द्वैपायनेन=व्यासेन, जयोपपत्तौ=जयसंयुक्तौ, शत्रुपराजयसाधकोपाय इत्यर्थः। मनः=चेतः, समाधाय=संयोज्य, इति=वक्ष्यमाणाम्, उदाराम्=अर्थसंयुतां, गिरं=वाणीम् अभिदधे=उक्तः॥ १०॥

भावार्थः—एवं विचित्रोक्तिरमणीयं ब्रुवन्तं महामनसं राजानं मनसि तदीयविजयं चिन्तयन् द्वैपायनो जगाद।

समासः—उक्तिनां विशेष उक्तिविशेषस्तेनोक्तिविशेषेण रम्यमित्युक्तिविशेषरम्यम्। जयस्योपपत्तिर्जयोपपत्तिस्तस्यां जयोपपत्तौ। उदारं चेतो यस्य स उदारचेताः। द्विर्गता आपो यस्मात्तद्द्वीपं, द्वीपमयनं यस्य स द्वीपायनः, स एव द्वैपायनस्तेन द्वैपायनेन॥ १०॥

व्याकरणम्—उक्तवान्=वच्+क्तवत्। समाधाय=सम्+आ+धा=क्त्वा ल्यप्। अभिदधे+अभि+लिट्॥ १०॥

कोषः—'व्याहार उक्तिर्लपितं भाषितं वचनं वच' इत्यमरः। 'ब्राह्मी भारती भाषा गीर्वाग्वाणी सरस्वती' इत्यमरः॥ १०॥

पदार्थ—इति=इस प्रकार। उक्तिविशेषरम्यं = विशिष्ट उक्तियों से रम

णीय । उक्तवान्=बोलते हुए । उदारचेताः=महामना । नरेन्द्रः=युधिष्ठिर से । द्वैपायनेन=व्यासजी के द्वारा । जयोपपत्तौ=विजय प्राप्ति में । मनः समाधाय=मन को स्थिर करके । इति=इस प्रकार की । उदाराम्=अर्थपूर्ण । गिरं=वाणी । अभिदधे=कही गई ।

भाषार्थ—इस प्रकार विचित्र तर्कभावों से मनोहर वचन बोलते हुए युधिष्ठिर से, मन में उनकी विजय की भावना करते हुए व्यासजी ने कहा— ॥ १० ॥

चिचीषतां जन्मवतालमध्वीं यशोऽवतंसामुभयत्र भूतिम् ।
अभ्यर्हिता बन्धुषु तुल्यरूपा वृत्तिर्विशेषेण तपोधनानाम् ॥ ११ ॥

अन्वयः—अलघ्वीं, यशोऽवतंसाम्, उभयत्र, भूतिं, चिचीषतां, जन्मवतां, बन्धुषु, तुल्यरूपा, वृत्तिः, अभ्यर्हिता, तपोधनानां, विशेषेण, तुल्यरूपा ॥११॥

व्याख्या—अलघ्वीं=महीयसीं, यशोऽवतंसां=कीर्तिवताम् उभयत्र=इह अमुत्र च, भूतिम्=ऐश्वर्यं, चिचीषतां=सङ्ग्रहीतुमभिलषतां, जन्मवतां देहीनाम्, बन्धुषु=स्वजनेषु, तुल्यरूपा=समरूपा, अभेदरूपेति भावः । वृत्तिः=व्यापारः, वा व्यवहार इत्यर्थः । अभ्यर्हिता=अभ्युचिता, समुचितेति भावः । तपोधनानां-तपस्विनाम् अस्मत्सदृशामिति शेषः । तु विशेषेण-अधिकतया, निश्चयेनेत्यर्थः तुल्यरूपा वृत्तिरुचितेति भावः ॥ ११ ॥

भावार्थः—इहामुत्र च यशोभूषणं महदैश्वर्यसंचेतुमिच्छतां देहिनां स्वजनेषु विषये समानव्यवहारवदुचितैव, मादृशैस्तपस्विभिस्तु विशेषतया समवृत्तिता रक्षणीया

समासः—चेतुमिच्छन्तश्चिचीषन्तस्तेषां चिचीषताम् । जन्मास्त्येषामिति जन्मवन्तस्तेषां जन्मवताम् । न लघ्वीत्यलघ्वी तामलघ्वीम् । यश एवावतंसो यस्याः सा यशोऽवतंसा तां यशोऽवतंसाम् । तुल्यं रूपं यस्याः सा तुल्यरूपा । तप एव धनं येषामिति तपोधनानां ॥११॥

व्याकरणम्—चिचीषतां=चिञ्+सन्+शतृ । अभ्यर्हिता=अभि+अर्ह+तृच् ॥

कोषः—'प्राणी तु चेतनो जन्मी जन्तुजन्यशरीरिण' इत्यमरः । 'पुंस्युत्तंसा-

वतंसो द्वौ कर्णपूरेऽपि शेखर' इत्यमरः। 'विभूतिर्भूतिरैश्वर्यम्' इत्यमरः। 'सगोत्रबान्धवज्ञातिबन्धुस्वजना' इत्यमरः ॥ ११ ॥

पदार्थ—अलघ्वीं=प्रभूत। यशोवतंसां = यश ही जिसका भूषण है, ऐसी उभयत्र=इस लोक और परलोक में। भूतिं = ऐश्वर्य को। बन्धुषु = स्वजनों में तुल्यरूपा=एक प्रकार की। वृत्तिः = व्यवहार। अभ्यर्हिता=उचित है। तपोधनानां तु=तपस्वियों को तो। विशेषेण=विशेष करके। (समता का व्यवहार उचित है)॥

भाषार्थ--प्रचुर और यश को बढ़ाने वाली सम्पत्ति को इहलोक और और परलोक के लिए एकत्र करने वाले लोगों की अपने स्वजनों के प्रति एकरूपता उचित है, मुझ जैसे तपस्वियों के लिए तो वह विशेष करके पालनीय है।

विशेष--व्यासजी के कथन का तात्पर्य है कि—क्षुद्र लोग केवल अपना स्वार्थ देखते हैं इसलिए पगपग पर विषमता का व्यवहार करते हैं। जो इह लोक और परलोक में परम ऐश्वर्य भोगना चाहते हैं वे स्वजनों पर तो समानता का व्यवहार करते हैं किन्तु अपने विपरीत चलने वालों को अथवा ऐसे लोगों को जो उनकी कीर्ति या ऐश्वर्य में बाधा पहुँचाते हैं, दण्डनीय समझते हैं और उनके साथ समता का व्यवहार नहीं करते। केवल तपस्या ही जिनका धन है ऐसे निरीह व्यक्तियों को तो स्व और पर का विचार ही नहीं करना चाहिए। उन्हें विशेष करके सब पर समदर्शिता करनी चाहिये। यद्यपि तपस्वी होने के कारण मुझे भी समदर्शी होना चाहिए और मेरा जो स्नेह तुम्हारे प्रति है वही कौरवों के प्रति भी होना चाहिये किन्तु फिर भी तुम्हारे गुणों के कारण तुमपर मेरा अधिक स्नेह है—यह अगले श्लोक से सम्बद्ध है ॥११॥

तथाऽपि निघ्नं नृप तावकीनैः प्रह्वीकृतं मे हृदयं गुणौघैः।
वीतस्पृहाणामपि मुक्तिभाजां भवन्ति भव्येषु हि पक्षपाताः ॥१२॥

अन्वयः—तथाऽपि (हे) नृप !, तावकीनैः, गुणौघैः, प्रह्वीकृतं, मे, हृदयं निघ्नं, हि, वीतस्पृहाणां, मुक्तिभाजाम्, अपि, भव्येषु, पक्षपाताः भवन्ति ॥१२॥

व्याख्या—तथापि = समव्यवहारविधानौचित्येऽपि, हे नृपः = हे [illegible] युधिष्ठिर ! इत्यर्थः। तावकीनैः = त्वत्सम्बन्धिभिरित्यर्थः। गुणौघैः

गुणसमूहैः; प्रह्वीकृतम्=नम्रीकृतम्, मे=मम, व्यासस्येत्यर्थः। हृदयम्=चेतः, निघ्नं=त्वदधीनं जातमिति शेषः। हि=यस्माद्धेतोः, वीतस्पृहाणां=वीतरागाणां विषयाभिलाषविमुखानामित्यर्थः। मुक्तिभाजाम्=मोक्षार्थिनाम्, अपि समदृष्टिरक्षणोचितानामपि योगिनामित्यर्थः। भव्येषु=दिव्येषु, पक्षपाताः=स्नेहाः, एकपक्षोपकारकरणाभिलाषा इत्यर्थः। भवन्ति=संजायन्ते ॥ १२ ॥

भावार्थः—हे राजन् ! तुल्यवृत्त्यौचित्येऽपि त्वदीयगुणगणैर्मे हृदयं वशीकृतमिव। यतो हि निरीहा अपि मुमुक्षवो साधुषु पक्षपातं कुर्वन्त्येव।

समासः—गुणानामोघा गुणौघास्तैर्गुणौघैः। वीता विगता स्पृहा येषां ते वीतस्पृहास्तेषां वीतस्पृहाणाम्। भक्तिं भजन्त इति भक्तिभाजस्तेषां भक्तिभाजाम्। पक्षे पाताः पक्षपाताः ॥ १२ ॥

व्याकरणम्—भवन्ति=भू+लट् ॥ १२ ॥

कोषः—'अधीनो निघ्न आयत्त' इत्यमरः ॥ १२ ॥

पदार्थ—तथापि=समता का व्यवहार होने पर भी। नृप=हे राजन् ! तावकीनैः=तुम्हारे। गुणौघैः=गुण समूहों से। प्रह्वीकृतं=झुकाया हुआ। मे हृदयं=मेरा हृदय। निघ्नम्=(तुम्हारे) अधीन हो गया है। हि=क्योंकि। वीतस्पृहाणां=जिनकी इच्छायें समाप्त हो गई हैं ऐसे। मुक्तिभाजाम् अपि=मुमुक्षुओं के भी। भव्येषु=सज्जनों पर। पक्षपातः पक्षपात भवन्ति=पक्षपात होते हैं।

भाषार्थ—हे राजन् यद्यपि तपस्वियों को सब पर समान भाव रखना चाहिए। तौभी तुम्हारे गुणों पर मुग्ध हुआ मेरा हृदय, जैसे तुम्हारे अधीन सा हो गया है। क्योंकि निरीह मुमुक्षुओं का भी सज्जनों पर पक्षपात होता ही है ॥ १२ ॥

सुता न यूयं किमु तस्य राज्ञः सुयोधनं वा न गुणैरतीताः।
यस्त्यक्तवान्वः स वृथा बलाद्वा मोहं विधत्ते विषयाभिलाषः ॥१३॥

अन्वयः—यूयं, तस्य, राज्ञः, न, किमु, वा, गुणैः सुयोधनं न अतीताः, यः, वः, वृथा, वा बलात्, त्यक्तवान्, स, विषयाभिलाषः, मोहं विधत्ते ॥

व्याख्या—यूयम्=भवन्तः, पाण्डवा इत्यर्थः। राज्ञः=नृपतेः, तस्य=धृतराष्ट्रस्य, सुताः=पुत्राः न किमु=किं न भवथ, अपि तु तस्य यूयं पुत्रोपमा

एवेति भावः। वा=अथवा, गुणैः=शौर्यौदार्यगाम्भीर्यविद्याऽऽदिभिः सुयोधनं= दुर्योधनम्, अतीताः=समतिक्रान्ताः, न? अपि तु अतीता एव, अर्थाद् भवत्स्वपि पुत्रेषु सत्सु दुर्योधनश्चेद्गुणावत्तमस्तदा तत्पक्षपातकरण किञ्चिद युक्तम् परन्तु तथा न, किन्तु दुर्योधनो दुर्गुणवन्तमतिक्रान्तः; ईदृश्यां स्थितौ यज्जन्मान्धेन स्वात्मजस्य पक्षपातः? कुतः स नोचित इत्याशयः। यः=धृतराष्ट्रः, एतन्नामको दुर्योधनपितेति यावत्। वः युष्मान्, पाण्डवानिति भावः। वृथा=मिथ्या, वा=पक्षान्तरे, बलात्=सहसा, अविचिन्त्यैवेत्यर्थः। त्यक्तवान्=जहौ, सः विषयाभिलाषः=रूपादिभोगेच्छाऽऽत्मकः, मोहं=भ्रम, विधत्ते=करोति। अर्थात् स्वार्थपरता वा भोगाभिलाषाऽपि कर्त्तव्यमार्गेऽन्धकाररूपेणागस्तस्य किं न कर्त्तव्यमिति ज्ञाननिश्चयस्यावलोकनबाधां करोतीत्यर्थः ॥१३॥

भावार्थः—भवन्तः पाण्डवास्तद्वंशजा न किम्, अथवा गुणैः सुयोधनं नातिक्रान्तवन्तः किम्। यः युष्मानकारणमेव त्यक्तवान् स विषयभोगलालसो धृतराष्ट्रो हठादेव अविवेकं धारयति।

समासः—विषयाणामभिलाषो विषयाभिलाषः।

व्याकरणम्—त्यक्तवान्=त्यज+क्तवन्। विधत्ते=वि+धा+लट्।

कोषः—'आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी' इत्यमरः। 'वृथा निरर्थकाविध्योः' इत्यमरः। 'मोहश्चित्तभ्रमो भ्रान्तिर्भ्रमो मूर्च्छेति संमता' इति कोषः॥

पदार्थ—यूयं=तुम लोग। तस्य राज्ञः=उस राजा (धृतराष्ट्र) के। सुताः न किमु=पुत्र नहीं हैं क्या? वा=अथवा। सुयोधनं=दुर्योधन को। गुणैः अतीताः=गुणोंसे अतिक्रान्त किये हुए (उससे अधिक गुणवान्) न (किमु)= नहीं है क्या? यः-जिसने। वः=तुम लोगों को। वृथा त्यक्तवान्=व्यर्थ ही निकाल दिया। स=वह (धृतराष्ट्र)। विषयाभिलाषः=विषय भोगों की इच्छा वाला। बलाद्वा=हठ से जैसे। मोहं विधत्ते=अविवेक को धारण कर रहा है।

भाषार्थ—क्या तुम लोग उस धृतराष्ट्र की सन्तान नहीं हो? अथवा दुर्योधन को गुणों में पिछाड़ नहीं दिए हो, जो कि उसने अकारण तुम्हें त्याग दिया। विषय भोग में लिप्त हुआ धृतराष्ट्र हठपूर्वक अविवेकी बना हुआ है।

विशेष—पूर्व श्लोक में जो कहा था कि महात्माओं का सज्जनों पर पक्षपात होता है उसी को इस श्लोक में दर्शाया है—धृतराष्ट्र ने अकारण ही मोह में पड़कर तुम्हें निकाल दिया और अपने हठ पर व्यर्थ अड़ा हुआ है इसलिये दुर्जन है। तुम लोग शक्ति रखते हुए भी, मर्यादा का उल्लङ्घन न हो, इतने कष्ट सह रहे हो, इसीलिए गुणवान् हो। अतः मेरा उन्हें छोड़कर तुम्हारा पक्ष लेना और तुमसे स्नेह करना स्वाभाविक ही है॥ १३॥

जहातु नैनं कथमर्थसिद्धिः संशय्य कर्णादिषु तिष्ठते यः।
असाधुयोगा हि जयान्तरायाः प्रमाथिनीनां विपदां पदानि ॥१४॥

अन्वयः—यः, कर्णादिषु, संशय्य, तिष्ठते; एनम्, अर्थसिद्धिः, कथं, न, जहातु, हि, जयान्तरायाः, असाधुयोगाः, प्रमाथिनीनां, विपदां पदानि (भवन्ति)॥

व्याख्या—यः-धृतराष्ट्रः, कर्णादिषु-अङ्गराजप्रभृतिषु, संशय्य-संशयमवाप्य, तिष्ठते-निर्णेतृत्वेनावलम्बते तम्, एनं, कथं-कस्माद्, न-नहि, अर्थसिद्धिः-योजनासिद्धिः, जहातु-त्यजतु, अवश्यमेव दुर्नयतां कर्णादीनां मन्त्रणया तस्येष्टसिद्धिः कथमपि न भविष्यतीति भावः। हि-यस्मात् कारणात्, जयान्तरायाः-जयविघ्नस्वरूपाः, असाधुयोगाः दुर्जनसंसर्गाः, प्रमाथिनीनाम्-निर्मूलनशीलानां, विपदाम्-आपदां। पदानि-स्थानानि, भवन्ति ॥१४॥

भावार्थः—धृतराष्ट्रस्य कार्यसिद्धिः कथं भवेत् यः कार्ये सन्दिग्धे सति कर्णादीन्दुर्मन्त्रिणो निर्णेतृत्वेनावलम्बते। यतो हि दुर्जनसंसर्गा जयविघातका विनाशकारिविपदां स्थानानि च भवन्ति।

समासः—अर्थस्य सिद्धिरर्थसिद्धिः। कर्ण आदिर्येषां ते कर्णादयस्तेषु कर्णादिषु। साधुरसाधुः, असाधोर्योगा असाधुयोगाः, जयस्यान्तरायाः जयान्तरायाः॥ १४॥

व्याकरणम्—जहातु = हा+लोट्। संशय्य = सम्+शीङ्+क्त्वा+ल्यप्। तिष्ठते-स्था+लट्॥ १४॥

कोषः—'कर्णः श्रुतौ, कर्णभूपे, जात्यन्ध्यसमहाभुजे—' इति कोषः।

'विघ्नोऽन्तरायः प्रत्यूह' इत्यमरः। 'पदंव्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः ॥ १४ ॥

एवं शत्रोरनर्थं सूचयित्वा राज्ञोऽर्थसिद्धिं सूचयपि—

पदार्थ—एनं=इसे ( धृतराष्ट्र को )। अर्थसिद्धिः=कार्यसिद्धि। कथं न जहातु=क्यों न छोड़े। यः=जो। संशय्य=सन्देह होने पर। कर्णादिषु=कर्ण आदि पर। तिष्ठते=निर्भर रहता है। हि=क्योंकि। असाधुयोगाः दुर्जनों के सम्पर्क जयान्तरायाः=विजय में बाधक ( और ) प्रमाथिनीनां=विनाश करने वाली विपदां=विपत्तियों के। पदानि=स्थान ( होते हैं )।

भाषार्थ—इस धृतराष्ट्र को अर्थसिद्धि क्यों न छोड़े ( अर्थात् इसके कार्य सिद्ध कैसे हों ) जो कि कार्य में सन्देह होने पर कर्ण आदि दुर्मन्त्रियों के भरोसे रहता है। क्योंकि दुर्जनों के संसर्ग से जय में विघ्न होता है और विनाशकारी विपत्तियाँ आती हैं।

विशेष—राजा कैसा होना चाहिये और मन्त्री कैसा, इसका सुन्दर निरूपण 'नीतिवाक्यामृत' के मंत्रिसमुद्देश और राजसमुद्देश में किया गया है। राजा को मन्त्रियों की राय अवश्य लेनी चाहिये, किन्तु उस पर अपने विवेक से काम करना चाहिये, मन्त्री गुणवान् और निष्पक्ष होना चाहिये। दुष्ट मन्त्री की राय पर चलने वाला राजा नष्ट हो जाता है। किन्तु यहाँ कर्णादि दुर्योधन के अन्धपक्षपाती होकर पांडवों से अपना वैर साधने वाले हैं। ऐसे मंत्रियों की सम्मति पर निर्भर रहने वाला धृतराष्ट्र विजय कैसे प्राप्त करेगा। कौटिल्य ने भी ऐसे मंत्रियों को त्याग देने का विचार अभिव्यक्त किया है। शुक्र ने ऐसे मंत्रियों को मन्त्रिमण्डल से निकाल कर बाहर कर देने का निर्देश दिया है और कहा है कि ये आपत्ति के स्थान है ॥ १४ ॥

पथश्च्युतायां समितौ रिपूणां धर्म्यां दधानेन धुरं चिराय।
त्वया विपत्स्वप्यविपत्तिरम्यमाविष्कृतं प्रेम परं गुणेषु ॥ १५ ॥

अन्वयः—पथश्च्युतायां, रिपूणां, समितौ, चिराय, धर्म्यां धुरं, दधानेन त्वया, विपत्सु अपि, अविपत्तिरम्यं, गुणेषु परं, प्रेम, आविष्कृतम् ॥ १५ ॥

व्याख्या—पथश्च्युतायां=न्यायमार्गभ्रष्टायां, रिपूणां = शत्रूणां, दुर्योधनादीनामित्यर्थः। समितौ=सभायां, धर्म्यां = धर्मयुक्तां, धुरं = भारं, दधा-

नेन=विभ्रता, त्वया = भवता, युधिष्ठिरेणेत्यर्थः' विपत्सु = आपत्सु, दीनदेशास्वित्यर्थः। अपि अविपत्तिरम्यं=सुखावसरवद्रुचिरं, वा, अविपत्ति = अनश्वरं, रम्यं चारू, निष्कपटमित्यर्थः। परं = परमम्, प्रेम = स्नेहः, आविष्कृतम् = प्रकटीकृतम्। सुखावसरे सर्वे गुणेषु प्रेम प्रदर्शयन्ति, परन्तु दुःखावसरेऽपि भवानेव गुणेषु प्रेम प्रदर्शितवान्, अतो भवान् भव्यस्तेन त्वयि पक्षपातो नानुचित इति ॥ १५ ॥

भावार्थः—शत्रुषु कौरवादिषु राजसभायां द्रौपदीवस्त्राकर्षणाद्यधर्मं कुर्वत्स्वपि भवताविपत्ति मर्षयता न कदापि क्रोधः प्रदर्शितोऽपि तु शमादिगुणेषु विशेषपक्षपातः प्रकटीकृत इति साधु कृतम्।

समासः—न विपत्तिर्यत्र तद् अविपत्तिः ॥ १५ ॥

व्याकरणम् - आविष्कृतम् = आविस = कृ + क्तः ॥ १५ ॥

कोषः—'अयनं वर्त्ममार्गाध्वानः पन्थानः पदवी सृतिः' इत्यमर। सभासमितिसंसद' इत्यमरः। 'प्रेया ना प्रियता हार्दं प्रेम स्नेह' इत्यमरः।

पदार्थ—रिपूणां समितौ = शत्रुओं की सभा के। पथः च्युतायां सत्यां = सन्मार्ग से च्युत होने पर भी। चिराय = चिरकाल तक। धर्म्या = धर्म से न डिगे हुए। धुरं = भार को। दधानेन = धारण करते हुए। त्वया = तुमने। विपत्सु अपि = विपत्तियों में भी। अविपत्तिरम्यं = अविनाशी होने से रमणीय। गुणेषु = शान्त्यादि गुणों के विषय में। पर प्रेम = उत्कृष्ट प्रेम। आविष्कृतम् = प्रकट किया है।

भाषार्थ—शत्रुओं द्वारा राजसभा में द्रौपदी के वस्त्राकर्षणादि अधर्मों को सहकर भी आपने शान्ति आदि गुणों पर अपना जो स्थायी प्रेम प्रदर्शित किया है वह प्रशसनीय है।

विशेषः—"भवन्ति भव्येष्वहि पक्षपाताः" श्लोक में व्यासजी ने कहा था कि आपके गुणों से मेरा चित्त आपकी ओर आकृष्ट हो गया है। क्योंकि वीतराग मुमुक्षु भी सज्जनों का ही पक्षपात करते है। इसी को इस श्लोक में स्पष्ट किया है कि कौरवों और उनके सहयोगियों का सारा समूह धर्म से च्युत हो चुका है अतः वे गुणहीन और पक्षपात के

अनधिकारी हैं। किन्तु आपने इस भयंकर विपत्ति को सहकर भी धर्म नहीं छोड़ा और कभी उन पर क्रोध नहीं किया, इसलिए आप गुणज्ञ होने से पक्षपात के अधिकारी हैं ॥ १५ ॥

विधाय विध्वंसमनात्मनीनं शमैकवृत्तेर्भवतश्छलेन ।
प्रकाशितत्वन्मतिशीलसाराः कृतोपकारा इव विद्विषस्ते ॥ १६ ॥

अन्वयः—शमैकवृत्तेः भवतः, छलेन, अनात्मनीनं, विध्वंसं, विधाय, प्रकाशितत्वन्मतिशीलसाराः ते, विद्विषः, कृतोपकाराः, इव ( सन्ति ) ॥१६॥

व्याख्या—समैकवृत्तेः = शान्तिप्रधानव्यवहारस्य, भवतः = तव, युधिष्ठिरस्येत्यर्थः । छलेन = कपटेन । अनात्मनीनं = स्वाभिष्टकरं विध्वंसं सर्वस्वहानिं, विधाय=कृत्वा, प्रकाशितत्वन्मतिशीलसाराः=प्रकटितभवद्बुद्धिप्रकृतिप्रकर्षाः, ते=तव, युधिष्ठिरस्य । विद्विषः=शत्रवः, कृतोपकाराः=विहितसाहाय्याः, इव, सन्तीति । अर्थात् मिथो मित्रतायां दुर्जना अप्युपकारिण एव भवन्ति का कथा सज्जनानाम्, परन्तु मिथो विरोधे जनिते दुर्जनाः, प्रकृतिं प्रकटयन्ति, सज्जना अपि स्वस्वभावं प्रदर्शयन्ति । किन्तु दुर्जनकृतापकारस्य प्रत्यपकारं न कुर्वन्ति तदानीं सज्जनस्य परिचयो भवद्दुर्जनकृतापकारानपि क्षमापयित्वा, तत्प्रतीकारं ये न कुर्वन्ति 'यदनिष्टमिष्टं वा कुर्वन्ति ते तत् स्वार्थम्' अतश्चेदस्मदीयो रिपवोऽस्माकमनिष्टमाचरन्ति, यदा कुर्वन्तु, तत्फलं त एव प्राप्स्यन्ति, न तत्प्रत्युत्तरं दास्यामः, एवं स्वभाववतां भवतां स्वभावपरिचय एव प्रकाशितो भवद्वैरिणा सर्वत्रेति भावः ॥ १६ ॥

भावार्थः—शान्तस्वभावं भवन्तं प्रति कपटव्यवहारेण वर्तमानाः शत्रवः स्वकीयमेव विनाशं कृत्वा जगति भवद्बुद्धिस्वभावयोः प्रकर्षं प्रख्याप्योपकृतवन्त एव ।

समासः—आत्मने हितं आत्मनीनः न आत्मनीनं इत्यनात्मनीनः, तम् अनात्मनीनम् । शम एवैका वृत्तिर्यस्य सः, शमैकवृत्तिस्तस्य शमैकवृत्तेः । मतिश्च शीलश्च मतिशीले, तव मतिशीले, इति त्वन्मतिशीले त्वन्मतिशीलयोः सारौ त्वन्मतिशीलसारौ, प्रकाशितौ त्वन्मतिशीलसारौ, यैस्ते प्रकाशितत्वन्मतिशीलसाराः । कृतः उपकारो यैस्ते कृतोपकाराः ॥ १६ ॥

व्याकरणम् — विधा=वि+धा+क्त्वा+ल्यप् ॥ १६ ॥

कोष:—'शमथस्तु शमः शान्तिः इत्यमरः । 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे' इत्यमरः । 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः' इत्यमरः । 'शुची तु चरिते शीलम्' इत्यमरः ॥ १६ ॥

पदार्थ—शमैकवृत्तेः=शान्ति ही एकमात्र साधन है जिनका ऐसे । भवतः=आपसे । छलेन=कपट करके । अनात्मनीनं=अपने लिए हितकर । विध्वंसं = विनाशको । विधाय = करके । प्रकाशितत्वन्मतिशीलसाराः= (संसार में) प्रकट कर दिया है तुम्हारी बुद्धि और स्वभाव के उत्कर्ष को जिन्होंने, ऐसे । ते=तुम्हारे । विद्विषः=शत्रु । कृतोपकारा इव (संजाताः)= उपकारी जैसे हो गये ।

भाषार्थ—शान्त स्वभाववाले आपके प्रति कपटपूर्ण व्यवहार करने से अपना अहित करके सर्वनाश करते हुए तुम्हारे शत्रुओंने जो तुम्हारी बुद्धि और स्वभावको जगत्में विख्यात करा दिया, अतः अतः वे अपकार करते हुए भी एक प्रकारसे तुम्हारे उपकारी ही हो गये है ॥ १६ ॥

लभ्या धरित्री तव विक्रमेण ज्यायांश्च वीर्यास्त्रबलैर्विपक्षः ।
अतः प्रकर्षाय विधिर्विधेयः प्रकर्षतन्त्राहि रणे जयश्रीः ॥ १७ ॥

अन्वयः—तव धरित्री, विक्रमेण, लभ्या, च विपक्षः, वीर्यास्त्रबलैः, ज्यायान् अतः, प्रकर्षाय, विधिः, विधेयः, हि, रणे, जयश्रीः, प्रकर्षतन्त्रा ॥१७॥

व्याख्या—तव=भवतः, युधिष्ठिरस्येत्यर्थः । धरित्री=पृथ्वी, विक्रमेण= पराक्रमेण, लभ्या,=प्राप्या भविष्यतीति शेषः न तु शान्त्या लभ्येति भीममतानुमोदनम् । विपक्षश्च=शत्रुश्च, वीर्यास्त्रबलैः=शौर्यशस्त्रसैन्यैः, ज्यायान्=महीयान्, अस्तीति शेषः । अतः=अस्मात्, कारणात् प्रकर्षाय=उत्कर्षाय, शत्रुतोऽधिकवीर्यशस्त्रसैन्यसम्पादनायेत्यर्थः । विधिः=विधानं, विधानं, विधेयः=कर्त्तव्यः, हि= यस्मात्, कारणात्, रणे=सङ्ग्रामे, जयश्रीः=लक्ष्मीः प्रकर्षतन्त्रा=उत्कर्षजनाधीना, न त्वपकर्षजनायत्तेति भावः अनेनाधुना युद्धकरणमुचितमिति युधिष्ठिरमतानुमोदनं कृतं भगवता व्यासेन यतो मिथः सहजयोरनुरोधः शान्तो भवेदिति ॥ १७ ॥

भावार्थः—भवान् पराक्रमेणैव राज्यं करोतु । शत्रवश्च वीर्येणास्त्र-सम्पदा सैन्यसंपदा च भवत्तोऽधिकतराः । अतः भवतापि स्वोत्कर्षाय यतनीयं यतो हि युद्धे जयलक्ष्मीः प्रकर्षाधीना एव भवति ।

समासः—वीर्यं चास्त्राणि च बलानि च वीर्यास्त्रबलानि, तैर्वीर्यास्त्रबलैः । प्रकर्षस्वतन्त्रं मुख्यो यस्याः साः प्रकर्षतन्त्रा । जयस्य श्रीः जयश्रीः ॥ १७ ॥

व्याकरणम्—लभ्या+लभ् + यद् । विधेयः=वि+धा + यत ॥ १७ ॥

कोषः—'धरा धरित्री धरणिः क्षोणिर्ज्या काश्यपी क्षितिः' इत्यमरः 'शक्तिः पराक्रमः प्राणो विक्रमस्त्वतिशक्तिता' इत्यमरः । 'वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम् 'इत्यमरः । उत्साहोऽध्यवसायः स्यात्सवीर्यमतिशक्तिभाक्' इत्यमरः । 'द्विडविपक्ष हिता-मित्र-दस्यु-शात्रव-शत्रव' इत्यमरः 'विधिर्विधाने देवे च' इत्यमरः । 'तन्त्रं प्रधाने सिद्धान्ते' इत्यमरः । 'अस्त्रियां समरानीकरण कलहविग्रहो' इत्यमरः ॥ १७ ॥

अथ 'त्रि'—इत्यादिना श्लोकचतुष्टयेन विपक्षज्यायस्त्वं वर्णयति—

पदार्थ—तव=तुम्हें । धरित्री=पृथ्वी । विक्रमेण=पराक्रमसे । लभ्या+प्राप्य है । विपक्षश्च=और शत्रुपक्ष । वीर्यास्त्रबलैः=पराक्रम, अस्त्रशस्त्र और सेना ( तुमसे ) । ज्यायान्=बढ़कर है । अतः=इसलिये । प्रकर्षाय=( तुम्हें भी ) अपने उत्कर्ष के लिये । विधिः=उपाय । विधेयः=करना चाहिये । हि=क्यों । रणे=युद्धमें । जयश्री;—विजय लक्ष्मी । प्रकर्षतन्त्रा=उत्कर्ष के ही अधीन होती है

भाषार्थ—आप पराक्रमसे ही राज्य पा सकते है और शत्रु आपसे शौर्य अस्त्रशस्त्र तथा तथा सैन्यबलमें बढ़कर है, अतः आपको भी अपने उत्कर्ष बढ़ाने का यत्न करना चाहिये, क्योंकि युद्ध में विजय उत्कर्ष के ही अधीन रहती है ।

विशेष–उत्कर्ष दो प्रकार के होता है एक गुणहेतुक दूसरा प्रयत्न साध्य व्यासजीका अभिप्राय है कि गुणमूलक उत्कर्ष से तो तुम्हें संसार में यश प्राप्त हो चुका, जैसा कि पूर्वश्लोक में कह चुके हैं । किन्तु पृथ्वी तो पराक्रम से ही प्राप्त होसकती है, अतः उसके लिये भी तुम्हें प्रयत्न करना चाहिये

क्योंकि "वीरभोग्या वसुन्धरा", पृथ्वी वीरों को प्राप्त होती है केवल गुणवानोंको ही नहीं। वीर यदि गुणवान् भी हुआ तब तो सोनेमें सुगन्ध है। इस समय शत्रु बलमें, अस्त्रों में और सैन्यशक्तिमें तुमसे बढ़ा हुआ है। युद्धमें विजय उसीको मिलती है जो हर प्रकारसे बढ़ा-चढ़ा हो। अतः तुम यदि राज्य चाहते हो तो प्रकर्ष वृद्धि के लिये प्रयत्न करो ॥ १७ ॥

त्रिःसप्तकृत्वो जगतीपतीनां हन्ता गुरुर्यस्य स जामदग्न्यः।
वीर्यविधूतः स्म तदा विवेद प्रकर्षमाधारवशं गुणानाम् ॥ १८ ॥

अन्वयः—[यः] त्रिःसप्तकृत्वः, जगतीपतीनां, हन्ता, गुरुः, सः, जामदग्न्यः यस्य वीर्यविधूतः, [सन्] तदा गुणानां प्रकर्षम्, आधारवशं विवेद ॥१८॥

व्याख्या—य त्रिःसप्तकृत्वः = त्रिगुणसप्तवारम्, एकविंशतिवारमित्यर्थः। जगतीपतीनाम्=महीपतीनां, क्षत्रियाणामित्यर्थः। हन्ता = नाशकः, गुरुः = धनुरवेदोपदेशकः। भीष्मस्यापीति शेषः। सः=तथाविधः, जामदग्न्यः=जामदग्निमुनिपुत्रः, परशुराम इत्यर्थः। यस्य=भीष्मस्य, वीर्यविधूतः=पराक्रमतिरष्कृतः, भीष्मेण पराजितः सन्नित्यर्थः। तदा=स्वपराजयावसरे, गुणानां=शौर्योदार्यगाम्भीर्यादीनाम्, प्रकर्षम्=उत्कर्षम्, आधारवशम्=आश्रयाऽनुगुणं, विवेद = ज्ञातवान्।

भावार्थः—एकविंशतिवारन् क्षत्रिययाणामुन्मूलयिता परशुरामोऽम्बिकापरिणये यस्य भीष्मस्य विक्रमणेण तिरस्कृतः सन्, आश्रयस्य प्रकर्षेण गुणानां प्रकर्षो भवतीति जज्ञे।

समासः—त्रिः, त्रिगुणाः सप्त, इति त्रि-सप्तकृत्वः। जगत्याः पतयो जगन्ती, पतयस्येर्षां जगतीपतीनाम्। जमदग्नरपत्य पुमाद् जामदग्न्थः। वीर्येणावधूतो, वीर्यविधूतः। आधारस्य वश आधारवशस्तमाधारवशम् ॥ १८ ॥

व्याकरणम्—त्रिःसत्तकृत्व=त्रि=सुच्=सप्त=कुत्वसु। विवेद=विद् = लिट् ॥ १८ ॥

कोषः—'जगती जगतिच्चन्दो विशेषेऽपि' क्षितावपि' इत्यमरः। 'स्म पादपुरणे भूतेऽर्थे' इति विश्वः। 'गुरुः प्रधाने महति चोपदेष्टर्यपि स्मृत' इति कोषः। 'मत आधार आश्रय' इति कोषः ॥ १८ ॥

कथासन्दर्भः—एकदा भीष्मस्य (देवव्रतस्य) पिताशन्तनुर्मृगयार्थं वनं गतस्तत्रैकां दासकन्यकामालोक्य स्त्रीविरहितेन कामाधितया तस्याभासको भूत्वा तत्पितरं धीवरं कन्यादानाय प्रार्थयामास। स च धीवरः--मम प्राणमपि गृह्णातु राजा नाहं वृद्धाय, विवाहार्हवयस्कपुत्राय भवते दास्यामि स्वकन्यां, दास्यामि चेत्तदा भवत्पुत्राय देवव्रताय' इत्युत्तरं ददौ, ततस्तदुचितकथया लज्जितः कामबाणभिन्नमर्मावयवः स्वभवनमागत्य कोपभवने निद्राव्याजेन भूमौ निःश्वसन् प्राणान् हातुं पतितः। प्रभाते, अतीते च कियति समये, उषसि उत्थानशीलमपि राजानमनुत्थितमालोच्य परिचारका मन्त्रिणश्च तत्सकाशं गत्वाऽवलोकितवांस्तदीयां दशां, ज्ञातवांश्च तस्याशयं, तथा देवव्रतंस्तत्पुत्रस्तयाभिलाषपूर्त्यै तस्य दासस्यान्तिके गत्वाऽतिसत्वरम् मत्पित्रे देहि दुहितरं विवाहविधिनेत्यादिशत्। श्रुत्वा तद्वचनं, नाहं तस्मै दास्यामि किं भवत्युपस्थितेऽस्मद्दौहित्रो राज्यभागी स्यादथवा भवत्पुत्रपरम्परायाः सम्भवेपि। यदि ग्रहीष्यति। तदा त्वदर्थं चेत्तथा ददामि सादरमिति निशम्य तदानीमेव देवव्रतेन प्रतिज्ञा कृता 'नाहं करिष्यामि विवाहं कयाऽपि साकं, नाहं राज्यश्चाङ्गीकरिष्यामिति' हेतोस्तस्य नाम भीष्मो भीष्म प्रतिज्ञाकरणाज्जातम्। अथ तां दासकन्यां योजनगन्धां व्यासमातरं कालीं समानीय स्वजनकायार्पिता भीष्मे ।। तस्यां चित्रवीर्यविचित्रवीर्यौ द्वौ भ्रातरौ भीष्मस्य जातौ कदाचित्सञ्जनिते काश्यां महाराजस्य कन्यानां वीर्यशुल्के स्वयम्बरे सम्मिलिता निमन्त्रिता भूपतयः। भीष्मोऽपि स्वानुजाभ्यां सह तत्र गतः। परन्तु भीष्ममागतमेव विज्ञाय सर्वे राजानः स्वकीयमाशां विफलां भविष्यन्तीमनुमान्य यथादिशं गताः अम्बा-अम्बिका-अम्बालिका-चेति कन्यात्रयमादाय स्वधामागमत्। तदानीमम्बाऽवदद् 'अलं पूर्वत एव शाल्वभूपानुरक्ता आसम्' इति निशम्य 'गच्छ यथेष्टं स्वच्छन्दचारिणि'—एवं कथयित्वा स्वानुजयोरम्बिकाकाम्बालिकाभ्यां विवाहं चकार परन्तु शाल्वेन 'नालं त्वां परपरिगृहीतां ग्रहीतां ग्रहीष्यामि' इत्यमपमानिता पुनः साऽम्बिका लज्जावनतवदना भीष्मशरणमेवोपस्थिता 'त्वमेव मां गृहाण कुरुष्व मां किङ्करीमपि' इति प्रार्थितवती। परन्तुः भीष्मः स्वप्रतिज्ञाभङ्गभिया तां दूरतस्त्यक्त्वा स्थितः। अथ सा किंकर्त्तव्यविमूढा भूत्वाऽन्ते 'यदस्य गुरुः परशुराम एव कथयिष्यति तदा तदाज्ञां नोल्लंघयिष्यति' इति विचार्य रामन्तिकं गत्वा तस्मै सर्वं स्ववे

हेतुमकथयत् । ततो जातदयेन तेन भीष्यसन्निधिमागत्यादिष्टत् 'कुरु विवाहमन-याऽम्बया' । ततो 'नहि करिष्यामि कदाऽपि सह करग्रहम्' इति साग्रहं वचः श्रुत्वा प्रकृत्या कोपने रामस्तेन सह योद्धुमारब्धः । युद्धे च भीष्मेण पराजितः स्वस्थानं गतः । सा च द्रुपदयज्ञकुण्डे पतित्वा ततो नपुंसकवेषेण शिखण्डीति नाम्ना परिचितस्तमान्निःसृतो भीष्ममृत्युनिदानीभूताऽभवदिति ॥ १८ ॥

पदार्थः—त्रिःसप्तकृत्वः=( सातकी तिगुनी बार अर्थात् ) २१ बार। जगतीपतीनां=राजाओं (क्षत्रियों) का। हन्ता=मारनेवाला। गुरुः=(शस्त्र विद्या का) उपेदक। स=वह (प्रसिद्ध)। जामदग्निपुत्र (परशुराम)। यस्य=जिस (भीष्म) के। वीर्यविधुतः=पराक्रमसे अभिभूत हुआ। तथा=युद्ध में। गुणानां= गुणोंके। प्रकर्षं=आधिक्यको। आधारवशं=आश्रयके अधीन! विवेदसम= जान गया।

भाषार्थ--इक्कीस बार क्षत्रियों का नाश करनेवाले तथा शस्त्रविद्याके आचार्य परशुराम जिस भीष्मके पराक्रमसे हार खाकर यह समझ गये थे कि आधारके उत्कर्षपर ही गुणोंका उत्कर्ष निर्भर करता है।

विशेष--"ज्याकांश्च वीर्यास्त्रबलैर्विपक्षः" जो पूर्व श्लोकमें कहा था उसीको इन ४ श्लोकों से सिद्ध किया है। काशिराजकी तीन कन्याओं (अम्बा अम्बिका और अम्बालिका जो स्वयंवरके समय भीष्म बलपूर्वक हर लाए थे। हस्तिनापुर में लाकर जब अपने भाइयों (चित्रवीर्य और विचित्रवीर्य) से उनका विवाह करने लगे तो अम्बाने कहा मैंने अपने मनमें शाल्वदेशके राजाको वरण किया है। आर्यकन्या एक बार जिसे वरण कर लेती है उसीकी हो जाती है। अतः मैं इनसे विवाह नहीं कर सकती। भीष्मने ससम्मान उसे शाल्वदेशके राजाके पास भेज दिया, किन्तु उसने यह कहकर उसे तिरस्कृत कर दिया कि जिसे एक क्षत्रिय हर ले गया, उसके साथ मैं विवाह नहीं करूँगा। वह फिर लौटकर भीष्मके पास आई और बोली अब मैं निर्दोष हूँ, क्योंकि जिसे मैं चाहती थी उसने मुझे स्वीकार नहीं किया। अतः आप अपने भाईसे मेरा विवाह कर दें। किन्तु भीष्मने मना कर दिया। दोनों जगहसे ठुकराई गई वह परशुरामजीके शरण गई। भीष्मने परशुरामजीसे अस्त्रविद्या सीखी थी,

गुरु होने के कारण वे उनका सम्मान करते थे। किन्तु परशुरामजीके समझाने पर भी जब भीष्मने उसे स्वीकार नहीं किया, तो उन्हें क्रोध आ गया और भीष्म ने परशुरामजी को हरा दिया। तब परशुरामजी समझ गये कि मेरी सिखाई हुई विद्यासे भीष्मने मुझे परास्त कर दिया और यह मुझसे अधिक शौर्यशाली हो गया। वास्तवमें—पात्र जितना ही बड़ा होगा उसमें उतनी ही अधिक मात्रामें वस्तु समायेगी ॥ १८ ॥

यस्मिन्ननैश्वर्यकृतव्यलीकः पराभवं प्राप्त इवान्तकोऽपि।
धुवन्धनुः कस्य रणे कुर्यामनो भयैकप्रवणं स भीष्मः ॥ १९ ॥

अन्वयः—यस्मिन् अनैश्चर्यकृतव्यलीकः, अन्तकः, अपि, पराभवं प्राप्तः इव, रणे, धनुः, धुन्वन्, सः, भीष्मः, कस्य, मनः, भयैकप्रवणं, न, कुर्यात् ॥१९॥

व्याख्या—यस्मिन् = भीष्मे, अनैश्चर्यकृतव्यलीकः=असामर्थ्यजनितदुःखः अन्तकः = यमः, अपि, पराभवम् = पराजयं, प्राप्तः=गतः, इव जातः। तादृश इति शेषः। रणे = सङ्ग्रामे, धनुः = शरासनं, धुन्वन्=चालयन्, सन्, कस्य जनस्य, मनः = चित्तम्, भयैकप्रवणं = भीष्माभिमुखं, न कुर्यात्=न विदधीत अपि तु सर्वेषामपि कुर्यादेव, वा कस्य = ब्राह्मणोऽपि, मनो भयैकप्रवणं कुर्यादेवेति ॥ १९ ॥

भावार्थः—भीष्मस्येच्छामृत्युतया कृतान्तोऽपि तदन्तिके स्वासामर्थ्य लज्जित इव आस्ते। एवंभूतः स यदा रणे धनुष्टंकारं करिष्यति तदा कस्य मनसि भयं न संचरिष्यति।

समासः—ईश्वरस्य भाव ऐश्वर्यं न ऐश्वर्यम् अनैश्वर्यम्, अनैश्चर्येण कृतं व्यलीकं यस्य: सः अनैश्चर्यकृतव्यलीकः। एकस्मिन्नेव प्रवणमेकप्रवणम्, भये एकप्रवणं भयैकप्रवणम् ॥ १९ ॥

व्याकरणम्—कुर्यात्=कृ + लिङ्। प्राप्तः, प्र+आप+क्तः। १९।

कोषः—'व्यलीकमप्रियकार्यवैलक्ष्येष्वपि पीडने'—इत्यमरः। 'काली दण्डधरश्राद्धदेवो वैवस्वतोऽन्तक' इत्यमरः। 'धनुश्चापो धन्वशरासनकोदण्डकार्मुकम् इत्यमरः। प्रवणं क्रमनिम्नोर्व्याम' इत्यमरः। १९।

पदार्थ—यस्मिन्=जिस [ भीष्म ] के विषयमें। अनैश्वर्यकृतव्यलीकः= असामर्थ्यजन्य दुःख से दुखी। अन्तकः अनिप=यमराज भी। पराभवं प्राप्त इव=पराजयको प्राप्त हुआ जैसा है। स भीष्मः=वह भीष्म। रणे=युद्धमें। धनुः धुन्वन्=धनुषको टंकारता हुआ। कस्य मनः=किसके चित्तको। भयैकप्रवणं=भयसे विह्वल। न कुर्यात्=न करे।

भाषार्थः—भीष्मकी मृत्यु उनकी इच्छापर निर्भर है। अतः यमराज भी अपनी असामर्थ्यसे उनके सामने लज्जित सा रहता है। ऐसे भीष्म जब युद्धमें अपने धनुषको टंकारने लगेंगे, तो कौन ऐसा है जिसके हृदयमें भय नहीं उत्पन्न होगा। अर्थात् सभी भयभीत रहेंगे।

विशेष—जब अर्जुनके बाणोंमें भीष्म विंधकर शय्यामें मरणान्त अवस्था में पड़े थे उस समय सूर्य दक्षिणायन था और भीष्म उत्तरायणमें मरना चाहते थे तब उनके पूर्वपितरोंने स्वप्नमें आकर कहा कि आपने अपने पिता शान्तनुके लिए राज्य लेने और आजन्म विवाह न करनेका जो भीष्म व्रत ले लिया था उसीसे प्रसन्न होकर उन्होंने आपको वर दिया है कि आपकी मृत्यु इच्छाके अनुसार होगी। अतः आप निश्चिन्त रहें, आपकी मृत्यु उत्तरायण में जब आप चाहेंगे तभी होगी। संसार यमराज के वश में रहता है वह जब जिसे चाहे ले जा सकता है किन्तु भीष्म उसकी इच्छासे नहीं प्रत्युत अपनी इच्छासे मरनेवाले हैं इसीसे वह लज्जित सा रहता है। इस वरदानको व्यासजी अपनी दिव्य दृष्टिसे जानते थे ॥ १९ ॥

सृजन्तमाजाविषुसंहतीर्वः सहेत कोपज्वलितं गुरुं कः।
परिस्फुरल्लोलशिखाऽग्रजिह्वं जगज्जिघत्सन्तमिवान्तवह्निम् ॥२०॥

अन्वयः—आजौ, इषुतसंहतीः, सृजन्तं, कोपज्वलितं, परिस्फुरल्लोलशिखाऽग्रजिह्वं जगत्, जिघत्सन्तम्, अन्तवह्निम् इव गुरुम्, वः, कः, सहेत ॥ २० ॥

व्याख्या—आजौ=संग्रामे, इषुसंहतीः=शरवर्षाः, सृजन्तं=कुर्वन्तं, कोपज्वलितं=क्रोधोद्दीपितम्; अत एव, परिस्फुरल्लोलशिखाऽग्रजिह्वम्=परिचलचपलज्वालाऽग्ररसनं, जगत्=भुवनं, जिघत्सन्तम्=अत्तुमिच्छन्तम्, अन्तवह्निम्=प्रलयाग्निम्, इव गुरुम्=शस्त्रशास्त्राचार्यं, द्रोणमिति

शेषः । वः=युष्माकम् पाण्डवानां मध्ये इत्याशयः, कः=जनः, सहेत=क्षमेत, न कोऽपि ॥ २० ॥

भावार्थः—परितः प्रसादभिरुद्दीप्तशिखाभिर्जगत् भस्मसात्कर्तुमिच्छन्तं प्रलयाग्निमिव क्रोधोद्दीप्तं रणे बाणसङ्घान् वर्षयन्तं च गुरुं द्रोणाचार्यं युष्माकं मध्ये कः सोढुं शक्नुयात् । न कोऽपीत्यर्थः ।

समासः—इषूणां संहतय इषुसंहतयस्ता इषुसंहतीः । कोपेन ज्वलितः कोपः ज्वलितस्तं कोपज्वलितम् । परिस्फुरन्त्यः लोलाश्च शिखाः परिस्फुरल्लोलशिखाः तासामग्राण्येव जिह्वा यस्य सः परिस्फुरल्लोलशिखाऽग्रजिह्वस्तं परिस्फुरल्लोलशिखाऽग्रजिह्वम् । अन्तस्य प्रलयस्य वह्निरन्तवह्निस्तमन्तवह्निम् ॥ २० ॥

व्याकरणम्—सहेत=सह+लिङ् ॥ २० ॥

कोषः—'समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः' इत्यमरः । 'कलम्बमार्गणशराः पत्नी रोष इषुर्द्वयोः' इत्यमरः । 'स्त्रियां तु संहतिर्वृन्दनिकुरम्बं कदम्बकम्' इत्यमरः । 'कोपक्रोधामर्षरोषप्रतिघारुट्क्रुधौ स्त्रियौ' इत्यमरः । 'रसज्ञा रसना जिह्वा' इत्यमरः । 'अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः' इत्यमरः ॥ २० ॥

पदार्थ—आजौ=युद्ध में । इषुसंहतीः=बाणसमूहों को सृजन्तं=उत्पन्न करते ( बरसाते ) हुए । कोपज्वलितं=क्रोधसे उद्दीप्त हुए । परिस्फुरल्लोलशिखाग्रजिह्वं=चारों ओर फैल रही है चञ्चल से लपटरूप जिह्वाएँ जिसकी ऐसे और जगज्जिघत्सन्तं=संसार को खाजानेको इच्छावाले । अन्तवह्निम् इव=प्रलयाग्नि के समान । गुरुं=द्रोणाचार्य को । वः=तुमलोगों में से । कः सहेत=कौन सह सकता है ।

भाषार्थ—चारों ओर फैलती हुई चंचल लपटों से संसार को भस्म कर देना चाहते हुए—से प्रलयअग्निकी तरह युद्ध में चारों ओर से बाणों की वर्षा करते हुए और क्रोध से भरे द्रोणाचार्य की बराबरी तुममें से कौन कर सकता है ?

विशेष—चित्रभानुकृत भावार्थदीपिका में 'वः' के स्थानों में 'वा' पाठ है जिसका अर्थ है अथवा प्रलयाग्निके समान भयंकर द्रोणाचार्य का सामना कौन कर सकता है ? अर्थात् कोई नहीं कर सकता ।। २० ।।

निरक्ष्य संरम्भनिरस्तधैर्यं राधेयमाराधितजामदग्न्यम् ।
असंस्तुतेषु प्रसभं भयेषु जायेत मृत्योरपि पक्षपातः ।। २१ ।।

अन्वयः—संरम्भनिरस्तधैर्यम्, आराधितजामदग्न्यं, राधेयं निरीक्ष्य, असंस्तुतेषु भयेषु प्रसभं, मृत्योः, अपि, पक्षपातः जायेत ।।२१।।

व्याख्या—संरम्भनिरस्तधैर्यं = कोपपरित्यक्तशेषम् आराधितजामदग्न्यं = संसेवितपरशुरामं, राधेयं = कर्णमित्यर्थः । निरीक्ष्य = अवलोक्य, सङ्ग्रामे । असंस्तुतेषु=अपरिचितेषु, अकस्माज्जनितेष्वित्यर्थः । भयेषु=भीतिषु, प्रसभं=हठात् सहसेत्यर्थः । मृत्योः यमराजस्य, अपि, पक्षपातः, परिचयः, जायेत = उत्पद्येत । यमस्यापि भयमुत्पद्यते तथाविधं कर्णं विलोक्य तर्हि का कथाऽन्येषामिति भावः ।।२१।।

भावार्थः—कोपेनाधीरः परशुराममाराध्य प्राप्तास्त्रविद्यः कर्णो यदा युद्धे स्थास्यति तदा मृत्युरपि बिभीयात् किमुतान्यः साधारणो जनः ।

समासः—संरम्भेण निरस्तं धैर्यं यस्य सः, तं संरम्भनिरस्तधैर्यम्, आराधितः जामदग्न्यो येन सः, आराधितजामदग्न्यस्तमाराधितजामदग्न्यम् । राधाया अपत्यं पुमान् राधेयस्तं राधेयम् । न संस्तुता असंस्तुतास्तेष्वसंस्तुतेषु, पक्षे पातः पक्षपातः ।। २१ ।।

व्याकरणम् - निरीक्ष्य=निर्+ईक्ष्+क्त्वा+ल्यप् । जायेत-जन्+लिङ् ।।

कोषः—'क्रोधः कोपस्तु संरम्भ' इति कोषः । 'संस्तवः स्यात् परिचय' इत्यमरः । 'प्रसभं तु बलात्कारो हठ' इत्यमरः ।

पदार्थः—संरम्भनिरस्तधैर्यं = क्रोधके कारण छोड़ दिया है धैर्य जिसने ऐसे और आराधितजामदग्न्यं = सेवित किया है परशुरामजीको जिसने ऐसे । राधेयं = कर्णको । निरीक्ष्य = देखकर । मृत्योः अपि = मृत्यु यमराज का भी । असंस्तुतेषु=आचानक अपरिचित । भयेषु=भयोंमें । प्रसभं=हठपूर्वक । पक्षपात । जायेत=हो जावे ।

भावार्थ --क्रोधसे अधीर और परशुरामजीसे अस्त्रविद्या सीखा हुआ कर्ण जब युद्ध में खड़ा होगा तो कभी न डरनेवाला मृत्यु भी उससे डर जायेगा मनुष्यकी तो बात ही क्या होगी ?

विशेष—भीष्म, द्रोण और कर्ण ये तीनों अतिरथ योद्धा कहे जाते थे और दिव्य अस्त्रों का प्रयोग कर सकते थे। दुर्योधनने भी द्रोणाचार्यसे अपनी सेना के शूरोंको गिनाते हुए कहा था—'भवान् भीष्मश्च कर्णश्च'। इसलिए इन तीनों की अजेयता दिखानेके लिए व्यासजी ने इनका उद्धरण दिया है। उनका तात्पर्य है कि अन्य योद्धाओंसे लड़नेकी सामर्थ्य तो तुम लोगोंमें हो सकती है किन्तु इन्हें परास्त करना बिना किसी दिव्य सामर्थ्यके संभव नहीं है। वह दिव्य सामर्थ्य तुम्हें कैसे प्राप्त होगी ? यही बताने मैं आया हूं, यह अगले श्लोक में स्पष्ट है ॥२१॥

यया समासादितसाधनेन सुदुश्चरामाचरता तपस्याम् ।
एते दुरापं समवाप्य वीर्यमुन्मूलितारः कपिकेतनेन ॥ २२ ॥

अन्वयः—यया सुदुश्चरां, तपस्याम्, आचरता, समासादितसाधनेन, कपिकेतनेन, दुरापं वीर्यं, समवाप्य, एते, उन्मूलितारः ॥२२॥

व्याख्या —यया = मन्त्रविद्यया, [ करणेन ]। सुदुश्चराम् = अतिदुष्कराम् तपस्यां - तपश्चर्यां, तपोऽनुष्ठानमित्यर्थः। आचरता= व्यवहारेण, अर्थादिन्द्रादि प्रभृतिदेवानुद्दिश्य तपो विदधतेत्यर्थः। तदनन्तरं, समासादितसाधनेन=संलब्ध युद्धोपकरणेन, प्राप्तपाशुपतास्त्रादिविविधायुधेनेत्यर्थः। कपिकेतनेन = अर्जुनेन दुरापं=सुदुर्लभं, कष्टसाध्यमित्यर्थः। वीर्यम्=पौरुषं, समवाप्य = लब्ध्वा अलौकिकं शौर्यमासाद्येति भावः। एते=दुर्दान्ताः, भीष्मद्रोणकर्णादयो दुर्जयाः पक्षीयाः, उन्मूलितारः =उन्मूलयिष्यन्ते, तां विद्यां दातुमागतोऽस्मीति, पद्येन सम्बन्धः मदुपदिष्टतपोऽनुष्ठानं विना न विजेतुं शक्या एते, अतोऽर्जुनो ऽवश्यं प्रेषणीयस्तपःसम्पादनायेति भावः ॥२२॥

भावार्थः—मद्दत्तया यया विद्ययाऽतिदुष्करां तपश्चर्यामाचरन् ततश्च पाशुपतास्त्रारूपसाधनं प्राप्यार्जुनः दुर्लभवीर्यसम्पदा भीष्मादीनुन्मूलयिष्यति तां विद्यां प्रदातुमुपागतोऽस्मि।

समासः—समासादितं साधनं येन सः, समासादितसाधनस्तेन समासादितसाधनेन। कपिर्हनुमान् केतनं चिह्नं पताकायां यस्य सः, कपिकेतनस्तेन। कपिकेतनेन ॥२२॥

व्याकरणम्—उन्मूलितारः=उद्+मूल्+लुट्। समवाप्य=सम्+अव+आप्+ल्यप् ॥ २२ ॥

कोषः—'निर्वर्तनोपकरणानुव्रज्यासु च साधनम्' इत्यमरः। 'तपः कृच्छ्रादिकर्मसु-' इत्यमरः। 'कपिः-प्लवङ्ग-प्लवग-शाखामृग-वलीमुखा' इत्यमरः। 'पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम्' इत्यमरः ॥२२॥

पदार्थ—यया = जिस विद्या के द्वारा। सुदुश्चरां=अति कठिन। तपस्याम्=तपस्या को। आचरता = करते हुए। समासादितसाधनेन = प्राप्त कर लिए हैं साधन जिसने ऐसे। कपिकेतनेन=अर्जुन से। दुरापं वीर्यं समवाप्य = दुर्लभ सामर्थ्य पाकर। एते उन्मूलितारः=ये नष्ट किए जायेंगे उस विद्या को देने के लिए मैं आया हूं।

भाषार्थ—मेरी दी हुई जिस मन्त्रविद्या के द्वारा दुष्कर तपस्या करके पाशुपतास्त्ररूप साधनको प्राप्त किया हुआ अर्जुन दुष्कर सामर्थ्य पाकर इन्हें नष्ट कर डालेगा उसी विद्या को मैं देने आया हूँ।

विशेष—व्यासजी ने मन्त्र विद्या देकर उसके द्वारा तपस्या से दिव्यास्त्र प्राप्त करने के लिए अर्जुन को चुना। क्योंकि खाण्डवदाह आदि दिव्य सामर्थ्य प्राप्त कर चुके हैं। फिर 'कपिकेतन' इस विशेषण से यह स्पष्ट है कि उनकी ध्वजा में साक्षात् रुद्रावतार हनूमान् स्थित हैं। इसलिए औरों की अपेक्षा उन्हें शीघ्र तथा निश्चित सफलता मिलेगी।

महत्त्वयोगाय महामहिम्नामाराधनीं तां नृप! देवतानाम्।
दातुं प्रदानोचित! भूरिधाम्नीमुपागतः सिद्धिमिवास्मि विद्याम् ॥२३॥

अन्वयः—हे प्रदानोचित! नृप! महत्त्वयोगाय, महामहिम्नां, देवतानाम्, आराधनीं, भूरिधाम्नीं, तां विद्यां[१] सिद्धिम्, इव दातुम्, उपागतः अस्मि ॥२३॥

व्याख्या—हे प्रदानोचित!=हे वितरणयोग्य! नृप!=राजन्!, महत्त्वयोगाय = उत्कर्षलाभाय, महामहिम्नां = श्रेष्ठवतां, देवतानां=देवानाम्,

[१] तृ० किरा०

आराधनीं संसेवनीयाम्, भूरिधाम्नीम्=अतितेजोमतीं, तां=विद्यां, सिद्धिम् इष्टपूर्तिम्, इव, दातुं=वितरितुम्. आगतः=इह समायातः अस्मि=भवा अहमिति शेषः। सिद्धिपक्षे, भूरिधाम्नाम्=अतिप्रभावसाधनानाम्, अनेन नि स्पदं प्रश्नकुतूहलित्वमि'-ति पद्यस्योत्तरं दत्तं व्यासेनेति ॥ २३ ॥

समासः—महत्त्वस्य योगो महत्त्वयोगस्तस्मै महत्त्वयोगाय। महान् महि यासान्ता महामहिमानस्तासां, महामहिम्नाम्। प्रकर्षेण दानस्योचितः प्रदा वितस्तत्सुम्बुद्धौ हे प्रदानोचित! भूरि धाम यस्या सा भूरिधाम्नी, तां भूरि धाम्नीम् ॥ २३ ॥

व्याकरणम्—दातुं=दा+तुमुन्। उपागतः=उ+आ=गम्+क्तः। अस्मि अस् लट् ॥ २२ ॥

कोषः—'वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम्' इत्यमरः 'धा रश्मौ गृहे देहे स्थाने जन्मप्रभावयोः' इत्यमरः। "पुरुहुः पुरु भूयिष्ठं स्फ भूयिश्च भूरि च' इत्यमरः ॥ २३ ॥

पदार्थः—हे प्रदानोचित=(मन्त्रविद्या) देने के योग्य पात्र। नृप राजन्! महत्त्वयोगाय=उत्कर्षलाभ के लिये। महामहिम्नां=अत्यन्त महि शाली। देवतानां=देवताओं को आराधनीं=आराधना करने वाली। भूरिधा अत्यन्त तेजस्विनी। सिद्धिमिव=सिद्धि जैसी। तां विद्यां=उस मन्त्रविद्या दातुं=देने के लिये। (अहम्) उपागतः अस्मि=मैं आया हूं।

भावार्थः—हे राजन्! देवताओं आराधन के बिना मनुष्य का उत् नहीं होता। अतः जिस विद्या से वे देवता प्रसन्न होते हैं, मैं उस प्रभावशालि सिद्धि दायिनी विद्या को देने के लिये आया हूं, क्योंकि तुम उस विद्या योग्य पात्र हो।

विशेष—भारतीय संस्कृति में देवताओं का महत्त्वपूर्ण स्थान है। बि उनकी कृपा के मनुष्य का कल्याण नहीं हो सकता। क्योंकि जैसे मनुष्य स्थूलजगत् के स्वामी है, वैसे ही देवता सूक्ष्मजगत् में जो घटनाएँ घटती वे ही कार्य प्रतिबिम्बरूप से इस स्थूल जगत् में भी होते है। उससे अतिरि स्वतन्त्र रूप से मनुष्य कुछ नहीं कर सकता। इसीलिये अभ्युदयकी अभिला वाले प्रत्येक व्यक्ति को देवताओं की कृपा प्राप्त करनी आवश्यक है गीता

भगवान् ने देवाराधन को मुख्य बताते हुए कहा है—"देवाम्भावयतानेन ते देवा भावयन्तु वः। परस्परं भावयन्तः श्रेयः परमवाप्स्यथ"। इसलिये व्यासजी उस मन्त्र विद्या को देने आये हैं जिसके द्वारा देवताओं की आराधना करके अर्जुन अत्यन्त पराक्रम को प्राप्त करेगा और अजेय भीष्मादि को भी जीत लेगा ॥ २३ ॥

इत्युक्तवन्तं व्रज साधयेति प्रमाणयन्वाक्यमजातशत्रोः।
प्रसेदिवासं तमुपाससाद वसन्निवान्ते विनयेन जिष्णुः ॥ २४ ॥

अन्वयः—जिष्णुः, इति, उक्तवन्तं, प्रसेदिवांसं, तं व्रज, साधय, इति, अजातशत्रोः, वाक्यम्, प्रमाणयन्, अन्ते, इव विनयेन, उपाससाद ॥ २४ ॥

व्याख्या—जिष्णुः=अर्जुनः, इति=पूर्वोक्तपद्यद्वयार्थरूपं, वाक्यम्, उक्तवन्तं= भवितवन्तम्, प्रसेदिवांसं=सुप्रसन्नं, तं=व्यासं प्रति, व्रज=गच्छ, साधय= अनुतिष्ठ, तां विद्यामिति शेषः। इति, अजातशत्रोः=सकलजनहितैषिणः, युधिष्ठिरस्येत्यर्थः। वाक्यं=वचनम्, प्रमाणयन्=स्वीकुर्वन्, अन्ते वसन्, इव=अन्तेवासी इव, छात्र इवेत्यर्थः। विनयेन=नम्रवेषेण, उपाससाद=जगाम यथा छात्रोऽध्ययनायाध्यापकसमीपं गच्छति, तथा व्याससमीपं विद्यालाभायार्जुनो जगामेति भावः ॥ २४॥

भावार्थः—पूर्वोक्तप्रकारेण कथयन्तंव्यासमर्जुनो युधिष्ठिरस्य गच्छ

समासः—न जात इत्यजातः, अजातः शत्रुर्यस्य तस्याजातशत्रोः। २४॥

व्याकरणम्—व्रज=व्रज्+लोट्। साधय=साध्+णिच्+लोट्। प्रमाणयन्=प्र+मान्+णिच्+शतृ। उपाससाद=उप+आ+पद+लिट् ॥ २४ ॥

कोषं—'प्रसेदिवाद् प्रसन्नः स्यानानन्देन समन्वित' इति कोषः। छात्रान्तेवासिनौ शिष्ये-' इत्यमरः। 'जिष्णुरिन्द्रेऽर्जुनेऽन्यस्मिन् जयशीले जनेऽपि च' इति कोषः ॥ २४ ॥

पदार्थ—इति=इस प्रकार। उक्तवन्तं=कहते हुए। प्रसेदिवांसं=प्रसन्न चित्त। तं=व्यासजी को। जिष्णुः अर्जुन। व्रज=जाओ। साधय=सिद्धि करो। इति=ऐसे। अजातशत्रोः=युधिष्ठिर के। वाक्यं=वचन को।प्रमाणयन्=प्रमाण मानता हुआ। अन्तेवसन् इव=छात्र की तरह। विनयेन=नम्रता से। उपाससाद=प्राप्त हुआ।

सिद्धिमनुतिष्ठ' इति वाक्यं प्रमाणयन् विनयेन तथोपससाद यथा कश्चन छात्रः गुरोः समीपं गच्छति ।

भावार्थ—उपर्युक्त वाक्यों को कहकर प्रसन्न चित्त हुए व्यासजी के समीप अर्जुन युधिष्ठिर की आज्ञा से नम्रतापूर्वक और सिधि प्राप्त करो' इस आदेश का पालन करने गये, जैसे कोई छात्र गुरु के समीप जाता है ।

विशेष—अर्जुन ही इस विद्या के पात्र थे । युधिष्ठिर अजातशत्रु जिसका कोई शत्रु उत्पन्न ही नहीं हुआ कहे जाते थे । यद्यपि शत्रुओं से उन्हें इस प्रकार विपत्तियां और त्रास प्राप्त हो रहा था । दूसरे भले ही युधिष्ठिर को अपना शत्रु समझ पर वे किसी के प्रति शत्रुता का भाव नहीं रखते थे इस लिये उन्हें अजातशत्रु कहा जाता था । भीम के प्रति कहे हुए उनके वाक्य और चित्ररथ के द्वारा कौरवों को बाँध लेने पर युधिष्ठिर का अर्जुन के द्वारा उन्हें छुड़ा लेना आदि इनके प्रमाण हैं ॥ २४ ॥

निर्याय विद्याऽथ दिनादिरम्याद्बिम्बादिवार्कस्य मुखान्महर्षेः ।
पार्थाननं वह्निकणावदाता दीप्तिःस्फुरत्पद्ममिवाभिपेदे ॥ २५ ॥

अन्वयः—अथ 'वह्निकणावदाता, (कर्त्री) विद्या, दिनादिरम्यात्, अर्कस्य विम्बाद्, इव, महर्षेः मुखाद्, निर्याय, दीप्तिः, स्फुरत्पद्मम् इव, पार्थाननम् अभिपेदे ॥ २५ ॥

व्याख्या—अथ=व्याससमीपेऽर्जुनगमनानन्तरं वह्निकणावदाता=अग्निदाहधवला, दैवतत्वादिति शेषः । विद्यायोगविद्या, इन्द्रप्रसन्नकरणमन्त्ररूपे त्वयं (कर्त्री) । दिनादिरम्यात् = प्रभातसुन्दराद्, अर्कस्य=सूर्यस्य, 'बिम्बाद्'=मण्डलाद्, इव. महर्षेः=व्यासस्य, मुखाद्=आननात्, निर्याय=निर्गत्य, पार्थाननम्=अर्जुनवदनम् अभिपेदे=प्राप्ता । (यथा) दीप्तिः = सूर्यभाः, स्फुरत्पद्म=विकसितकमलकुसुमम्, इव ॥ २५ ॥

भावार्थः—यथा प्रातः सूर्योदये जाते सूर्यबिम्बान्निर्गता दीप्तिः पद्मं प्रविशति तथैव महर्षिमुखान्निर्गता शुभ्रतमा विद्या पार्थमुखं प्रविवेश ।

समासः—दिनस्यादिः दिनादिस्तस्मिन् दिनादौ रम्यो यस्तस्माद्दिनादिरम्यात् । महांश्चासौ ऋषिर्महर्षिस्तस्य महर्षेः । पृथायाः कुन्त्या अपत्यं पुमान्

पार्थस्तस्य, पार्थस्याननमिति। पार्थाननम् वह्नेः कणा वह्निकणा इवावदाता धवला या सा वह्निकणावदाता। स्फुरच्च तत्पद्मं स्फुरत्पद्मम्॥ २५॥

व्याकरणम्—निर्याय = निर् + या + क्त्वा + ल्यप् अभिपेदे = अभि + पद् + लिट्।

कोषः—'प्रभातोऽह्नर्मुखं कल्ममुषःप्रत्युषसी अपि' इत्यमरः। 'सुन्दरं रुचिरं रम्यं चारु सर्वाङ्गशोभनम्' इति कोषः। 'विकर्तनार्कमार्त्तण्ड-मिहिरारुणपूषणः' इत्यमरः। 'मुखमास्यं च वदनम्' इति कोषः। 'स्युः प्रभा रुग् रुचिस्त्विड्भाश्छवि-द्युति-दीप्तय' इत्यमरः। 'वापुंसि पद्मं नलिनमविन्दं महोत्पलम्' इत्यमर।

पदार्थ—अथ = इसके (अर्जुनके व्यासजीके समीप पहुँचनेके) बाद। वह्निकणावदाता = आगकी चिनगारीसी चमकती हुई। विद्या=इन्द्रका मंत्ररूप विद्या। दिनारम्यात्=दिनके प्रारम्भमें रमणीय। अर्कस्य बिम्बात् इव = सूर्य-मण्डलसे जैसे। महर्षेः मुखात्=व्यासजीके मुखसे। निर्याय=निकलकर। दीप्तिः= प्रभा। स्फुरत्पद्मम् इव=विकसित कमल जैसे। पार्थाननं=अर्जुनके मुखको। अभिपेदे=प्राप्त हुई।

भाषार्थ—अर्जुन ज्योंही व्यासजी समीप पहुँचे त्योंही प्रातःकालीन सूर्य-बिम्बकी तरह दीप्तिमान् व्यासजीके मुखसे दिव्य दीप्तिकी तरह निकलती हुई उज्ज्वल विद्या खिलते हुए कमलके समान पार्थके मुखमें प्रवेश कर गई।

विशेष—जैसे सूर्यकी दीप्ति कमलोंमें जाकर उन्हें खिला देती है ऐसे ही व्यासजीके मुखसे निकली हुई विद्यामें अर्जुनकी आकृति भी खिल उठी, यह तात्पर्य है। प्रत्येक मंत्रका कोई देवता होता है उस मन्त्रको ग्रहण करते समय उस देवताका सान्निध्य होकर उसका तेज उसमें सन्निहित है इसीलिए मंत्र-विद्याको वह्निकणके समान चमकती हुई कहा है॥ २५॥

योगं च तं योग्यतमाय तस्मै तपः प्रभावाद्वितताार सद्यः।
येनास्य तत्त्वेषु कृतेऽवभासे समुन्मिमीलेव चिराय चक्षुः॥ २६॥

अन्वयः—योग्यतमाय, तस्मै, तं योगं, च, तपः प्रभावात्, सद्यः, वितताार। येन, तत्त्वेषु, अवभासे, कृते, अस्य, चक्षुः, चिराय, समुन्मिमीलः इव।

व्याख्या—योग्यतमाय=अर्हपात्रतमाय, तस्मै = अर्जुनाय, तं = पूर्वोक्तं योगं=चित्तनिरोधात्मकं वा, इन्द्रप्रसन्नत्वसम्पादकमुपलक्षं, तपःप्रभावात् =

सुकृतानुभावाद्, अभ्यस्तत्वेनेत्यर्थः। सद्यः=शीघ्रमेव, विततार=ददौ, येन=योगेन, तत्त्वेषु=प्रकृत्यादिषु। अवभासे=प्रत्यक्षे, कृते=विहिते, अर्जुनस्य, चक्षुः=नेत्रं, चिराय=चिरकालं, समुन्मिमील इव=उन्मिमील इव ॥ २६ ॥

भावार्थः--स मुनिरात्मना तपःप्रभावात् सुयोग्यपात्रायार्जुनाय तां मन्त्रविद्यां शीघ्रमेव शिक्षयामास। तत्प्रसादाच्च दिव्यं तत्वज्ञानमवाप्यास्य चक्षुरुद्घाटनसमभवत्।

समासः--अतिशयेन योग्यो योग्यतमस्तस्मै योग्यतमाय। तपसां प्रभावस्तपःप्रभावस्तस्मात् तपप्रभावात् ॥ २६ ॥

व्याकरणम्--विततार = वि + तृ + लिट्। समुन्मिमील = सम् + उत् + मील् + लिट् ॥

कोषः--'योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु'-इत्यमरः। 'सद्य सपदि तत्क्षणे' इत्यमरः। 'लोचनं नयनं नेत्रमिक्षणं चक्षुरक्षिणी' इत्यमरः।

पदार्थ--योग्यतमाय = अत्यन्त योग्य। तस्मै = उस (अर्जुन) के लिए तं योगं = उस योग (मन्त्रविद्या) की। तपःप्रभावात् = तपस्याके प्रभाव सद्यः = तत्काल। विततार = (व्यासजीने) अर्पित किया। येन = जिससे तत्त्वेषु = (प्रकृति आदि २४) तत्त्वोंमें। अवभासे कृते = साक्षात्कार कर लेने पर। अस्य = इस (अर्जुन) के। चक्षुः = नेत्र। चिराय = दीर्घकालके लिए समुन्मिमील इव = खुल जैसे गये।

भावार्थ--व्यासजीने अपनी तपःशक्तिसे सुयोग्य पात्र अर्जुनको शीघ्र उस मंत्रकी शिक्षा दे दी। उस मन्त्रके प्रभावसे प्रकृत्यादि सूक्ष्मतत्वोंका साक्षात्कार हो जाने पर अर्जुनकी आँखें योग के चमत्कार से गईं।

विशेष—तात्पर्य यह है कि जिस मन्त्रका दीर्घकालतक अभ्यास करना पड़ता, वह व्यासजीकी तपस्याके प्रभावसे अर्जुनको शीघ्रही आ गया। उसे प्रकृत्यादि सूक्ष्मतत्वोंकी भी प्रतीति होने लगी, जैसे किसी अन्धेको आँख मिल जाती है उसी प्रकार दीर्घकालके लिए दिव्यदृष्टि प्राप्त हो गई ॥ २६ ॥

आकारमाशंसितभूरिलाभं दधानमन्तःकरणानुरूपम्।
नियोजयिष्यन्विजयोदये तं तपःसमाधौ मुनिरित्युवाच ॥ २७ ॥

अन्वयः—मुनिः, आशंसितभूरिलाभम्, अन्तःकरणानुरूपम्, आकारं दधानं, तं, विजयोदये, तपःसमाधौ, नियोजयिष्यन्, इति, उवाच ॥ २७ ॥

व्याख्या—मुनिः=वेदव्यासः, आशंसितभूरिलाभम् = कथितप्रचुरसंप्राप्तिम् । अन्तकरणानुरूपं = चित्तानुसारम्, आकारम् = मूर्ति, दधानं = धारयन्तं, तम् =अर्जुनं विजयोदये=अरिपराजयफले, तपःसमाधौ=तपोनियमे, नियोजयिष्यन्=लगयिष्यद्, सन्, इति = वक्ष्यमाणं, वचः, वाणीं उवाच=कथयामास ॥ २७ ॥

भावार्थः—महाफलोदयमुत्साहानुगुणव्यापारक्षममाकारं धारयन्तमर्जुनं विजयफलके तपोनियमे प्रवर्तमितुमिच्छन् मुनिः एवं प्रकारेण वक्तुमुपचक्राम ।

समासः—भूरि लाभः भूरिलाभः, आशंसितो भूरिलाभो येन स आशंसितभूरिलाभस्तमाशंसितभूरिलाभम् । अन्तःकरणस्यानुरूपोऽन्तःकरणानुरूपस्तमन्तःकरणानुरूपम् । विजय एवोदयो यस्मिन् स विजयोदयस्तस्मिन् विजयोदये । तपसःसमाधिस्तस्मिंस्तपःसमाधौ ॥ २७ ॥

व्याकरणम्—दधानं=धा+लट्+शानच् । नियोजयिष्यन्=नि+युज+णिच् लृट्+शतृ । उवाच—वच्+लिट् ॥ २७ ॥

कोषः—'समाधिर्नियमे ध्याने नीवाके च समर्थने'—इति विश्वः । 'आकारश्चिस्त्वङ्ग इङ्गितम्' इत्यमरः । 'पुरुहूः पुरु भूयिष्टं स्फारं भूयश्च भूरि इत्यमरः ॥ २७ ॥

पदार्थ—आशंसितभूरिलाम्,=प्रचुर श्रेयःप्राप्तिका सूचक । अन्तःकरणानुरूपं=मनकेअनुरूप । आकारं=स्वरूपको । दधान तं=धारण करते हुए उस (अर्जुन) को । मुनिः—व्यासजी । विजयोदये=विजयरूप फलाप्राप्ति करानेवालों । तपः समाधौ=तपस्यारूप समाधिमें । नियोजयिष्यन् = नियुक्त करते हुए । इति = इस प्रकार । उवाच = बोले ।

भाषार्थ—प्रचुर प्राप्तिकी सूचना देनेवाले और उत्साहके अनुरूप, ही आकारको धारण किये अर्जुनको विजय ही जिसका फल है ऐसी तपस्याकी एकाग्रता में लगाना चाहते हुए व्यासजी ने कहा— ।

बिशेष—यह व्यासजीने देखा कि अर्जुनकी आकृतिसे प्रकट हो रहा है—वह इस महाफलकी प्राप्तिमें समर्थ है और इस कार्यको सिद्ध करनेकी

मनसे उत्साही है, तब विजय देनेवाली तपस्याकी एकाग्रतामें उसे प्रवृत्त क
की इच्छासे उन्होंने कहा यहाँ यही अभिप्राय है।

अनेन योगेन विवृद्धतेजाः निजां परस्मै पदवीमयच्छन्।
समाचराचारमुपात्तशस्त्रो जपोववासाभिषवैर्मुनीनाम् ॥ २

अन्वयः—अनेन, योगेन, विवृद्धतेजाः, निजां, पदवीं, परस्मै, अयच्छ
उपात्तशस्त्रः, जपोपवासाभिषवैः, मुनीनाम्, आचारं, समाचर ॥ २८ ॥

व्याख्या—अनेन = मदुपदिष्टेन, योगेन = योगनियमेन, विवृद्ध
= आकर्षितपराक्रमः 'त्वमिति शेषः। निजां = स्वीयाम्, आधु
पदवीम्=पद्धतिम्, परस्मै=अन्यस्मै शत्रवे, इत्यर्थः। अयच्छन् = अप्र
अपरिचितस्य स्वाश्रये प्रवेशं न ददादित्यर्थः। उपात्तशस्त्रइति = गृहीत
सन्, जपोपवासाभिषवै = जपव्रतस्नानैः, मुनीनां = योगिजनानाम्, आचा
आचरणं, समाचर=अनुतिष्ठ। न हि वने विविधशत्रुसङ्कुलेऽसावधानेन
स्थातव्यमित्याशयः ॥ २८ ॥

भावार्थः—मदुपदिष्टेन योगेन समुपचितवीर्यस्त्वं स्वां पद्धतिमन्य
प्रकटयद् स्वकीयक्षेत्रेऽन्यप्रवेशं निषेधमानो वा आत्मरक्षणाय धृतायुध
मंत्रजपोपवासत्रैकालिस्नानादिभिस्तपः समाचर।

समासः—विवृद्धंतेजो यस्य स विवृद्धतेजाः। उपात्तं शस्त्रं येन स
शस्त्रः। तपश्चोपवासश्चाभिषवश्च जपोपवासाभिषवास्तैर्जपोप
भिषवैः ॥ २८ ॥

व्याकरणम्—अयच्छन्+नञ्+दाण्=लट्=शतृ। समाचर=सम्
कोषः—'योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः 'अयनं
मार्गाध्वपन्थानः पदवी सृतिः' इत्यमरः। 'स्वाध्यायः स्याज्जपः सुत्य
सवनं च सा' इत्यमरः। 'नियमो व्रतमस्त्री तच्चोपवासादिपु
इत्यमरः ॥ २८ ॥

पदार्थ—अनेन=इस (मेरे द्वारा उपदिष्ट)। योगेन=मंत्रसे।
तेजाः=बढ़ गया है तेज जिसका (ऐसे तुम)। निजां पदवीं=अपनी
परस्मै=दूसरेको। अयच्छन्=न देते (बताते) हुए। (आत्मरक्षा के
उपात्तशस्त्रः= ग्रहण करके। जपोपवासाभिषवैः=जप उपवास और स्नान
मुनीनां=मुनियोंके। आचारं=आचरणोंको। समाचर=अच्छी प्रकार कर

भाषार्थ—मेरे दिये हुए योग से अधिक तेजस्वी होकर तुम अपना लक्ष्य किसी को न बताते हुए अपने क्षेत्र में किसी दूसरे को न घुसने देते हुए आत्म-रक्षा के लिये शस्त्रधारण करके जप, उपवास स्थान आदि से मुनियों की भाँति तपस्या करो।

विशेष—'निजां परस्मै पदवीमयच्छन्' इस पद का अर्थ प्रायः टीकाकारों ने यही किया है कि अपने स्थान में किसी दूसरे को न जाने देना अर्थात् अपनी एकाग्रता को भङ्ग न होने देना। हमारे विचार से "अपनी पद्धति किसी दूसरे को न बताते हुए" यह अर्थ उचित है। क्योंकि मन्त्र साधक से कहता है "गोपाय मा शेवधिष्टेऽहमस्मि' (मुझे गुप्त रखो मैं तुम्हारी निधि हूँ)। मन्त्र और उसकी पद्धति दूसरे को वही बना सकता है जिसे मन्त्र सिद्ध हो गया है। व्यासजी ने अर्जुन को मन्त्र दिया, क्योंकि वे सिद्धि प्राप्त कर चुके थे। साधना की अवस्था में ही यदि दूसरे को प्रकट कर दिया जाय तो उसकी शक्ति नष्ट हो जाती है और वह न देनेवाले को फलप्रद होता है। फिर अर्जुन तो जिस इच्छा से तप कर रहे हैं उसे किसी पर प्रकट करें तो सैकड़ों विघ्न उनकी तपस्या में होने लगेंगे। इसीलिये व्यासजी ने उन्हें सावधान किया है॥ २८॥

करिष्यसे यत्र सुदुश्चराणि प्रसत्तये गोत्रभिदस्तपांसि।
शिलोच्चयं चारुशिलोच्चयं तमेष क्षणान्नेष्यति गुह्यकस्त्वाम्॥२९॥

अन्वयः—यत्र, गोत्रभिदः, प्रसत्तये, सुदुश्चराणि, तपांसि, करिष्यसे, तं, चारुशिलोच्चयं, शिलोच्चयम् एष, गुह्यकः, त्वां, क्षणात् नेष्यति॥ २९॥

व्याख्या—यत्र = यस्मिन्, पर्वत इति शेषः। गोत्रभिदः = शक्रस्य प्रसत्तये = प्रसन्नतायै। सुदुश्चराणि = अतिकष्टसाध्यानि, तपांसि = योगाचारात्मकानि, करिष्यसे = आचारयिष्यसि, त्वमिति शेषः। तं = तथोक्तं, चारुशिलोच्चयं = सुरम्यप्रस्तरसमूहं, शिलोच्चयम् = पर्वतम्, इन्द्रकीलसंज्ञकमित्यर्थः। एषः = अयं, वर्तमान इत्यर्थः। गुह्यकः = यक्षः, (कर्त्ता), त्वाम्—अर्जुनं, क्षणात् = सत्वरमेव, नेष्यति = प्रापयिष्यति॥ २९॥

भावार्थः—इंद्रप्रसादकाम्यया यत्र त्वया तपः करिष्यते तत्रायमागतो यक्षः क्षणादेव त्वां नेष्यति।

समासः— गोत्रान् पर्वतान् भिनत्तीति गोत्रभित्, तस्य गोत्रभिदः। शिलानामुच्चयो यत्र स शिलोच्चयस्तं शिलोच्चयम्। चारवः शिलोच्चया यस्मिन् स चारुशिलोच्चयस्तं चारुशिलोच्चयम् ॥ २९ ॥

व्याकरणम्—करिष्यसे = कृ+लृट्। नेष्यति = नी+लृट् ॥ २९ ॥

कोषः—'सुत्रामा गोत्रभृद्वज्री वासवो वृत्रहा वृषा' इत्यमरः। अद्रिगोत्रगिरिग्रावाचलशैल शिलोच्चयाः' इत्यमरः। 'पिशाचो गुह्यकः सिद्धोः भूतोऽमी देवयोनय' इत्यमरः ॥ २९ ॥

पदार्थः—यत्र = जहाँ। गोत्रभिदः = इन्द्र को। प्रसत्तये = प्रसन्न करने के लिये। सुदुश्चराणि=अत्यन्त दुष्कर। तपांसि = तपस्याएँ। करिष्यसे = करोगे। चारुशिलोच्चयं = सुन्दर शिखरों वाले। तं शिलोच्चयं = उस पर्वत में। त्वां=तुमको। एष गुह्यकः = यह यक्ष। क्षणात् नेष्यति = क्षणभर में पहुँचा देगा।

भाषार्थ— इन्द्र को प्रसन्न करने के लिये जहाँ दुष्कर तपस्याएँ करनी हैं उस रम्यशिखरों वाले पर्वत में तुम्हें यक्ष क्षणमात्र में पहुँचा देगा ॥ २९ ॥

इति ब्रुवाणेन महेन्द्रसूनुं महर्षिणा तेन तिरोबभूवे।
तं राजराजानुचरोऽस्य साक्षात्प्रदेशमादेशमिवाधितष्ठौ ॥ ३० ॥

अन्वयः— महेन्द्रसूनुम्, इति, ब्रुवाणेन, तेन, महर्षिणा, तिरोबभूवे राजराजानुचरः, अस्य ( मुनेः, ), साक्षाद् आदेशम्, इव, तं प्रदेशम्, अधितष्ठौ ॥ ३० ॥

व्याख्या - महेन्द्रसूनुम् = अर्जुनम्, इति = एवं, ब्रुवाणेन = कथितवता, तेन = प्रसिद्धेन, महर्षिणा = योगिना, व्यासनेति शेषः। तिरोबभूवे = अन्तर्दधे। व्यासः स्वस्थानं प्रस्थित इत्याशयः। अथ तदानीं राजराजानुचरः = कुबेरभृत्यः, यक्ष इत्यर्थः। अस्य = व्यासस्य, मुनेः, साक्षात् = देहवान्, आदेशमिव = अनुशासनमिव, तम् = अर्जुनाध्युषितम्, प्रदेशं = स्थलविशेषम्, अधितष्ठौ=प्राप्तः, गतौ न विलम्बो जात इति ॥ ३० ॥

भावार्थः—एवमुक्त्वा महामुनावन्तर्हिते सति तत्क्षणमेव यक्षस्तत्र तथा समुपस्थितो यथा मुनेराज्ञेव मूर्तिमती समुपस्थितेति।

समासः—महांश्चासाविन्द्रो महेन्द्रस्तस्य महेन्द्रस्य सूनुर्महेन्द्रसूनुस्तं महेन्द्रसूनुम् । महांश्चासावृषिमहर्षिस्तेन महर्षिणा, राज्ञां राजा राजराजः, तस्य राजराजस्यानुचरः राजराजानुचरः ।। ३० ।।

व्याकरणम्—ब्रुवाणेन = ब्रू+लट्+शानच् । तिरोबभूवे=तिरस्+भू+भावे लिट् । अधितष्ठौ=अधि+ष्ठा+लिट् ।। ३० ।।

कोषः—'आत्मजस्तनयः सूनू सुतः पुत्र' इत्यमरः । मनुष्यधर्मा धनदो राजराजो धनाधिप' इत्यमरः । 'अनुप्लवः सहायश्चानुचरोऽभिसरः समाः" इत्यमरः ।।

पदार्थः—महेन्द्रसूनुम् = अर्जुन को । इति ब्रुवाणेन = ऐसा कहते हुए । महर्षिणा = व्यासजी । तिरोबभूवे = अन्तर्धान हो गये ( और ) राजराजानुचरः = कुवेर का सेवक ( यक्ष ) । अस्य = व्यासजी के । साक्षात्=प्रत्यक्ष । आदेशमिव = आज्ञाकी तरह । तं प्रदेशं = उस स्थान में । अधितष्ठौ = उपस्थित हो गया ।

भाषार्थ—इतना कहकर व्यासजी अन्तर्धान हो गए और तत्काल यक्ष वहाँ ऐसे उपस्थित हो गया मानो व्यासजी के मुँह से निकलते ही उनका आदेश रूप स्वयं वह आ गया हो ।। ३० ।।

कृतानतिर्व्याहृतसान्त्ववादे जातस्पृहः पुण्यजनः सः जिष्णौ ।
इयाय सख्याविव सम्प्रसादं विश्वासयत्याशु सतां हि योगः ।। ३१ ।।

अन्वयः—कृतानतिः, व्याहृतसान्त्ववादे, जिष्णौ, जातस्पृहः, सः, पुण्यजनः सख्यौ, इव, सम्प्रसादम्, इयाय । हि, सतां, योगः, आशु, विश्वासयति ।।३१।।

व्याख्या—कृतानतिः=कृतप्रणामः व्याहृतसान्त्ववादे=प्रोक्तप्रियवचने, मृदुकथनशिले— इत्यर्थः । जिष्णौ=जयशीले अर्जुने, जातस्पृहः=उत्पन्नानुरागः, सः=अर्जुनमार्गदर्शकः पुण्यजनः=यक्षः सख्यौ=मित्रे, इव, सम्प्रसादं=विश्वासम् इयाय=प्राप, हि=यतः सतां=सज्जनानां. योगः=सङ्गतिः, आशु=शीघ्रं विश्वासयति=विश्वासं जनयति ।। ३१ ।।

भावार्थः—समेत्य कृतनमस्कारो यक्षोऽर्जुनस्य प्रियसम्भाषणेन मित्र इव तस्मिन् कृतसौहार्दः सन् विश्वासमवाप यतोहि सज्जनसंसर्गाः-शीघ्रमेव विश्वासं जनयन्ति ।

समासः—कृता आनतिर्येन सः कृतानतिः । सान्त्वस्य वादः सान्त्व व्याहृतः सान्त्ववादो येन स व्याहृतसान्त्ववासस्तस्मिन् व्याहृतसान्त्ववादे । जा स्पृहा यस्य स जातस्पृहः ॥ ३१ ॥

व्याकरणम्—इयाय = इण् + लिट् । विश्वासयति = वि + श्वस + णि लट् ॥ ३१ ॥

कोषः—'साम सान्त्वमुभे समे' इत्यमरः । स्पृहाऽभिलाषा वाञ्छा इति कोषः । यक्षैकपिङ्गैलविलश्रीदपुन्यजनेश्वरा' इत्यमरः । 'अथ मित्रं सखा सुहृद्' इत्यमर ॥ ३१ ॥

पदार्थ—सः पुण्यजनः = वह यक्ष । कृतानतिः = प्रणाम करके । जात =अनुराग उत्पन्न हुआ सा । व्याहृतसान्त्ववादे=प्रियवचन जिससे कहे ऐसे । जिष्णौ=अर्जुन में । सख्यौ इव=मित्र में जैसे। सम्प्रसाद=प्रसन्नता इयाय = प्राप्त हुआ । हि=क्योंकि । सतां योगः = सज्जनों का संयोग । शीघ्र ही । विश्वायति = विश्वास उत्पन्न कर देता है ।

भावार्थ—वहां आकार यक्ष ने प्रणाम किया और शान्तिमय प्रियव से उसे शीघ्र ही मित्र की तरह उस पर विश्वास हो गया, क्योंकि सज्ज संसर्ग से शीघ्र ही विश्वास हो जाता है ॥ ३१ ॥

अथोष्णभासेव सुमेरुकुञ्जान्विहीयमानानुदयाय तेन ।
वृहद्द्युतीन्दुःखकृतात्मलाभं तमः शनैः पाण्डुसुतान्प्रपेदे ॥

अन्वयः—अथ उष्णभाषा, उदयाय, विहीयमानान्, बृहद्द्युतीन्, कुञ्जान्, इव, तेन ( विहीयमानान् वृहद्द्युतीन् ) पाण्डुसुतान्, दुःखकृतात्म तमः, शनैः प्रपेदे ॥ ३२ ।

व्याख्याः—अथ = युधिष्ठिरसमीपादर्जुनस्य गमनानन्तरं, उष्णभा सूर्येण, उदयाय = समुदयलाभाय, विहीयमानान् = परित्यज्यमानान् बृहद्यु काञ्चनवर्णान्; अतितेजोवतः सुमेरुकुञ्जान् . काञ्चनगिरिलतागुल्मान् इव, अर्जुनेन, उदयाय = कल्याणाय शत्रुपराजयार्थमित्यर्थः । विहीयमानान् = मानान्, वृहद्द्युतीन् = अतिविक्रमवतः, पाण्डुसुतान् = युधिष्ठिरभीमनकुल नित्यर्थः । दुःखकृतात्मलाभं = क्लेशवशजनिततम=अन्धकारः शोकम्, शनैः मन्दं मन्द, क्रमशः, प्रपेदे = प्राप ।

भावार्थः—पुनरुदयायांस्तगतेन सूर्येण परित्यक्तेषु सुमेरुकुञ्जेषु यथा शनैः शनैरन्धकारः प्रविशति। तथैव यक्षेण सह तपोऽर्थं गतेनार्जुनेन विरहितानां पाण्डुनां मनःसु मन्युः समाविदेश।

समासः—उष्णा भासो यस्य स उष्णभास्तेनोष्णभासा। सुमेरोः कुञ्जाः सुमेरुकुञ्जास्तान् सुमेरुकुञ्जान्। वृहती द्युतिर्येषां ते वृहद्द्युतयः तान् वृहद्द्युतीन्। आत्मनो लाभः आत्मलाभः। दुःखेन कृत आत्मलाभो येन तद् दुःखकृतात्मलाभम्। पाण्डोः सुताः पाण्डुसुतास्तान्॥ ३२॥

व्याकरणम्—प्रपेदे=प्र+पद+लिट्॥ ३२॥

पदार्थ—अथ=यक्ष के आ जाने के बाद। उष्णभाषा=सूर्य से। उदयाय=उदय के लिये। विहीतमानान्=छोड़े जाते हुए। वृहद्द्युतीन्=अत्यन्त चमकते हुए। सुमेरुकुञ्जान्=सुमेरुपर्वत की झाड़ियों को (तमः इव=अन्धकार की तरह)। तेन=अर्जुन से। विहायमानान्=छोड़े जाते हुए। पान्डुसुतान्=पाण्डवों को। दुःखकृतात्मलाभ=विरहजन्य दुखः से हुई है उत्पत्ति जिसकी ऐसा। मन्युः=शोक। शनैः=धीरे-धीरे। प्रपेदे=प्राप्त हुआ।

भाषार्थ—दूसरे दिन फिर उदय होनेके लिये पहिले दिन अस्त होता हुआ सूर्य ज्यों-ज्यों सुमेरुपर्वतकी सुनहरी झाड़ियोंको छोड़ता जाता है त्यों त्यो उनमें अन्धकार व्याप्त होता चलता है। इसी प्रकार सिद्धि प्राप्त करने के लिये भाईयोंको छोड़कर ज्यों ज्यों अर्जुन, यक्षके साथ आगे बढ़ने लगे, त्यों-त्यों पाण्डवोंको उनके वियोगका दुःख घेरने लगा॥ ३२॥

असंशयालोचितकार्यनुन्नः प्रेम्णा समानीय विभज्यमानः।
तुल्याद्विभागादिव तन्मनोभिर्दुःखातिभारोऽपि लघुः स मेने॥३३॥

अन्वयः—असंशयालोचितकार्यनुन्नः, प्रेम्णा, समानीय, विभज्यमानाः, सः, दुःखातिभारः, अपि, तन्मनोभिः, तुल्याद्, विभागाद् इव, लघुः मेने।

व्याख्या—असंशयालोचितकार्यनुन्नः = निश्चयविचारितकृत्यवच्छिन्नः। प्रेम्णा = भ्रातृसौहार्देन। समानीय = गृहीत्वा, विभज्यमानः = विभागीकृतः, सः = अर्जुनविरहजातः, दुःखातिभारः = शोकातिभारः, अपि, तन्मनोभिः = युधिष्ठिरप्रभृतिचित्तैः, तुल्यात् = समानात्, विभागात् = खण्डाद्, इव, लघुः,

स्वल्पः, मेने । यथा किमपि गुरु वस्तु केनचिद्धस्त्रेण बाहकजनसङ्ख्यासमं खण्डं कृत्वा, प्रत्येकजनेभ्यो दत्तं सद्वहनयोग्यं जायते ।

भावार्थः—यथा बहवो वहनसाध्यमेकीभूतं महान्तमपि भारमनेकधा विभज्य लघुं मन्यन्ते तथैवाऽयमपि भ्रातृविरहजन्यदुःखातिभारश्चतुर्भिरेव स्वस्वेन विभक्तसमानस्नेहत्वात् । अतस्तन्मनोभिः स लघुरेव मेने ।

समासः—न संशयो विद्यते यत्र तदसंशयम्, असंशयम् आलोचितं कार्यं तदसंशयालोचितकार्यं, तेनासंशयालोचितकार्येण नुन्न इत्यसंशयालोचितकार्यनुन्नः । तेषां मनांसि तन्मनांसि तैस्तन्मनोभिः । दुःखस्यातिभारः दुःखातिभारः ॥

व्याकरणम्—विभज्यमानः = वि+भज्+यक्+लट्—शानच् । समानीय = सम्+आ+नी+ल्यप् । मेने = मन्+लिट् ॥ ३३ ॥

कोष—'ध्रुवो प्रभेदे, क्लीवं तु निश्चिते शाश्वते त्रिषु' इत्यमरः । 'प्रेमा ना प्रियता हार्दं प्रेम स्नेहोऽथ दोहदम्' इत्यमरः । 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मन' इत्यमरः ।

पदार्थ—असंशयोलोचितकार्यनुन्नः = निस्सन्देह होकर विवेचित जो शत्रुजयरूप कार्य उससे निरस्त हुआ । ( और ) प्रेम्णा = भातृ स्नेहसे । समानीय = आकृष्ट करके । विभज्यमानः = विभक्त किया गया । स = वह । दुःखातिभारः अपि = दुःखका बड़ा भार भी । तन्मनोभिः = उनके मनसे । तुल्याद्विभज्यमान इव = समानरूपसे बाँटा गया सा । लघुः मेने = हल्का समझा गया ।

भाषार्थ—जैसे कोई भारी बोझ अनेक भागोंमें बाँट दिया जाय तो वहन करनेवालोंको हल्का मालूम होता है ऐसे ही अर्जुनके विरहका भारी दुःख चारों भाईयों द्वारा समानरूपसे बाँट लेनेसे हलका प्रतीत होने लगा क्योंकि वे विवेकशील थे और शत्रुजयरूप कार्यके गौरवको समझते थे ॥ ३३ ॥

धैर्येण विश्वास्यतया महर्षेस्तीव्रादरातिप्रभवाच्च मन्योः ।
वीर्यं च विद्वत्सु सुते मघोनः स तेषु न स्थानमवाप शोकः ॥ ३४ ॥

अन्वयः—धैर्येण, महर्षेः, विश्वास्यतया, अरातिप्रभावाद्, तीव्राद् मन्योः (हेतोः) मघोनः, सुते, वीर्यं, विद्वत्सु, तेषु, सः, शोकः स्थानं, न, अवाप ॥

व्याख्या —धैर्येण = धीरतया, हेतुनेति शेषः । इदं महतां लक्षणं, तथोक्तं नीतौ–'विपदि धैर्यमथाभ्युदये क्षमा' इत्यादि । धैर्यवतां लक्षणन्तु कुमारसम्भवे– विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः ।' इति । महर्षेः = व्यासस्य, विश्वास्यतया = श्रद्धेयवाक्यतया, न कदाऽपि व्यासोद्योगो विफलो भवतीति हेतोर्मानेनोद्योगेन ध्रुवं जयलाभो भविष्यतीति हेतोः । अरातिप्रभवाद् = शत्रुप्रभावात्, तीव्राद् = दारुणाद् अतिदुःसहादित्यर्थः । मन्योः = क्रोधाद् वा, दैन्यात् कारणाद्. मघोनः = इन्द्रस्य, सुते = पुत्रे, अर्जुन इत्यर्थः । वार्यं· पराक्रमं, विद्वत्सु = ज्ञातवत्सु, तेषु = युधिष्ठिरप्रभृतिभ्रातृषु, सः = अर्जुनविरहोत्पन्नः, शोकः = दुःखं, स्थान = स्थित्यर्थस्थलं, न, अवाप = न प्राप, भाविशुभफललाभमनोरथेन शोकमग्नास्ते बभूवुरिति भावः ।

भावार्थः—आत्मनो नैसर्गिकधीरतया, महर्षि प्रति विश्वासेन, वैरिजनितक्रोधेन च अर्जुनपराक्रमं जानन्तस्ते तदानीं शोकेनाक्रान्ता न बभूवुः ।

समास—अरातिः प्रभव उत्पत्तिस्थानं यस्य स अरातिप्रभवः तस्मादरातिप्रभवात् ॥ ३४ ॥

व्याकरणम्—विद्वत्सु = विद्+लट्+शतृ, तस्य वस्वादेशः । अवाप = अव+आप्+लिट् ॥ ३४ ॥

कोषः—'चित्तस्थैर्यं धृतिर्धैर्यं तुष्टिस्तोष इति स्मृत' इति कोषः । 'तीव्रैकान्तनितान्तानि गाढबाढदृढानि च' इत्यमरः । 'अभिघाति–पराप्रति–त्यर्थिपरिपन्थिन' इत्यमरः । 'आत्मजस्तनयःसूनुः सुतः पुत्र' इत्यमरः । 'इन्द्रो मरुत्वान्मघवा विडौजाः पाकशासनः' इत्यमरः ॥ ३४ ॥

पदार्थ—धैर्येण = स्वभावतः धैर्यशाली होनेसे । महर्षेः विश्वास्यतया = व्यासजीपर विश्वास होनेसे । तीव्रात् = अत्यन्त । अरातिप्रभावात् = शत्रुओंसे जन्य । मन्योः च = क्रोधसे और । मघोनः सुते = इन्द्रपुत्र (अर्जुन) में (स्थित) । वीर्यं = पराक्रमको । विद्वत्सु = जानते हुए । तेषु = उन पाण्डवोंमें । शोकः = (भ्रातृ विरहजन्य) शोक । स्थानं न अवाप = स्थान न पा सका ।

भाषार्थ—अपने स्वाभाविक धैर्यसे महर्षि व्यास पर विश्वास होने से, शत्रुओं पर क्रोध होने से और अर्जुन के पराक्रम का पूर्ण ज्ञान होनेसे पाण्डवों को भ्रातृवियोगजन्य दुःख उतना नहीं व्याप्त हो सका ॥ ३४ ॥

तान्भूरिधाम्नश्चतुरोऽपि दूरं विहाय यामानिव वासरस्य।
एकौघभूतं तदशर्म कृष्णां विभावरीं ध्वान्तमिव प्रपेदे ॥ ३५॥

अन्वयः—एकौघभूतं, तद्, अशर्म, भूरिधाम्नः चतुरः, अपि, तान्, वासरस्य यामान्, इव, दूरं, विहाय, ध्वान्तं, विभावरीम्, इव, कृष्णां, प्रपेदे ॥३५॥

व्याख्या—एकौघभूतम्=एकीभूतं, तद् = अर्जुनविरहजातम्, अशर्म= अकल्याणं, दुःखमित्यर्थः (कर्तृ) भूरिधाम्नः=महातेजसः, चतुरः = चतुःसङ्ख्याकान्, युधिष्ठिरभीमनकुलसहदेवान् इत्यर्थः। तान् = पाण्डवान्, भूरिधाम्नः=परमप्रकाशान्, वासरस्य=दिवसस्य, यामान्=प्रहरान्, इव, दूरं विहाय=दूरं त्यक्त्वा, ध्वान्तम्=अन्धकारः, विभावरीं=रजनीं, रात्रि। इव, कृष्णां= द्रौपदीम्, प्रपेदे=प्राप। तत्र यथा दिनप्रथमयामः शान्तस्तथैव युधिष्ठिरः यथा द्वितीयतृतीयौ दुःसहौ तथैव भीमनकुलौ मल्लौ, चतुर्थे इव शान्तः सहदेव आसीत, सर्वेभ्यः शान्ता घोरदुःखान्धकारवती रात्रिरूपा द्रौपदी, वर्णेन कृष्ण वर्णाऽऽसीत् ॥

समासः—भूरि धाम येषां ते भूरिधामानस्तान् भूरिधाम्नः। एक ओघः एकौघः, अनेकौघ एकौघभूतं तदेकौघभूतम् न शर्म अशर्म ॥ ३५ ॥

भावार्थः—यथाऽतिप्रकाशयुक्तान् दिवसस्य चतुरः प्रहरान् विहायान्धकारराशीभूतः सन् रात्रि व्याप्नोति तथैवातितेजस्विनस्तान् चतुरः पाण्डवान् विहाय तदपि दुखं सर्वं द्रौपदीमेवाभिव्याप्तम्। तद्विरहेण साऽत्यन्तं व्याकुलोऽभवदिति भावः।

व्याकरणम्—विहाय=वि+हा+क्त्वा+ल्यप्। प्रपेदे=प्र+पा+लिट्।

कोषः—'धाम रश्मौ गृहे वित्ते' इति कोषः। 'द्वौ यामप्रहरौ' इत्यमरः। 'घस्रो दिनाहनी वा तु क्लीवे दिवसवासरौ' इत्यमरः 'शर्म-शातसुखानि च' इत्यमरः। 'विभावरीतमस्विन्यौ रजनी यामिनी तमो' इत्यमरः अन्धकारोऽस्त्रियां ध्वान्तं तमिस्त्रं तिमिरं तम' इत्यमरः ॥ ३५ ॥

पदार्थ—तद अशर्म=वह दुःख। भूरिधाम्नः=अत्यन्त तेजस्वी। चतुरः अपि=उन चारों को ही। वासरस्य=दिन के। (अत्यन्त चमकते चार) यामानिव=प्रहरों की तरह। दूरं विहाय=बिलकुल छोड़कर। एक

ूतं=इकट्ठा हुआ। ध्वान्तं=अन्धकार। विभावरीमिव=रात्रि को जैसे। कृष्णां=
ौपदी को। प्रपेदे=प्राप्त हुआ।

भावार्थ—जैसे प्रकाश से चमकते हुए दिन के चार प्रहरों को छोड़कर
न्धकार इकटठा होकर रात को ढक लेता है उसी प्रकार अत्यन्त तेजस्वी उन
ारों भाईयों को छोड़कर सारा दुःख द्रौपदी को ही घेर लिया। अर्थात् भाई
ो विवेकी और तेजस्वी होने से दुःख को सह लिये किन्तु द्रौपदी अत्यन्त
याकुल हो गई॥ ३५॥

तुषारलेखाऽऽकुलितोत्पलाभे पर्यश्रुणी मङ्गलभङ्गभीरुः।
अगूढभावाऽपि विलोकने सा न लोचने मीलयितुं विषेहे॥ ३६॥

अन्वयः—अगूढभावा अपि, मङ्गलभङ्गभीरुः सा, (द्रौपदी) विलोकने,
ुषारलेखाऽऽकुलितोत्पलाभे, पर्यश्रुणी, लोचने मीलयितुं न विषेहे॥ ३६॥

व्याख्या—अगूढभावाऽपि=व्यक्ताशयाऽपि, मुखदर्शनेनैव हृद्ध्यातिविरह-
यथा लभ्यत इत्यर्थः मङ्गलभङ्गभीरुः=सिद्धिविघ्नभीता, सा=द्रौपदी, विलो-
कनेन=अर्जुनावलोकनेन, तुषारलेखाऽऽकुलितोत्पलाभे=हिमकणपूर्णकमलोपमे,
र्यश्रुणी=वाष्पपूरिते, लोचने, मीलयितुं=सङ्कोचयितुं, न विषेहे=न शशाक,
ेत्रपुटसम्पुटीकरणेनाश्रुपातस्य नियतत्वाद्विकसित एव नयने रक्षिते द्रौपद्यपीति
ाव:॥ ३६॥

भावार्थः-सा द्रौपदी दर्शने स्पष्टाभिप्रायाऽपि मङ्गलहानेराशङ्कयाऽश्रु-
रिपूरिते तुषारलेखायुतेन्दीवरसदृशे लोचने मीलयितुं न शशाक।

समासः—तुषारस्य लेखास्तुषारलेखास्ताभिराकुलिते उत्पले, ते तुषार-
लेखाऽऽकुलितोत्पले तयोराभा इव आभा ययोस्ते तुषारलेखाऽऽकुलितोत्पलाभे।
रिगते अश्रुणी ययोस्ते पर्यश्रुणी। मङ्गलस्य भङ्गो मङ्गलभङ्गस्तस्माद्भी-
र्भङ्गभीरुः। न गूढः अगूढः भावो यस्याः साऽगूढभावा॥ ३६॥

व्याकरणम्—मीलयितुं=मील्+णिच्+तुमन्। विषेहे=वि+षह=लिट्॥

कोषः—'भावो लीला क्रिया—चेष्टा—भूत्यभिप्रायजन्तुषु इति वैजयन्ती।
'वीथ्यालिरावलिः पङ्क्तिः श्रेणीलेखास्तु राजयः' इत्यमरः। 'स्यादुत्पलं कुवलयम्'
इत्यमरः।

श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्' इत्यमरः। 'लोचनं नयनं नेत्रम्' इत्यमरः ॥ ३६ ॥

पदार्थ—सा=वह ( द्रौपदी )। विलोकने=देखने में। अगूढभावाऽपि=स्पष्ट हो रहा है अभिप्राय जिसका, ऐसी भी। मङ्गलभङ्गभीरुः=अमङ्गल की आशंका से डरती हुई। पर्यश्रुणी=आँसू से भरे हुए। तुषारलेखाऽऽकुलितोत्पले=पालेसे मुरझाये हुए इन दो वर की सी आँखवाले। लोचने = नेत्रों को। मीलयितुं = बन्द करने के लिये (पलक झपाने में)। न विषेहे=समर्थ नहीं हुए।

भाषार्थ—देखनेमें जिसका अभिप्राय स्पष्ट हो रहा है ऐसी वह द्रौपदी कहीं अमङ्गल न हो इस डर से ओसकी बूँदों से पूर्ण कमलों जैसे आँसू भरे नेत्रों को वन्द न कर सकी।

विशेष—अर्जुन को प्रस्थान करते देख द्रौपदी विह्वल हो उठी। उसकी आँखों में आँसू भर हैं, किन्तु वह इस डर से पलक नहीं लगाती कि कहीं पलक झपाने में आँसू की बूँद टपक पड़ी तो अमङ्गल हो जायगा क्योंकि यात्राके समय अश्रुपात होनेसे अमङ्गल होता है। इसलिये वह आँसुओं को आँखोंमें ही रोके है और उस समय उसकी आँखें ऐसी लग रही है, जैसे कमलपर ओसपड़ी हो। इस प्रकार स्वभावोक्ति का अच्छा चित्र उपकल्पित है।

अकृत्रिमप्रेमरसाभिरामं रामाऽर्पितं दृष्टिविलोभि दृष्टम्।
मनःप्रसादाञ्जलिना निकामं जग्राह पाथेयमिवेन्द्रसूनुः ॥ ३७ ॥

अन्वयः—इन्द्रसूनुः मनःप्रसादाञ्जलिना, अकृत्रिमप्रेमरसाभिरामं, रामाऽर्पितं दृष्टिविलोभि, दृष्टं, पाथेयम्, इव, निकामं, जग्राह ॥ ३७ ॥

व्याख्या— इन्द्रसूनुः =अर्जुनः, मनःप्रसादाञ्जलिना = चिदानन्दाञ्जलिना, अकृत्रिमप्रेमरसाभिरामं=स्वाभाविकस्नेहरसरमणीयं, नहि कपटप्रेमसुन्दरमित्यर्थः। रामाऽर्पितं = रमणीप्रदत्तं, द्रौपदीवितीर्णमित्यर्थः। दृष्टिविलोभि=नेत्राह्लादकं। दृष्टं=दर्शनं, द्रौपद्या इति शेषः। पाथेयम्=मार्गोपयोगिवस्तुजातं। निकामं= यथेष्टं, जग्राह =गृहीतवान्। यात्रासमये स्त्रीदत्तं पाथेयं, शुभोदर्कं भवति ॥ ३७ ॥

भावार्थः—यथा कश्चन यात्रायां जिगमिषुः मधुरादिरसपूर्णं शम्बलं रमण्या प्रदत्तमञ्जलिना गृह्णाति तथैवार्जुनेन नैसर्गिकेण प्रेम्णा पूरितं सुदर्शनं तद्दर्शनं प्रसन्नेन चेतसा जगृहे ।

समासः—क्रियया निर्वृत्तः कृत्रिमः, न कृत्रिमः, अकृत्रिमः, अकृत्रिमो यः प्रेमा, स अकृत्रिमप्रेम तस्य यो रसः स अकृत्रिमप्रेमरसस्तेनाभिरामं यत् तदकृत्रिमप्रेमरसाभिरामम् । रामयाऽर्पितं रामाऽर्पितम् । दृष्टिं विलोभयतीति दृष्टिविलोभि । मनसः प्रसादो मनःप्रसादः स एवाञ्जलिरिति मनःप्रसादाञ्जलिः तेन मनःप्रसादाञ्जलिना ॥

व्याकरणम्—जग्राह = ग्रह+लिट् ॥ ३७ ॥

कोषः—'प्रेमा ना प्रियता हार्दं प्रेम स्नेहोऽथ दोहदम्' इत्यमरः । 'दृग्दृष्टी चक्षुर्नेत्राम्बु' इत्यमरः । 'तौ युतावञ्जलिः पुमान्' इत्यमरः । 'पाथेयं शम्बलं मार्गे भोग्यपेयादिकञ्च यत्–, इति कोषः ॥ ३७ ॥

पदार्थ—इन्द्रसूनुः=अर्जुन । अकृत्रिमप्रेमरसाभिरामं-स्वाभाविक प्रेमरससे रमणीय । रामार्पितं-रमणीसे दिये हुए । दृष्टिविलोभिः=आँखोंको लुभानेवाले । दृष्टं = ( उस ) दर्शनको । मनःप्रसादाञ्जलिना = मनकी प्रसन्नतारूप अंजलिसे ( अकृत्रिमप्रेमरसाभिरामं = नैसर्गिक प्रेमकी भाँति मधुरादि रसोंसे पूर्ण । रामार्पितं = स्त्री द्वारा दिये हुए । दृष्टिविलोभि = देखनेमें सुन्दर ) । पाथेय-मिव=शम्बलकी तरह । जग्राह=ग्रहण करता था ।

भाषार्थ—जैसे कोई यात्राको जाता हुआ मधुर शम्बल (मार्गका कलेवा) स्त्रीका दिया हुआ अञ्जलिसे लेता है ऐसे ही अर्जुनने स्वाभाविक प्रेमरससे परिपूर्ण मनोहर द्रौपदीके स्निग्ध दर्शन से प्रसन्न चित्तरूप पाथेय को अञ्जलिसे ग्रहण किया ।

विशेष—यात्राके लिये प्रस्थान करते समय अपने स्त्रीके हाथसे दिया हुआ सम्बल ( चबैना ) यात्राको सुखद बनाता हैं, यह प्राचीन परम्परा है । आज भी पूर्वांचलके लोगोंमें यह प्रथा विद्यमान है कि यात्राके समय स्त्री कुछ न कुछ पतिके हाथमें अवश्य देती है ॥ ३७ ॥

धैर्यावसादेन हृतप्रसादा वन्यद्विपेनेव निदाघसिन्धुः ।
निरुद्धबाष्पोदयसन्नकण्ठमुवाच कृच्छ्रादिति राजपुत्री ॥ ३८ ॥

अन्वयः— वन्यद्विपेन, निदाघसिन्धुः इव, धैर्यावसादेन, हृतप्रसादा, राजपुत्री, निरुद्धबाष्पोदयसन्नकण्ठ ( यथा स्यात्तथा ), कृच्छ्राद्, इति उवाच ।३८

व्याख्या— वन्यद्विपेन = जाङ्गलेन, अशिक्षितेनापालकेनेत्यर्थः । निदाघसिन्धुः = ग्रीष्मनदी, इव, धैर्यावसादेन = धृतिध्वंसेन हेतुना, हृतप्रसादा= दूरीकृतानन्दा, वा नदीपक्षे अपगतनैर्मल्या, उन्मथितेति यावत् । राजपुत्री = द्रुपदनृपसुता, द्रौपदीति शेषः । निरुद्धबाष्पोदयसन्नकण्ठम्=अन्तर्गताश्रुपूरव्याप्तगलविवरं, यथा स्यात्तथा, कृच्छ्रात्=कष्टात्, कथं कथमपीत्यर्थः । इति=वक्ष्यमाणं वचः, उवाच = उक्तवतीति ।। ३८ ॥

भावार्थः—यथोच्छृङ्खलेन वन्यकरिणा दुर्बला ग्रीष्मसरिन्मलिनीक्रियते तथैव शत्रुकृतेन दुर्व्यवहारेणात्यन्तं क्षुब्धहृदया द्रौपदी बाष्परुद्धकण्ठा सती कथञ्चिदात्मानं स्थिरीकृत्य वक्ष्यमाणमुवाच ।

समासः— धैर्यस्यावसादो धैर्यावसादस्तेन धैर्यावसादेन । हृतः प्रसादो यस्याः सा हृतप्रसादा । वने भवो वन्यः वन्यश्चासौ द्विपो वन्यद्विपस्तेन वन्यद्विपेन । निदाघस्य सिन्धुर्निदाघसिन्धुः । निरुद्धाश्च ते बाष्पा निरुद्धबाष्पास्तेषामुदयो निरुद्धबाष्पोदयः, तेनय सन्नः कण्ठो यस्मिंस्तद् निरुद्धबाष्पोदयसन्नकण्ठम् । राज्ञः पुत्री राजपुत्री ॥ ३८ ॥

व्याक०— उवाच=वच+लिट् ॥ ३८ ॥

कोषः—'प्रसादस्तु प्रसन्नता' इत्यमरः । 'दन्ती दन्तावलो हस्ती द्विरदोनेकपो द्विप' इत्यमरः । 'ग्रीष्म ऊष्मकः निदाघ उष्णोपगम'—इत्यमरः । 'देशे नद विशेषेऽब्धौ सिन्धुर्ना सरित् स्त्रियाम्' इत्यमरः । 'कण्ठो गलोऽथ ग्रीवायाम्' इत्यमरः ॥

पदार्थ—वन्यद्विपेन = जंगली हाथीसे । निदाघसिन्धुः इव=ग्रीष्मकालीन नदी जैसे । ( हृतप्रसादा=मलिन की जाती है, ऐसे ही ) धैर्यावसादेन= धैर्य नष्ट होनेसे । हृतप्रसादा क्षोभको प्राप्त की हुई । राजपुत्री द्रौपदी । निरुद्धबाष्पो-

दयसन्नकण्ठं=रोके हुए आँसुओंके उमड़नेके कारण गला रुँध जानेसे। कृच्छ्राद्=बड़ी कठिनतासे। इत्युवाच=वह बोली।

भाषार्थ— जैसे उद्दण्ड जंगली हाथी निर्मल ग्रीष्मकालीन पतली धारवाली नदीको गंदली कर देता है उसी प्रकार शत्रुकृत दुर्व्यवहारसे अधीर होनेके कारण अत्यन्त क्षुब्ध हुई द्रौपदी रुँधे गलेसे किसी प्रकार अपनेको संभालकर अर्जुनसे बोली।

विशेष—ग्रीष्मऋतुकी प्रचण्डतासे नदीका पानी यों ही सूख जाता है और वह क्षीण हो जाती है। उसमें जब कोई ग्रीष्मसन्तप्त धूलि·धूसरित उच्छृङ्खल हाथी प्रवेश करेगा तो उसमें क्षोभ होना और उसका मलिन होना स्वाभाविक ही है। इसी प्रकार शत्रुओंके दुर्व्यवहार से द्रौपदी यों ही सूख रही है उस पर भी अर्जुनका वियोग उसके धैर्यको नष्ट कर देता है। अतः वह रुँधे गलेसे बड़ी कठिनतासे कहती है॥ ३८॥

मग्नां द्विषच्छद्मनि पङ्कभूते सम्भावनां भूतिमिवोद्धरिष्यन्।
आधिद्विषां मा तपसां प्रसिद्धेरस्मद्विना मा भृशमुन्मनीभूः॥ ३९॥

अन्वयः—पङ्कभूते, द्विषच्छद्मनि, मग्नां, सम्भावनां, भूतिम्, इव, उद्धरिष्यन् (त्वम्) आधिद्विषां तपसाम्, आप्रसिद्धेः, अस्माद्विना, भृशम् मा, उन्मनीभूः॥ ३९॥

व्याख्या—पङ्कभूते = कर्दमोपमे द्विषच्छद्मनि = शत्रुकृतकपटे, मग्नां = निमग्नां, सम्भावनां = योग्यतां, जनानुमानितां भाविनीमित्यर्थः। भूतिम् = ऐश्वर्यमिव, निधिमिवेत्यर्थः। उद्धरिष्यन् = उद्धारं कर्त्तुमभिलषन्. निधिपक्षे, उत्पाटयितुमिच्छन्। त्वमर्जुन इति शेषः। आधिद्विषां=दुखच्छिदम्, तपसां = तपोऽनुष्ठानानाम्, आप्रसिद्धेः = सर्वथा सिद्धिपर्यन्तम्, अस्मद्विना = अस्मान् (द्रौपदीं) विना, मा=नहि, भृशम् = अत्यर्थम्, उन्मनीभूः=विकलचेता उत्कण्ठितचितो नहि भव॥ ३९॥

भावार्थः—कर्दमतुल्ये प्रतारकवैरिबुद्धौ पतितामुद्धर्तुमशक्यां विभूतिमुद्ध-

रिष्यन् त्वं यावत् तपसां सिद्धिर्न स्यात् तावदस्माकं कृते उत्कण्ठितो न स्याः यतः बान्धवनिमित्तं सर्वमुत्कण्ठादिकं तपःपरिपन्थि भवति ।

समासः—द्विषतां छद्म द्विषच्छद्म, तस्मिन् द्विषच्छद्मानि । अधेर्द्विषो तेषामाधिद्विषाम् ॥ ३९ ॥

व्याकरणम्—उद्धरिष्यन्=उद + हृ+लृट् + शतृ । उन्मनीभूः = उन्मनां भू+लुङ् ॥ ३९ ॥

कोषः—'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः । 'कपटोऽस्त्री व्याजदम्भोपध्यश्छद्मकैतवे'—इत्यमरः । 'निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शादकर्दमौ'—इत्यमरः । 'भूतं क्ष्माऽऽत्मौ पिशाचादौ न्याय्ये सत्योपमानयोः' इत्यमरः । 'भूतिर्भस्मनि सम्पदि'—इत्यमरः । पुंस्याधिर्मानसी व्यथा' इत्यमरः । 'अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम्' इत्यमरः ॥ ३९ ॥

पदार्थ—पङ्कभूते = कीचड़ जैसे । द्विषच्छद्मनि = शत्रुओंके छलकपटों मग्ना = डूबी हुई । संभावनां=योग्यता ( गौरव ) का । भूतिम् इव=सम्पत्ति तरह । उद्धरिष्यन्=उद्धार करते हुए । आधिद्विषां=मनोव्यथाओंको नष्ट करने वाली । तपसां = तपस्याओं की । आप्रसिद्धेः—फल प्राप्त होने तक । अस् विना=हम लोगोंके विना । भृशम्=अत्यन्त । मा उन्मनीभूः=उत्कण्ठित न हो

भाषार्थ—कीचड़ जैसी शत्रुओंको वंचक बुद्धिमें डूबी हुई अपनी रा सम्पदाका उद्धार करते हुए तुम जबतक तपस्याका पूरा फल न प्राप्त हो तबतक हमलोगोंके विना उत्कण्ठित न होना । ( क्योंकि आत्मीय जन विषयकी उत्कण्ठा तपस्यामें बाधक होती है ) ।

विशेष—जैसे कोई कीचड़के दलदलमें फँस जाय और उसे निकालने प्रयत्न करने वाला व्यक्ति स्वयं अपनी मनोव्यथाओंमें फँस जाय तो उस निकलना असंभव है । ऐसे ही पाण्डवोंकी राज्यसम्पत्ति कौरवोंकी दुर्बुद्धि दलदलमें फँसी हुई है और उसका उद्धार करनेके लिये ही अर्जुन तपस्या करने जा रहे हैं । यदि वे स्वयं ही भाईयों या द्रौपदीकी चिन्तामें रहेंगे तो तपस्या में विघ्न पड़ेगा । इसलिये द्रौपदी उन्हें सावधान कर रही है ॥ ३९ ॥

यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसङ्ख्यामतिवर्तितुं वा ।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥ ४० ॥

अन्वयः—यशः अधिगन्तुं वा, सुखलिप्सया वा, मनुष्यसङ्ख्याम्, अति-वर्तितुं, निरुत्सुकानाम्, अभियोगभाजां, सिद्धिः, समुत्सुका; इव अङ्कम् उपैति ॥ ४० ॥

व्याख्या—यशः=कीर्तिम्, अधिगन्तुम्=प्राप्तुम्, मम यशो भवत्वित्यभि-प्रायेत्यर्थः । वा, सुखलिप्सया=मङ्गलभावनया वा मनुष्यसङ्ख्याम्=मानव-गणनाम्, अतिक्रमितुं, सकलनरातिशायि कर्म-करणाय, निरुत्सुकानाम्=औत्सुक्यहीनानाम्, अभियोगभाजाम्=अभिनिवेशवतां, कर्मण्यासक्तानामित्यर्थः । जनानामिति शेषः । सिद्धिः=क्रियासिद्धि, समुत्सुका=समुत्कण्ठिता, स्त्री इव, अङ्कं=क्रोडम्, उपैति=प्राप्नोति ॥ २० ॥

भावार्थः—यशोलाभाय, सुखप्राप्तेच्छया, मनुष्येषु सर्वप्रथमं स्थान-प्राप्तुमिच्छया वा कार्यं कुर्वन्तो जनाः यदि स्त्रीपुत्रादिविषयिणीमुत्कण्ठां न विदधति तथा कार्यसिद्धिस्तेषां तथा स्वयमेव हस्तगता भवति यथाऽत्यन्त-मनुरक्ता कामिनी स्वस्य नायकस्याङ्कमारोहति ।

समासः—सुखस्य लिप्सा लब्धुमिच्छा या सा सुखलिप्सा,तया सुखलिप्सया मनुष्याणां सङ्ख्या मनुष्यसङ्ख्या तां मनुष्यसङ्ख्याम् । निर्गता उत्सुकाः निरुत्सुकाः तेषां निरुत्सुकानाम् । अभियोगं भजन्ते ये तेऽभियोगभाजस्तेषामभियोग-भाजाम् ॥ ४० ॥

व्याकरणम्—अधिगन्तुम्=अधि+गम्+तुमुन् । अतिवर्त्तितुम्=अति+वृत्+तुमुन् । उपैति=उप+इण्+लट् ॥ ४० ॥

कोषः—'यशः कीर्त्तिः समज्ञा च' इत्यमरः । 'स्यादानन्दमधुरानन्दः शर्म-शातसुखानि च' इत्यमरः । 'इच्छाऽऽकाङ्क्षा स्पृहेच्छा तृड् वाञ्छा लिप्सा मनोरथः' इत्यमरः । 'अभियोगस्तु शपथे स्यादार्द्रे च पराभवे'—इति विश्वः ॥ ४० ॥

पदार्थ—यशः अधिगन्तुं=यश प्राप्त करनेके लिये। सुखलिप्सया= अथवा सुखकी इच्छासे। वा मनुष्यसंख्यामतिवर्तितुं=अथवा मनुष्य सं अतिक्रमण करनेके लिये उद्यत। निरुत्सुकानां=स्त्री पुत्रादिकी उत्कण्ठासे व्यक्तियों को। सिद्धिः=कार्यसिद्धि। समुत्सुका इव=उत्कंठित (अनुरक्त की तरह। अङ्कम् उपैति=गोदमें आ जाती है।

भाषार्थ यशःप्राप्तिके लिये, सुख चाहने के लिये अथवा मनुष्यों उत्तम कहलानेके लिये जो लोग स्त्री-पुत्रादिकी उत्कण्ठासे रहित होकर करते हैं उन्हें कार्यसिद्धि इस प्रकार स्वयं प्राप्त होती है जैसे अत्यन्त अ कामिनी स्वयं ही कान्त (प्रेमी) के पास चली आती है ॥ ४० ॥

अथास्य मन्यूद्दीपनद्वारा तपःप्रवृत्तिं प्रथयितुमरिनिकारं तावच्च रुद्घाटयति—.

लोकं विधात्रा विहितस्य गोप्तुं क्षत्रस्य मुष्णन्वसु जैत्रमोजः
तेजस्वितायाः विजयैकवृत्तेर्निघ्नन्प्रियं प्राणमिवाभिमानम् ॥

अन्वयः—विधात्रा, लोकं गोप्तुं, विहितस्य, क्षत्रस्य जैत्रम्, ओजः मुष्णन्, विजयैकवृत्तेः, तेजस्वितायाः, प्रियं, प्राणम्, इव, अभिमानं, (निकारः, त्वद्विना उपशुष्यत् मे हृदयं नवीकरिष्यति) ॥ ४१ ॥

व्याख्या—विधात्रा=ब्रह्मणा, लोकम्=संसारं, गोप्तुं=रक्षितुं, जग करणायेत्यर्थः। विहितस्य=उत्पादितस्य, क्षत्रस्य=क्षत्रियवर्णस्य, जैत्रं=जयनशीलम्, ओजः=तेजः, प्रभाव इत्यर्थः। तदेव, वसु=धनम्, मु चोरयन्, विजयैकवृत्तेः=विजयप्रधानव्यापारायाः, तेजस्वितायाः, ओजस्वि मनस्वितायाः वेत्यर्थः। प्रियम्=प्रेमपूर्णम्, प्राणमिव=असुमिव, अभि अभियानगौरवं, निघ्नन्=नाशयन्, निकारः, त्वद्विना मे उपशुष्यद् नवीकरिष्यतीति ४४ तमश्लोकात्संयोज्यम्। अर्थात्तेजस्विनां मान प्राणहरणसमैवेति भावः ॥ ४१ ॥

भावार्थः—विधाता लोकरक्षार्थं क्षात्रं तेजः सृष्टवान् विजय पराक्रमस्तस्य सर्वस्वम्। तदेव तेजोधनमपसरन्, क्षत्रियजातेः प्राणमिव अभिमानं नाशयन् (शत्रुकृतः पराभवः, उपशुष्यद् मे हृदयं पुनर्नवीकरिष्य

समासः—तेजोऽस्यास्तीति तेजस्वी, तस्य भावस्तत्तथा तेजस्विता, तस्याः तेजस्वितायाः विजय एवैका वृत्तिर्यस्याः सा विजयैकवृत्तिस्तस्याः ॥ ४१ ॥

व्याकरणम्—गोप्तुं=गुप्+तुमुन् । जैत्रं-जि+त्रन् । मुष्णन्=मुष्=लट्+शतृ । निघ्नन्=नि+हन्+लट्+शतृ । विहितस्य-वि+धा=क्तः ॥ ४१ ॥

कोषः—'लोकस्तु भुवने जने'—इत्यमरः । 'विधाता विश्वसृड्विधिः' इत्यमरः । 'ओजो बले च दोषौ चेति' विश्वः । 'वृत्तिर्वित्तजनजीवने'—इत्यमरः 'द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु'—इत्यमरः । पुंसिभूम्न्यसव प्राणाः' इत्यमरः ॥ ४१ ॥

पदार्थ—विधात्रा=विधाता के द्वारा । लोकं गोप्तुं =संसार की रक्षाके लिये । विहितस्य=बनाये हुए । क्षत्रस्य=क्षत्रिय जाति के जैत्रं=जयनशील । ओजः=दीप्ति (रूप) । वसु=धन को । मुष्णन् हरण करता हुआ । विजयैक-वृत्तेः=विजय ही एक वृत्ति है जिसकी ऐसी । तेजस्वितायाः=तेजस्विता के । प्रियं=प्रिय । प्राणमिव=प्राण को जैसे । अभिमानम्=अहङ्कार को । निघ्नन्=नष्ट करता हुआ ( निकार मेरे सूखते हृदय के घाव को फिर नया-सा कर देगा ) ।

भाषार्थ—विधाता ने संसारकी रक्षा के लिये क्षात्रतेजको उत्पन्न किया है और विजयशील पराक्रम ही उसका सर्वस्व है । उसी पराक्रमरूप सम्पदा को हरता हुआ तथा क्षत्रियों के प्राण की तरह प्रिय अभिमान को नष्ट करता हुआ ( शत्रुकृत पराभव से धीरे-धीरे सूखते हुए भी तुम्हारे वियोग में फिर मेरे हृदय में नया सा हो जायगा ) ।

अधिक्षेपाद्यसहनं तेजः प्राणात्ययेऽप्यपि न त्याज्यमित्याह—

व्रीडानतैराप्तजनोपनीतः संशय्य कृच्छ्रेण नृपैः प्रसन्नः ।
वितानभूतं विततं पृथिव्यां यशः समूहन्निव दिग्विकीर्णम् ॥ ४२ ॥

अन्वय—आप्तजनोपनीतः, व्रीडानतैः, नृपैः, संशय्य, कृच्छ्रेण प्रसन्नः (निकारः) पृथिव्यां, वितानभूतं विततं दिग्विकीर्णं, यशः समूहन् इव, ( सनिकारः ) ॥

व्याख्या—आप्तजनोपनीतः = विश्वासिजनप्रचारित संशय्य = सन्दि... अहो ! पाण्डवानामपमानं दुर्योधन एवमकरोद् न हि पाण्डवा अपमा... योग्याः, तत्कथमित्थमभूदिति = सन्देहविया विश्वस्ततया परिज्ञाय व्रीडानतैः लज्जाविनम्रमुखैः, नृपैः = भूपैः कृच्छ्रेण=कथं कथमपि, प्रपन्नः=प्राप्तः ज्ञा... इत्यर्थः । पृथिव्यां-भूमौ, वितानभूतम् = उल्लोचोपम, विततं = विस्तृ... प्रसृतमित्यर्थः दिग्विकीर्णं=दिगन्तव्याप्तं, यशः = कीर्ति, समूहन् = सङ्कोच... इव ॥ ४२ ॥

भावार्थः—विश्वस्तजनेनोक्तेऽपि पूर्वं सन्दिह्य पुनः कथमपि लज्जानम्रम... रोभिर्नृपैः स्वीकृतः स दुःशासनकृतो मे पराभवः भुवि वितानमिव व्याप्तं भव... यशः संकोचयन्निव त्वद्विरहे मे हृदि पुनर्नवीभविष्यति ।

समासः—व्रीडया नता ये ते व्रीडानतास्तैर्व्रीडानतैः । जनास्ता आप्तस... जनाः, तैरुपनीत इत्याप्तजनोपनीतः । दिक्षु विकीर्णं दिग्विकीर्णम् ॥ ४२ ॥

व्याकरणम्—संशय्य = सम्+शीङ् + ल्यप् । समूहन् = सम् + ऊह... शतृ ॥ ४२ ॥

कोषः—'मन्दाक्षं ह्रीस्त्रपा व्रीडालज्जा' । 'आप्तप्रत्ययितौ समौ' इत्यम... 'अस्त्री वितानमुल्लोचः' इत्यमरः । 'भूतं सत्योपमानयोः' इति विश्वः । 'वि... विस्तृतं व्याप्तम्' इति कोषः । यशः कीर्त्तिः समज्ञा च' इत्यमरः ॥ ४२ ॥

पदार्थ – आप्तजनोपनीतः=स्वकीय जनों से कहा गया संशय्य = (पहि... सन्देह करके (फिर) । व्रीडानतैः=लज्जा से झुके सिर वाले । नृपैः=राजा... से । कृच्छ्रेण = कठिनता से । प्रपन्नः=स्वीकृत हुआ । पृथिव्यां=पृथ्वी में वितान... नभूतं = तम्बू की तरह । दिग्विकीर्णम् = दिशाओं में व्याप्त । विततं-... हुए । यशः = यश को । समूहन् इव=समेटता हुआ सा । ( स निकारः उप... ष्यत् मे हृदयं पुनर्नवीकरिष्यति=वह शत्रुकृत पराभव सूखते हुए मेरे हृद... घाव को तुम्हारे वियोग में फिर से ताजा सा कर देगा ) ।

भाषार्थ – विश्वस्त व्यक्तियों के मुख से सुनने पर भी राजाओं ... पहिले सन्देह ही हुआ, फिर कठिनता से किसी प्रकार लज्जित होकर उन्हों... उस पर विश्वास किया, ऐसा दुःशासन द्वारा किया हुआ मेरा पराभव पृ...

चन्दवे की तरह दिशाओं को ढके हुए आपके यश को समेटता हुआ सा आपके बिना मेरे हृदय में फिर-ताजा हो उठेगा।

वीर्यावदानेषु कृतावमर्षस्तन्वन्नभूतामिव सम्प्रतीतिम्।
कुर्वन्प्रयामक्षयमायतीनामर्कत्विषामह्न इवावशेषः ॥ ४३ ॥

अन्वयः—वीर्यावदानेषु, कृतावमर्षः, अभूताम्, इव, सम्प्रतीतिम्, तन्वन्, आयतीनाम्, अर्कत्विषां, प्रयामक्षयं, कुर्वन्, अह्नः, अवशेषः इव ॥४३॥

व्याख्या—वीर्यावदानेषु = शौर्यकर्मसु, पराक्रमसाध्येष्वितिवा। कृतावमर्षः=कृताक्रमणः अर्थान्नानादिग्भ्योऽप्येकत्रीकृतानामस्माकं राजसूयावसरिकधानानामात्मायत्तीकारक इत्यर्थः। अभूताम् = अजाताम्, इव यथा पाण्डवानां वीरत्वप्रकटनं कर्म मिथ्यैवेतिरूपामित्यर्थः। सम्प्रतीतिं=ख्यातिं, तन्वन्=विस्तारयन्, स्वमहात्म्येनेति शेषः। आयतीनाम् = भाविशुभसम्भावनां वा पक्षे, दिगन्तविस्तृतानाम्, अर्कत्विषां = सूर्यकान्तीनां, प्रयामक्षयम् = परिनाशं, सर्वथा संहारमित्यर्थः। कुर्वन् = विदधद्, निकार इति, अह्नः = दिनस्य, अवशेषः = दिनान्तभागः, इव ॥ ४३ ॥

भावार्थः – पुराकृतानि भवतां पराक्रमंजातानि प्रमृजन् अतएव प्रसिद्धिमप्यजातामिव कुर्वन्, यथा दिनावशेषः सूर्यरश्मीन् सङ्कोचयति तथैव भवतामुत्तरकालस्य वृद्धिं निवारयन् इव (स पराभवः उपशुष्यत् मे हृदयं नवीकरिष्यति)।

समासः—वीर्याण्येवावदानानि वीर्यावदानानि तेषु वीर्यावदानेषु। कृतोऽवमर्षो येन सः कृतावमर्षः। अर्कस्य त्विषोऽर्कत्विषस्तासामर्कत्विषाम् ॥४३॥

व्याकरणम्—तन्वन् = तनु+लट्+शतृ। कुर्वन् = कृ+लट्+शतृ ॥४३॥

कोषः—'उत्साहोऽध्यवसायः स्यात्सवीर्यमतिशक्तिभाग' इत्यमरः। 'अवदानं कर्म वृत्तम्, इत्यमरः। 'उत्तरः काल आयतिः' इत्यमरः। 'घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ' इत्यमरः ॥ ४३ ॥

पदार्थः—वीर्यावदानेषु=(आपके) पराक्रम के कार्यों में। कृतावमर्षः = किया है अवमर्ष जिसने ऐसा, सम्प्रतीति=ख्याति को, अभूतामिव=न हुई जैसी,

तन्वन्=करता हुआ। अह्नः अवशेषः = दिन का शेष भाग; अर्कत्विषा= सूर्य की किरणों का जैसे ( प्रयामक्षयं = समूल नाश करता है ऐसे आयतीनां = ( आपके ) भविष्य की। प्रयामक्षयं = बढ़ती को रोकता ( पराभव मेरे हृदय में पुनः नया सा हो जायगा )।

भाषार्थ—आपके किए हुए पराक्रमोंपर परदा डालता हुआ सा आपकी ख्याति को ऐसे मिटाता हुआ जैसे कि वह हुई ही न हो और दिन का अन्तिम भाग सूर्य किरणोंको समेटता है ऐसे ही आपके भविष्यकी वृद्धि रोकता हुआ ( वह पराभव मेरे हृदय में फिर ताजा हो उठेगा ॥ ४३ ॥

प्रसह्य योऽस्मासु परैः प्रयुक्तः स्मर्तुं न शक्तः किमुताधिकर्तुम्।
नवीकरिष्यत्युपशुष्यदार्द्रः स त्वद्विना मे हृदयं निकारः॥

अन्वयः—परैः, अस्मासु, प्रसह्य, प्रयुक्तः, यः, ( सः ) स्मर्तुं, न शक्तः, अधिकर्तुं, किमुत। सः, निकारः, त्वाद्विना, आर्द्रः, (सन्) उपशुष्यद्, मे हृदयं नवीकरिष्यति ॥ ४४ ॥

व्याख्या—परैः=अरिभिः, अस्मासु=पाण्डवेषु, प्रसह्य=बलात्, प्रयुक्तः, यः = अस्मद्वस्त्रापकर्षण–केशग्रहण–राज्यग्रहण–वनप्रेषणादिरूपः निकारः। स्मर्तुं, स्मरणं कर्तुं, अपि, शक्यः=योग्यः, न, अधिकर्तुम् = भवितुं, किमुत वक्तव्यम्। सः निकारः=अपकारः, त्वद्विना=त्वां विना सरसः, सन्, उपशुष्यद्=शुष्यत्, मे = मम, द्रौपद्या इति शेषः। हृदयम् नवीकरिष्यति=पुनर्नवीनीकरिष्यति। यत्पुराऽतीतं क्लेशोष्मशुष्क मनः रहवेदनया पुनः, सव्रणमिव भविष्यतीति भावः ॥ ४४ ॥

भावार्थः—शत्रुभिरस्मासु बलपूर्वं प्रयुक्तो यः पराभवः स्मर्तुं शक्यः अनुभवितुं तु दूरे तिष्ठतु, स एव पराभवः त्वया विनोपशुष्यद् मे हृदि पुनर्नवीभविष्यति।

समास—त्वां विना, त्वद्विना ॥ ४४ ॥

व्याकरणम्—प्रयुक्तः=प्र+युज्+क्तः। स्मर्तुं=स्मृ+तुमुन्। अधिकर्तुं= अधि+कृ+तुमुन्। नवीकरिष्यति=नवी+कृ+लृट्। उपशुष्यद्=उप+शुष् +शतृ ॥ ४४ ॥

कोषः—'प्रसह्य तु हठार्थकम्' इत्यमरः । 'चित्तं तु चेतो हृदयं स्वान्तं मानसं मनः' इत्यमरः । निकारो विप्रकारः स्यादकारः क्षतिः स्त्रियाम्' इति षः । पृथग्विनाऽन्तरेणर्त्ते इत्यमरः ॥ ४४ ॥

पदार्थ —परैः=शत्रुओंसे । अस्मासु हमपर । प्रसह्य = हठपूर्वक । प्रयुक्तः= ोग किया गया । यः = जिसे ( पराभवको ) । स्मर्त्तुं न शक्यः—स्मरण नहीं किया जा सकता । अधिकर्त्तुं किमुत = अनुभव करना तो दूर रहा । निकारः=वह पराभव । त्वद् विना= तुम्हारे विना । आर्द्रः ( सन् ) = गीला ा सा । उपशुष्यत् = सूखते हुए । मे हृदयं = मेरे हृदयको । नवीकरिष्यति= ा सा कर देगा ।

भावार्थ —शत्रुओं द्वारा हमपर हठात् किया गया जो पराभव जिसका रण अशक्य है अनुभव की तो कौन कहे? वही पराभव तुम्हारे विना हृदयमें सूखते घावको जैसे फिरसे ताजा कर देगा ॥४४॥

प्राप्तेऽभिमानव्यसनादसह्यं दन्तीव दन्तव्यसनाद्विकारम् ।
द्विषत्प्रतापान्तरितोरुतेजाः शरद्घनाकीर्ण इवादिरह्नः ॥ ४५ ॥

अन्वयः—अभिमानव्यसनात्, दन्तव्यसनाद्, दन्ती, इव, असह्यं, विकारं, प्रयुक्तः, द्विषत्प्रतापान्तरितोरुतेजाः, ( त्वं ) शरद्घनाकीर्णः, अह्नः, आदिः, इव जातः ) ॥ ४५ ॥

व्याख्या—अभिमानव्यसनात्=स्वकुलोचितसम्माननाशाद्, वा, वंशगौरव-नाशाद् ( हेतोः ), ( त्वं ) दन्तव्यसनाद्-दशनोपघटनाद्, दन्ती=गजः, इव, ह्यं ! सोढुमशक्यं, विकारं=चित्तक्षोभ दुःखमिति यावत् । प्राप्तः=व्याप्तः । प्रतापान्तरितोरुतेजाः=अरिविक्रमपिहितमहोजाः त्वमर्जुनः, शरद्घना र्णः—सरदृतुमेघाच्छादितः, अह्नः=दिनस्य, आदिः=आरम्भः अर्थाद् च्छादितोदयकालिक सूर्य इव जातः । त्वम् अन्यमाकारमाभिपन्न जातः ॥ ४५ ॥

भावार्थः—दन्तभङ्गेन विकारं प्राप्तं गजमिवाभिमानभ्रंशात् सोढुमशक्यां र्तिं प्राप्तस्त्वं शत्रुप्रतापान्तरिप्रहापः सन् शरन्मेघाच्छन्नः प्रत्यूषः इव भिज्ञातुं न शक्यसे ।

समासः—अभिमानस्य व्यसनम्, अभिमानव्यसनं, तस्मादभिमानव्यसनात्, दन्तयोर्व्यसनं दन्तव्यसनं, तस्माद् दन्तव्यसनाद्, द्विषतः प्रतापो द्विषत्प्रतापस्तेनान्तरितम् उरु तेजो यस्यासौ द्विषत्प्रतापान्तरितोरुतेजाः। शरदि शरद्घनः, शरद्घनेनाकीर्णः शरद्घनाकीर्णः ॥ ४५ ॥

व्याकरणम्—प्राप्तः = प्र+आप् + क्तः ॥ ४५ ॥

कोषः—'अभिमानं त्वहङ्कारे स्वकुलस्य च गौरवे' इति कोषः। 'व्यसनं विपदि भ्रंशे दोषे कामजकोपजे'—इत्यमरः। 'दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विप, इत्यमरः। 'प्रकृतेरन्यथात्वे तु विकारः परिणामकः' इत्यमरः। 'घनजीमूतमुदिरजलमुग्धूमयोनयः' इत्यमरः। 'घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ' इत्यमरः ॥ ४५ ॥

पदार्थ—अभिमामव्यसनात्=गर्वनाश होनेसे। दन्तव्यसनात् दन्ती इव=दाँत गिर जानेसे हाथी जैसे। असह्यं=असहनीय। विकारं प्राप्तः=विकारको प्राप्त हुए। द्विषत्प्रतापान्तरितोरुतेजाः=शत्रुओंके प्रतापसे छिप गया है महान् पराक्रम जिसका ऐसे। शरद्घनाकीर्णः=शरद्कालके बादलसे ढके हुए। अह्नः= दिनके। आदिः इव=पूर्वभाग (पूर्वाह्न) की तरह (तुम अन्य ही आकारको प्राप्त हो रहे हो अर्थात् हतप्रभसे लगते हो)।

भाषार्थ—दाँत टूटने पर जैसे हाथी विरूप हो जाता है ऐसे ही गर्वनाश हो जानेसे असहनीय विरूपताको प्राप्त हुए तुम भी शत्रुप्रतापसे अपना तेज मन्द होनेके कारण शरद्के बादलसे ढके हुए प्रातःकालकी तरह पहिचाने नहीं जा रहे हो।

विशेष—द्रौपदीने शत्रुकृत पराभवकी शरद्घनसे और अर्जुनकी प्रातःकालीन सूर्यसे उपमा दी है। उसका तात्पर्य है कि शरत्कालका बादल लघु होता है वह थोड़े ही वायुसे उड़ जाता है और प्रातःकालीन सूर्य किरणें मन्दतासे भले ही उससे ढक जाय किन्तु मध्याह्नमें जब सूर्यकी किरणें प्रखर होती हैं तब उन बादलोंको भेदकर उसका प्रकाश बाहर आ जाता है क्योंकि वे हलके होते हैं। इसी प्रकार इस समय शत्रुकृत पराभवसे भले ही तुम निस्तेज हो किन्तु दैवी शक्ति पाकर जब तुम्हारा प्रताप प्रखर हो उठेगा

शत्रु शरद्काल के हलके बादलों की तरह थोड़े ही प्रयत्न से उड़ाये जा सकते हैं ॥ ४ ॥

सव्रीडमन्दैरिव निष्क्रियत्वान्नात्यर्थमस्त्रैरवभासमानः ।
यशःक्षयाद् क्षीणजलार्णवाभस्त्वमन्यमाकारमिवाभिपन्नः ॥ ४६ ॥

अन्वयः—निष्क्रियत्वात् सव्रीडमन्दैः, इव, अस्त्रैः, अत्यर्थं, न, अवभासमानः, यशःक्षयात, क्षीणजलार्णवाभः, त्वम्, अन्यम्, आकारम्, अभिपन्नः, इव जातः ) ॥ ४६ ॥

व्याख्या—निष्क्रियत्वात् = क्रियाव्यर्थत्वात्, केवलनाममात्रतयेत्यर्थः । सव्रीडमन्दैः=सलज्जकुण्ठितैः, इव अस्त्रैः=आयुधैः, अत्यर्थम्=अतिमात्रं, न, अवभासमानः = न, शोभमानः, ( त्वं ) यशःक्षयात् = कीर्तिनाशाद्, हेतोरिति शेषः । क्षीणजलार्णवाभः = शुष्कनीरसमुद्रसमः, त्वम् = अर्जुनः, अन्यम्= भिन्नम् पृथगिवेत्यर्थः, आकारं=स्वरूपम्, अभिपन्नः=प्राप्तः, अर्थाद्यदाऽगस्त्येन मुनिना समुद्रः शोषितस्तदानीं समुद्रस्य यादृश आकारस्तादृश एव यशोरूपजलक्षयात्समुद्ररूपोऽपि भवान् जात इत्यर्थः ॥ ४६ ॥

भावार्थः—प्रयोगाभावात् सलज्जैरिव कुण्ठितास्त्रैर्नात्यन्तं प्रकाशमानः तथा कीर्तिभ्रशात् शुष्यज्जलेन समुद्रेण तुल्यप्रभस्त्वमन्यः इव स्वरूपेण लक्ष्यसे ।

समासः— व्रीडया सहितानि यान्यस्त्राणि, तानि सव्रीडानि, सव्रीडानि च मन्दानि च सव्रीडमन्दानि, तैः, सव्रीडमन्दैः । निर्गता क्रिया व्यापारो यस्मात्स निष्क्रियस्तस्य भावो निष्क्रियत्वं तस्माद् निष्क्रियत्वात् । यशसः क्षयो यशःक्षयस्तस्माद् यशःक्षयात् । क्षीणानि जलानि यस्य स क्षीणजलः, स चावर्णः ज़लार्णवः, तस्याभा इव आभा विद्यते यस्य स क्षीणजलार्णवाभः ॥ ४६ ॥

व्याकरणम्—अवभासमानः = अव+भास् + लट् + शानच् । अभिपन्नः= अभि+पद्+क्तः ॥ ४६ ॥

कोषः—'मन्दाक्षं ह्रीस्त्रापा व्रीडा लज्जा' इत्यमरः । 'आयुधं तु प्रहरणं शस्त्रमस्त्रमथारिपयौ' इत्यमरः । 'यशः कीर्तिः समज्ञा च' इत्यमरः । 'उदन्वानुदधिः सिन्धुः सरस्वान् सागरोऽर्णवः' इत्यमरः ॥ ४६ ॥

पदार्थ—निष्क्रयत्वात्=काममें न आनेसे। सव्रीडमन्दैः इव=लज्जासे कुण्ठित हुए जैसे। अस्त्रैः=आयुधोंसे। अत्यर्थं=अत्यन्त। न अवभासमानः=न प्रकाशित होते हुये। यशःक्षयात्=यश नष्ट होनेसे। क्षीणजलार्णवाभः=सूखते समुद्रकी जैसी आभावाले। त्वं=तुम। अन्यम् आकारम् इव=दूसरी आकृति को जैसे। अभिपन्नः=प्राप्त हो रहें हो।

भावार्थ—प्रयोगमें न आनेसे लज्जित होकर कुण्ठित हुए जैसे अस्त्रोंसे मन्द तेजवाले और कीर्तिनाश हो जातेसे सूखते समुद्रकी तरह मुरझाई कान्तिवाले तुम दूसरे ही जैसें लग रहे हो।

विशेष—अस्त्रों का प्रयोग युद्धमें ही होता है। पाण्डवोंने अपमान सहकर भी वनवासका कष्ट तो स्वीकार किया किन्तु युद्ध नहीं किया। रखे हुए अस्त्र कुण्ठित हो रहे हैं। इसीकी द्रौपदी उत्प्रेक्षा करती हैं कि अस्त्र इसलिए कुण्ठित हो रहे हैं मानों तुम्हारी अकर्मण्यतासे उन्हें लज्जा आ रही है. जलाशय का जल सूखने पर जैसे उसकी शोभा नष्ट हो जाती है और वह विकृत हो जाता है ऐसे ही कीर्तिका नाश होनेसे तुम्हारा स्वरूप ही बदल गया है। तुम्हारी दीप्ति नष्ट हो गई है अतः तुम्हें उसे पुनः प्राप्त करनेके लिए दृढ़ प्रयत्न करना चाहिए। यह उसका भाव है॥ ४६॥

दुःशासनामर्षरजोविकीर्णैरेभिर्विनाथैरिव भाग्यनाथैः।
केशैः कदर्थीकृतवीर्यसारः कच्चित्स एवासि धनञ्जयस्त्वम्॥४७॥

अन्वयः—दुःशासनामर्षरजोविकीर्णैः, विनाथैः, एभिः, केशैः कदर्थीकृतवीर्यसारः, त्वं सः एव, असि कच्चित्।

व्याख्या—दुःशासनामर्षरजोविकीर्णैः=दुर्योधनानुजक्रोधधूलिव्याप्तैः, दुःशासननामा दुर्योधनस्य कनिष्ठभ्राताऽऽसीत्, स एव युवराजस्तस्मिन् ... दुर्योधन आज्ञया द्रौपद्याः केशानग्रहीत्, सभायां द्यूतेन पणीकृताया इत्यर्थः। ... एव विनाथैः=अनाथैः इव, भाग्यनाथैः=दैवमात्ररक्षकैः एभिः=एतैः, ... लुलितैः, केशैः=शिरोरुहैः, मूर्धजैरित्यर्थः। कदर्थीकृतवीर्यसारः=धिक्कृतवीर्यबलः, त्वम्=प्रत्यक्षदृश्यः, पुरुषः, स एव=तादृश एव, धनञ्जयः=अर्जुनः त्वम् असि, कच्चित्=किम्? वा, अर्जुननामकोऽन्यः कच्चित् त्वमसि। तद्विदित...

अर्थाद्यदि स एवाऽस्मद्दुर्दशादर्शकस्त्वं तदा तत्क्लेशसंहरणप्रतिकारं सत्वरं विधेहीति प्रोत्साहनार्थमित्युक्तिद्रौपद्या इति ।

भावार्थः—पुरा सभायां दुःशासनेनाकृष्टेषु निःसहायेष्विवेश्वरमात्रशरणेषु वस्त्रकचेषु तूष्णं पश्यतस्तव पराक्रमं बलश्च धिक्कृतमेभि- कचैः, किं स एवार्जुनस्त्वं येनोत्तरान् कुरून् विजित्याकुप्यं धनं युधिष्ठिराय समर्पितमासीत्, यदि तादृशपराक्रमशाली स एव त्वं भवेस्तदा कथ मम केशानामीदृश्यवस्था संभाव्येत ।

समासः—दुःशासनस्यामर्षा एव रजांसि तैर्ये विकीर्णास्ते दुःशासनामर्षरजोविकीर्णास्तैर्दुःशासनामर्षरजोविकीर्णैः । विगतो नाथो येषां ते विनाथास्तैर्विनाथैः । भाग्यमेव, नाथो येषां तैर्भाग्यनाथैः । कदर्थीकृतौ वीर्यसारौ यस्य सः कदर्थीकृत वीर्यसारः ।

व्याकरणम्—कदर्थीकृतौ=न कदर्थौ कुत्सितार्थौ इत्यकदर्थौ अकदर्थौ कदर्थौ सम्पद्यमान इति कदर्थीकृतौ, अभूततद्भावेच्विः । असि=अस्+लट् ।

कोष—'कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ' इत्यमरः । 'रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयो रज'—इत्यमरः । 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधि' इत्यमरः । 'चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः' इत्यमरः । 'सारो बले स्थिरांशे च' इत्यमर । 'कच्चित्कामप्रवेदने' इत्यमरः ।

पदार्थ—दुःशासनामर्षजोविकीर्णैः=दुःशासनके क्रोधरूप धूलिसे बिखरे हुए । विनाथैः इव=अनाथो जैसे । भाग्यनाथैः (केवल) भाग्यके भरोसे स्थित हुए । एभिः केशैः=इन (मेरे) केशोंसे । कदर्थीकृतवीर्यसारः=धिक्कार दिया शौर्य और बल जिसका ऐसे । त्वं=तुम । स एव=वही (उत्तर कुरुओंको जीतनेवाले) धनञ्जयः असि कच्चित्=धनञ्जय (अर्जुन) हो क्या ?

भावार्थ—उस समय सभामें दुःशासनके द्वारा खींचे गये, निःसहायकी तरह केवल ईश्वरके भरोसे स्थित हुए मेरे इन केशोंने जिसके शौर्य और बलकी चुनौती दी है क्या वही धनञ्जय तुम हो ?

विशेष—अर्जुन का नाम धनञ्जय इसीलिये पड़ा था कि उनसे अजेय कुरुदेशोंको जीतकर युधिष्ठिरको राजसूयके समय प्रचुर धन लाकर दिया था,

द्रौपदीका अभिप्राय है कि यदि वास्तवमें तुम इतने पराक्रमी होते तो सभामें मेरी उस दुर्दशाको देखकर मुँह पीछे नहीं कर लेते। क्योंकि 'पाति रक्षतीति पतिः' इस विग्रहके अनुसार पति वही है जो हर प्रकार पत्नी सुरक्षा करे। एक नहीं पाँच पतियोंके सामने मेरी यह दुर्दशा हुई और तुम नहीं कर पाये। मैं कैसे विश्वास करूँ कि तुम वही धनञ्जय हो ॥४७॥

स क्षत्रियस्त्राणसहः सतां यस्तत्कार्मुकं कर्मसु यस्य शक्तिः।
वहन्द्वयीं यद्यफलेऽर्थजाते करोत्यसंस्कारहतामिवोक्तिम् ॥४८॥

अन्वयः—यः सतां, त्राणसहः, क्षत्रियः, यस्य, कर्मसु, शक्तिः, तद् (तत्) कार्मुकम्, अर्थजाते, अफले, यदि, द्वयीम्, उक्ति, वहन् (सन्) असंस्कारहताम् इव, (तां) करोति।

व्याख्या—यः = कश्चिद्, जनः, सतां = सज्जनानां, गोब्राह्मणादीनां त्राणसहः = रक्षणक्षमः भवतीति शेषः। सः=सज्जनरक्षकः, क्षत्रियः, उच्यते इति शेषः। तथा चोक्तं कविकुलशिरोमणिना कालिदासेन 'क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः' इति। यस्य=धनुषः, कर्मसु=संग्रामकर्मसु शक्तिः=विक्रमः, तदेव, कार्मुकं=धनुः। अर्थात्क्षत्रियोऽपि यः साधुसंरक्षणे समर्थः स न क्षत्रियः। यस्य कार्मुकस्य रण उपयोगी नहि तत् कार्मुकमपि न भावः अथ, अर्थजाते = अभिप्रायजातौ, अफले = व्यर्थे, सत्यपि, यदि, द्वयीं द्विविधां, क्षत्रियामुर्कुकरूपामित्यर्थः। वहन् = धारयन्, जनः असंस्कारहताम् व्याकरणानुशासनवर्जिताम्, उक्तिम् = वाणीं यावद्, इव, करोति। तस्मात् सधुना स्वजातिस्वायुधानि सार्थकानि कुरुष्वेति भावः।

भावार्थः—यः सज्जनानां दस्युत्रासादिभ्यो रक्षणं करोति स एव क्षत्रियः क्षतात् त्रायत इति व्युत्पत्तेः, यश्च कर्मणि युद्धादौ प्रभवति तदेव कार्मुकम् एष एवोभयोरपि व्युत्पत्तिलभ्योऽर्थः। यश्च क्षत्रियः सन् त्राणेऽसमर्थः यस्य कार्मुकस्य युद्धेन प्रभवितुमसामर्थ्यं तदद्वयं व्युत्पत्यर्थं विरहाच्च्युतसंस्कारदुष्टं व्यर्थमेव।

समासः—त्राणस्य सहस्त्राणसहः। अर्थानां जातमर्थजातं, तस्मिन्नर्थजाते। न संस्कारोऽसंस्कारः, असंस्कारेण हता, असंस्कारहता, ताम् असंस्कारहताम्

व्याकरणम्—वहन्=वह् + लट् + शतृ । करोति=कृ + लट् ।

कोषः—'मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्'—इत्यमरः । 'त्रातं त्राणं रक्षितमवितं गोपायितं च गुप्तश्च' इत्यमरः । 'धनुश्चापौ धन्व-शरासन-कोदण्डकार्मुकम्'— इत्यमरः । 'शक्तिः पराक्रमः प्राण' इत्यमर । 'जातिर्जातं च सामान्यम्' इत्यमरः । ( 'व्याहार उक्तिर्लपितं भाषित वचनं वचः ) इत्यमरः ।

पदार्थ— यः=जो । सतां त्राणसहः=सज्जनोंकी रक्षा कर सके । स क्षत्रिय=वही क्षत्रिय है । यस्य=जिसकी । कर्मसु शक्तिः=कार्योंमें सामर्थ्य हो । तत् कार्मुकं=वही धनुष है । द्वयीं=( क्षत्रिय और कार्मुक ) इन दोनोंकी । उक्ति=अभिधेयताको । यदि अफले अर्थजाते=यदि अर्थशून्य पदार्थोंमें । वहन्=धारण करता हुआ ( व्यक्ति ) । उक्ति=उस कथनको असंस्कारहतामिव= अव्युत्पत्तिसे दूषित जैसा । करोति=करता है ।

भावार्थ—जो सज्जनोंकी रक्षा कर सके वह क्षत्रिय है और युद्धादिकर्मों-में जो काम आवें वह कार्मुक है (क्षतसे त्राण और कर्ममें शक्ति यही दोनोंका व्युत्पत्तिलभ्य अर्थ है ) । जो क्षत्रिय होकर भी रक्षा नहीं कर सकता और जो कार्मुक युद्धमें काम नहीं आता उन दोनोंके नाम व्युत्पत्ति करके साधन योग्य नहीं है ।।४८।।

वीतौजसः सन्निधिमात्रशेषा भवत्कृतां भूतिमपेक्षमाणाः ।
समानदुःखा इव नस्त्वदीयाः सरूपतां पार्थ ! गुणा भजन्ते ।।४९।।

अन्वयः—हे पार्थ ! वितौजसः, सन्निधिमात्रशेषाः भवत्कृतां, भूतिम् अपेक्षमाणाः त्वदीयः गुणाः, नः, समानदुखाः, इव, सरूपतां भजन्ते ।। ४९ ।।

व्याख्या—हे पार्थ !=हे अर्जुन ! वीतौजसः=प्रभावहीनः, सन्निधि-मात्रशेषः=सत्तामात्रावशिष्टाः, भवत्कृताम्=पाण्डवविहितां । भूतिम् = विभूतम् अभ्युदयम्, अपेक्षमाणाः=अपेक्षां कुर्वाणाः । त्वदीयाः=भवदीयाः गुणा=शौर्या-दयाः, नः=अस्माकं, समानदुखाः=तुल्यखेदवन्त इव, सरूपताम्=एकरूपतां भजन्ते=आश्रयन्ति ।। ४९ ।।

भावार्थः—यथा शत्रुपरिभूताः निस्तेजस्का यथाकथंचित्स्थीयमाना पुनरभ्युदयाय भवन्तमपेक्षामहे तथैव तव शौर्यादयो गुणा अपि अकिंचित्त्वात् निष्प्रभा सत्तामात्रेणवशिष्टा त्वत्कृतमभ्युदयमपेक्षमाणा वर्तन्ते ।

समासः—वीतमोजो येषां ते वीतौजसः । सन्निधिरेव सन्निधिमात्रं येषां ते सन्निधिमात्रशेषाः । भवता कृतां भवत्कृता तां भवत्कृताम् । स दुःखं येषां ते समानदुःखाः । समानं रूपं इति सरूपं, तस्य भागः सरूता सरूपताम् ॥ ४९ ॥

व्याकरणम्—भजन्ते = भज् + लट् ॥ ४९ ॥

कोषः—'वर्जितं विगतं वीतम्' इति कोषः । 'ओजो दाप्ती बल इन्द्रिये निम्नगारये' इत्यमरः । 'सन्निधिः सन्निकरणम्' इत्यमरः । 'विभूर्भूतिमैश्वर्यमणिमादिकमष्टधा' इत्यमरः ।

पदार्थ—पार्थ=हे अर्जुन ! वीतौजसः=निष्प्रभ हुई । सन्निधिमात्रशेष जिनकी वची है ऐसे । भवत्कृतां=आपके द्वारा उत्पादित । भूतिं=ऐश्वर्य अपेक्षमाणा = प्रतीक्षा करते हुए । त्वदीय गुणा = तुम्हारे ( शौर्यादि ) गु समानदुःखा इव = वराबर ( एक समान ) दुःखवाले जैसे । नः=हमारी पतां=समान धर्मता को । भजन्ते = प्राप्त हो रहे हैं ।

भावार्थ—जैसे हम लोग शत्रुओं से पराभव पाकर निस्तेज किसी प्र जीवन धारण किये हुए और पुनः अभ्युदय के लिए आप की ओर देखने हैं इसी प्रकार आपके शौर्यादि गुण भी निष्प्रभ, नाम मात्र के लिए बचे और पुनः ऐश्वर्य प्राप्ति के लिए आप की प्रतीक्षा करने वाला हो गये हैं

विशेष—यदि अर्जुन कहे कि मुझ में सम्पूर्ण शौर्यादि गुणों के तुम मेरे क्षत्रियत्व और धनञ्जय का तिरस्कार क्यों करती हो । इसी प्र द्रौपदी का कथन है कि जैसे हमलोग निस्तेज हो गये हैं ऐसे तुम्हारे ये भी निष्प्रभ हो चुके है । भजन्ते यह कर्तृगामी आत्मनेपद का प्रयो जिसका अर्थ है कि सोद्यम होने पर ही वे गुण तुम्हारी शोभा बढ़ाते हैं नि द्यमता में नहीं ॥ ४९ ॥

आक्षिप्यमाणं रिपुभिः प्रमादान्नागैरिवालूनसटं मृगेन्द्रम् ।
त्वां धूरियं योग्यतयाऽधिरूढा दीप्त्या दिनश्रीरिव तिग्मरश्मिम् ।५०।

अन्वय—प्रमादाद् रिपुभिः आक्षिप्यमाणं, नागैः, आलूनसटं, मृगेन्द्रम्, इव त्वाम्, इयं, धूः, तिग्मरश्मिं, दीप्त्या, दिनश्रीः इव योग्यतया, अधिरूढा ।

व्याख्या—प्रमादाद्=अनवधानात् । न तु अयोग्यतयेत्यर्थः रिपुभि= अरिभिः, अक्षिप्यमाणम् = अधिक्षिप्यमाणम्, अपमानितप्रायमिति यावत् । प्रमादाद् = प्रमाद, नागैः=हस्तिभिः, आलूनसटम् = परिलुञ्चितकेशम्, मृगेन्द्र =सिंहम्, इव त्वाम्=भवन्तम्, अर्जुनमित्यर्थः । इयम्=एषा । धूः=भारः । तिग्मरश्मि = सूर्यं, दीप्त्या = कान्त्या दिनश्रीः = वारशोभा, इव, अर्थाद्, दिन शोभा यथा दीप्तिमन्तं सूर्यमेवाश्रयति, तथैवायं कार्यभारः योग्यतमं त्वां प्रत्येति; यथा ज्योतिषां मध्ये सूर्यस्तथैव भ्रातृणां मध्ये भवानिति निष्कर्षोऽर्थः- योग्यतया=अधिकगुणवत्तया अधिरूढा=आरूढवती । न त्वदन्योऽस्माकं दुःखो- च्छेदकस्तेन सत्वरं विदानुन्मूलनायायासः कर्त्तव्यस्त्वयैवेति ॥ ५० ॥

भावार्थः—केसरिणोऽनवधानतया यथा ˜जाः कदाचित् तस्य केसरान् लुंचन्ति तथैव त्वत्प्रमादादेव शत्रुभिस्त्वं पराभूतः नतु दुर्बलत्वात् । यथा दीप्त- तया दिनश्रीः सूर्यमेवावलम्बते तथैवास्माकमपि पुनरुद्धारभारस्त्वय्येव विद्यते । नान्यः कोऽप्यन्यस्त्रातुमस्मान् समर्थः ।

समासः—आ समन्ताद् लूना सटा यस्य स आलूनसटस्तमालूनसटम् । मृगेष्विन्द्रो मृगेन्द्रस्तं मृगेन्द्रन् । दिनस्य श्रीर्दिनश्रीः । तिग्मा रश्मयोः यस्य स तिग्मरश्मिस्तं तिग्मरश्मिम् ।

व्याकरणम्—आक्षिप्यमाणाम्=आ+क्षिप्+यक्+कर्मणि लट्+शानच् । अधिरूढा = अधि+रुह+क्तः+टाप् ।

कोषः—'रिपौ वैरि-सपत्नारि-द्विषद्द्वेषण-दुर्हृदः' इत्यमरः । 'प्रमादोऽनव- धानता' इत्यमरः । 'मतङ्गजो गजो नागः कुञ्जरो वारणः करी' इत्यमरः । "छिन्नं छातलूणं कृत्तं दातं दितं छितं वृकणम्' इत्यमरः । सटा जटाकेसरयोः' इति विश्वः 'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः' इत्यमरः । 'स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः' इत्यमरः ।

पदार्थ—प्रमादात्=अनवधानता के कारण। रिपुभिः=शत्रुओं से। आक्षिप्यमाणं=तिरस्कृत किये गये। नागैः=हाथियों से। अलूनसटं=नोची गयी हैं सटाएँ जिसकी, ऐसे। मृगेन्द्रम् इव=सिंह को। त्वां=तुमको। इय धूः=भार। तिग्मरश्मिम्=सूर्य को। दीप्त्या=दीप्ति से। दिनश्रीः इव=दिन की शोभा की तरह। योग्यतया=योग्य होने से। अधिरूढा=आरूढ़ हुई है।

भावार्थ—सिंह की असावधानी से कदाचित् जैसे हाथी उसकी गर्दन के बाल नोच डालें, ऐसे ही अपने प्रमाद से तुम शत्रुओं से परास्त हुए हो, दुर्बलता के कारण नहीं। दिन की शोभा जैसे सूर्य पर ही अवलम्बित रहती है, ऐसे ही हमारे उद्धार का गुरुतर कार्यभार तुम्हारे ऊपर ही निर्भर है।

विशेष—यदि अर्जुन कहे कि मुझे ही इतना उलाहना क्यों दे रही हो, अन्य पाण्डवों का भी तो तुम्हारी रक्षा करना कर्तव्य था ही, इसी पर द्रौपदी का यह कथन है कि जैसे दिन की शोभा केवल सूर्य पर ही अवलम्बित रहती है, ऐसे ही इस कार्यभार को वहन करने की सामर्थ्य केवल तुम्हीं में है। अब तक शत्रुओं से तुम जो पराभव को प्राप्त हुए वह दुर्बलता के कारण नहीं, प्रत्युत अपनी अनवधानता कारण है ॥५०॥

करोति योऽशेषजनातिरिक्तां सम्भावनामर्थवतीं क्रियाभिः।
संसत्सु जाते पुरुषाधिकारे न पूरणीं तं समुपैति संख्या ॥५१॥

अन्वयः—यः, अशेषजनातिरिक्तां, सम्भावनां, क्रियाभिः, अर्थवतीं करोति, तं, संसत्सु, पुरुषाधिकारे, जाते, (सति) पूरणी, सङ्ख्या, उपैति ॥ ५१ ॥

व्याख्या—यः=कश्चित्, अध्यवसायी जनः। अशेषजनातिरिक्तां=सर्वलोकानुरञ्जिनीं सम्भवनां=योग्यतां, क्रियाभिः=आचरणैः, अर्थवतीं=फलवतीं, सार्थकां, करोति=निष्पादयति, तं=तादृशं जनं सकललोकदुःसाध्यकर्मसाधकमित्यर्थः। संसत्सु=सभासु, पुरुषाधिकारे=सुयोग्यजनगणनाऽवसरे, पूरणी=पूरयित्री। सङ्ख्या=द्वित्वादिसङ्ख्या, न उपैति=न प्राप्नोति। अर्थात्स जनः सर्वप्रथम एव गण्यते लोकैः, अन्ये तदितराः सङ्ख्यापूरका इत्यर्थः ॥ ५१ ॥

भावार्थः—यः पुमाल्लोकातिशायिनं पराक्रमं कार्यरूपेण परिणमय्य प्रकटयति अर्थात् स्वपौरुषं कार्ये समागते प्रदर्शयति स योग्यतावतां वीरपुरुषाणां गणनाप्रस्तावे प्रथमतः परिगण्यते ।

समासः—न शेषा अशेषाः, अशेषाश्च ते जना अशेषजनाः, तेभ्योऽतिरिक्ता या साऽशेषजनातिरिक्ता, ताम् अशेषजनातिरिक्ताम् । अर्थः फलं विद्यते यस्यां साऽर्थवती ताम् अर्थवतीम् । पुरुषाणामधिकारः पुरुषाधिकारस्तस्मिन् पुरुषाधिकारे ॥ ५१ ॥

व्याकरणम्—करोति=कृ+लट् । समुपैति=सम्+उप+इण्+लट् ॥५१॥

कोषः—'सभासमितिसंसदः' इत्यमरः ॥ ५१ ॥

पदार्थ—यः=जो ( व्यक्ति ) अशेषजनातिरिक्तां=सम्पूर्ण लोकोंसे अधिक । सम्भावनाम्=योग्यता को । क्रियाभिः कार्यों द्वारा । अर्थवतीं करोति=सार्थक करता है। संसत्सु=सभाओं में । पुरुषाधिकारे जाते=योग्य पुरुषों की गणना होने पर । पूरणी संख्या=पूरा करने वाला अङ्क । तं=उसको । न समुपैति=नहीं प्राप्त होता ।

भावार्थ—जो पुरुष लोकातिशायी पराक्रमको पाकर उसे कार्यरूपमें परिणित कर देता है ( अर्थात् जिसके कार्योंसे उसकी महती योग्यता प्रकट हो जाती है ) उस पुरुषकी समानता के लिए योग्य पुरुषों को प्रणयनके समय फिर कोई दूसरी संख्या उसके पास तक नहीं पहुँचती अर्थात् वही अद्वितीय माना जाता है ।

विशेष—सर्वाधिक पौरुष प्रकट करनेवाला संसारमें अद्वितीय योग्य पुरुष कहलाता है कोई उसकी बराबरी नहीं कर सकता । मेरी रक्षा न कर पानेसे जो क्षत्रियत्व और कार्मुक धारित्व तुम्हारे लिए व्यर्थ-सा हो गया है, यदि तुम अपना वही पौरुष प्रकट कर दो तो गुण हो जायगा ॥ ५१ ॥

प्रियेषु यैः पार्थ ! विनोपपत्तेर्विचिन्त्यमानैः क्लममेति चेतः ।
तव प्रयातस्य जयाय तेषां क्रियादधानां मघवा विघातम् ॥५२॥

अन्वयः—हे पार्थ ! उपपत्तेः, विना, प्रियेषु, विचिन्त्यमानैः, यैः, चेतः,

क्लमम्, एति, जयाय, प्रयातस्य, तव, तेषाम् अघानां विघातं मघ क्रियात् ॥ ५२ ॥

व्याख्या—हे पार्थ !=पृथापुत्र ! उपपत्तेः=युक्तेः, विना=अन्तरा, अकार नेत्यर्थः । प्रियेषु=इष्टवस्तुषु । विचिन्त्यमानैः=सहसा शोच्यमानैः अहह! अस्मद्विना तत्र ते कथं वर्त्तन्ते ! कोऽस्मदितरस्तेषां दुःखत्रयं करिष्यत्यथुनेत्ये माशङ्क्यमानैर्विषयैरित्यर्थः चेतः=चित्तं । क्लमं=खेदम् । एति=गच्छति जयाय=विजयाय, शत्रुपराजयहेतव इत्यर्थः । प्रयातस्य=प्रस्थितस्य, तव अर्जुनस्य तेषाम्=मनःखेदकराणाम्, अघानाम्=पापानां, विघातम्=उन्मूलन मघवा=इन्द्रः, क्रियात्=करोतु ॥ ५२ ॥

भावार्थः—हे अर्जुन ! विजयार्थं तपसि प्रस्थितस्य तव मनसि हेतुं कि वोत्पन्नैरस्माकं व्यसनैः खेदो मा भूत् । भगवानिन्द्रः तानि ते प्रियजननि त्तानि दुःखानि सप्रशमयतु ।

समासः—पृथायाः कुन्त्या अपत्यं पुमान् पार्थस्तत्सम्बुद्धौ हे पार्थ ! वि षेण चिन्त्यन्त इति विचिन्त्यमानानि तैर्विचिन्त्यमानैः ॥ ५२ ॥

व्याकरम्—इति=इण्=लट् । क्रियात्=कृ+आशिषि लिङ् ॥ ५२ ॥

कोषः—'उपपत्तिः सुयुक्तिः स्याद्धेतुप्रतिपादनम्' इति कोषः । 'चित्तं चेतो हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरः । 'कलुषं वृजिनैनोऽघमंहोदुरि दुष्कृतम्' इत्यमरः । 'इंद्रो मरुत्वान्मघवा विडोजाः पाकशासनः' इत्यम ॥ ५२ ॥

पदार्थ—पार्थ=हे अर्जुन ! प्रियेषु=आत्मीयजनों (हमलोगों) के विष में । उपपत्तेः विना=विना किसी कारणके । विचिन्त्यमानैः=(मनमें) सो जाते हुए । यैः=जिनसे । चेतः क्लममेति=चित्त खिन्न हो जाता है । जयाय विजयके लिए । प्रयातस्य=प्रस्थान करते हुए । तव=तुम्हारे । तेषामघानां उन दुःखोंका । मघवा=इन्द्र । विघातं नाश=क्रियात् करे ।

भावार्थ—हे पार्थ ! विजयके निमित्त तपस्याके लिए जाते हुए तुम्हा मनमें अपने प्रियजनों (हम लोगों) के विषयमें अकारण उत्पन्न हुई उत्कण्ठा से खिन्न होने लगेगा, अतः भगवान् इन्द्र उन दुःखोंको शान्त करें ।

विशेष—यद्यपि द्रौपदी 'अस्मद्विना मा भृशमुन्मनीभूः' कह चुकी है फिर भी उपसंहारमें शुभाशंसात्मक मङ्गलका प्रयोग कर रही है। क्षत्रियोंके प्रधान देवता इन्द्र हैं और अर्जुन सर्वप्रथम इन्द्रकी ही आराधना करने जा रहे हैं, अतः तुम्हारे दुःखोंको इन्द्र शान्त करें ऐसा कहा है ॥ ५२ ॥

मा गाश्चिरायैकचरः प्रमादं वसन्नसम्बाधशिवेऽपि देशे।
मात्सर्यरागोपहतात्मनां हि स्खलन्ति साधुष्वपि मानसानि ॥५३॥

अन्वयः—असम्बाधशिवे, अपि, देशे, चिराय, एकचरः, वसन्, (त्वम्) प्रमादं. मा गाः, हि, मात्सर्यरागोपहतात्मनां, मानसानि, साधुषु, अपि स्खलन्ति ॥ ५३ ॥

व्याख्या—असम्बाधशिवे = असङ्कटे, शङ्काविहीने वा। देशे = प्रदेशे, अपि चिराय = चिरकालम्, एकचरः=एकाकी, वसन्=तिष्ठन्, सन् प्रमादम्= असावधानतां, मा गाः=नहि गच्छ। हि=यस्माद्, मात्सर्यरागोपहतात्मनां = द्वेषप्रीतिदूषितचित्तानां जनानामिति शेषः। येषामकारणमेव परोत्कर्षयिष्यते द्वेषकरणेऽनुरागो जायते, तादृशानामित्यर्थः। साधुषु=सज्जनेषु, शश्वत्परहित-तत्परेषु, अपि मानसानि=मनांसि' स्खलन्ति=पतन्ति। साधूनामसाधवः प्रकृत्या वैरिणो भवन्तीति ॥

भावार्थः—यद्यपि यत्रत्वया तपः करिष्यते तत् स्थानं निर्विघ्नमतीव कल्याणकरं च, तथापि चिरायैकाकी तत्र वसन् प्रमादं मा कार्षीः। यतो हि रागद्वेषदूषितचेतसां दुष्टानां स्वभाव एवैष यत् सज्जनेष्वपि ते विकुर्वते।

समासः एकश्चासौ चरश्च एकचरः न सम्बाधम् असम्बाधम्, असम्बाधञ्च शिवम् असम्बाधशिवं, तस्मिन्नसम्बाधशिवे। मत्सरस्य भावो मात्सर्यम् मात्सर्यं च रागश्च मात्सर्यरागौ, ताभ्यां मात्सर्यरागाभ्यामुपहत आत्मा येषां मात्सर्यरागोपहतात्मनाम् ॥ ५३ ॥

व्याकरणम्—मा गाः=मा+इ+लुङ्। इणो गाऽऽदेशो माङ्योगेऽडभावश्च। वसन्=वस+शतृ। स्खलन्ति=स्खल्+झि ॥ ५३ ॥

कोषः—'चिराय चिरात्राय चिरस्याद्याश्चिरार्थका' इत्यमरः।'प्रमादोऽनवधानता' इत्यमरः। 'सङ्कटं नामतु सम्बाध' इत्यमरः। 'श्वःश्रेयसं शिवं भद्रं

कल्याणं मङ्गलं शुभम्' इत्यमरः 'अन्योत्कर्षं विलोक्याशु यः खिद्यति स मत्सरी' इति कोषः ॥ ५३ ॥

पदार्थ—असम्बाधशिवे=संकटोंसे रहित होनेके कारण कल्याणकर। देशेऽपि=स्थान ( इन्द्रकील पर्वत ) पर भी। चिरकालके लिये। एकचरः=अकेले। वसन्=रहते हुए। प्रमादं मा गाः=असावधान न होना। हि=क्योंकि मात्सर्यरागोपहतात्मनां=द्वेष और स्नेहसे नष्ट चित्तवालोंके। मनांसि=चित्त साधुष्वपि=सज्जनोंके विषयमें भी। स्खलन्ति=विकृत हो जाते हैं।

भावार्थ—यद्यपि तुम जहाँ पर तपस्या करने जा रहे हो ( भगवान् इन्द्र से रक्षित होने के कारण ) वह स्थान निर्विघ्न और सुखद है, फिर भी दीर्घ काल तक अकेले वहाँ रहना है अतः असावधान न रहना। क्योंकि रागद्वेष से विकृत चित्तों वाले दुष्ट लोग सज्जनों का भी अपकार करने में नहीं चूकते।

विशेष--'श्रेयांसि बहुविघ्नानि भवन्ति, यह नियम है। किसी भी भले काम में विघ्न हुआ ही करते है। फिर अर्जुन तो शत्रुओं को जीतने की इच्छा से तपस्या कर रहा है। वे उसकी तपस्या में किसी भी प्रकार विघ्न करने से न चूकेंगे। इसीलिए द्रौपदी सावधान कर दे रही है कि रागद्वेष से विकृत चित्तवाले दुष्ट लोग निरीह व्यक्तियों को भी कष्ट देते हैं तुम तो विशेष स्वार्थ से तप कर रहे हो तुम्हारी तपस्या में शत्रु विघ्न अवश्य ही करेंगे, अतः सावधान रहना ॥ ५३ ॥

तदाशु कुर्वन्वचनं महर्षेर्मनोरथान्नः सफलीकुरुष्व।
प्रत्यागतं त्वाऽस्मि कृतार्थमेव स्तनोपपीडं परिरब्धुकामा ॥ ५४ ॥

अन्वयः—तद्, महर्षेः, वचनम्, आशु, कुर्वन्, नः, मनोरथान्, सफलीकुरुष्व, कृतार्थं, प्रत्यागतम् एव, त्वा, स्तनोपपीड, परिरब्धुकामा, अस्मि ॥ ५४ ॥

व्याख्या—ततः=तस्मात् कारणात्, वा, तत्=पूर्वोक्तम्, आशु=शीघ्रं महर्षेः=व्यासस्य, वचनं=वाणीं कुर्वन्=प्रतिपालयन्, त्वमिति शेषः। नः=अस्माकं, स्वसकलपरिवाराणामित्यर्थः। मनोरथान्=अभिलाषान्=शत्रुपराजयपूर्वकस्वराज्यलाभरूपान्, सफलीकुरुष्व=साफल्यं गमयेत्यर्थः। अथ=तप

कृतार्थं=कृतकृत्यं, साधितसाध्यमित्यर्थः। प्रत्यागतम्=पुनरागतम्, एव, त्वाम् अर्जुनं, स्तनोपपीडं=कुचोपपीडं, स्तनयोरुपपीडचेत्यर्थः। परिरब्धुकामा= आलिङ्गितुकामा, ( अहं द्रौपदी ) अस्मि।

भावार्थः—अतः शीघ्रमेव महर्षेरादेशमनुतिष्ठन्नस्माकं मनोरथान् सार्थकान् कुरु। यदा कृतकृत्यः सन् प्रत्यागमिष्यसि तदा त्वां गाढमालिङ्गितुमिच्छामि।

समासः—कृतोऽर्थो येन सः, कृतार्थस्तं कृतार्थम्। परिरब्धुं कामोऽभिलाषो यस्याः सा: परिरब्धुकामा। 'तुं काममनसोरपी' त्यनेन 'म' कारलोपो जातः॥ ५४॥

व्याकरणम्—कुर्वन्=कृ+लट्+शतृ। सफलीकुरुष्व=सफली+कृ+लोट्। अस्मि=अस्+लट्। स्तनोपपीडं=स्तनयोरुपपीडच, इत्यत्र 'सप्तम्यां चोपपीडरुधकर्षः' इति णमुल्। परिरब्धुकामा='तुं काममनसोरपि' अनेन 'म' कारस्य लोपः। त्वा=त्वाम्, 'त्वमौ द्वितीयायाः' इति त्वाऽऽदेशः॥ ५४॥

कोषः—'सत्वरं चपलं पूर्णमविलम्बितमाशु च' इत्यमरः। 'व्याहार उक्तिर्लपितं भाषितं वचनं वच' इत्यमरः। इच्छा काङ्क्षा स्पृहा तृड् वाञ्छा लिप्सा मनोरथः' इत्यमरः। स्तनौ कुचावुरोजौ च वक्षोजावपि तौ यताविति कोषः॥ ५४॥

पदार्थः—तद्=इसलिये। महर्षेः वचनं=व्यासजी के वचन को। आशु=शीघ्र ही कुर्वन्=( पालन ) करते हुए। ( तुम ) नः=हमारे। मनोरथान्=अभिलाषों को। सफलीकुरुष्व=सफल करो। कृतार्थं=कार्य सिद्ध करके। प्रत्यागतमेव=लौटे हुए ही। त्वा=तुमको। स्तनोपपीडं=स्तनों में पीड़ा होने लगे जिसमें ऐसे ( गाढ़ )। परिरब्धुकामा अस्मि=आलिङ्गन करना चाहती हूँ।

भावार्थः—अतः शीघ्र ही महर्षि के आदेश का पालन करते हुए हमारे मनोरथों को सफल करो। हे पार्थ! मैं चाहती हूँ कि जब तुम तपस्या पूरी करके सिद्धि पाकर लौटो तब मैं तुम्हें गाढ़ आलिङ्गन करूँ।

उदीरितां तामिती याज्ञसेन्या नवीकृतोद्ग्राहितविप्रकाराम्।
आसाद्य वाचं स भृशं दिदीपे काष्ठामुदीचीमिव तिग्मरश्मिः॥ ५५॥

अन्वयः—सः, इति, याज्ञसेन्या, उदीरितां, नवीकृतोद्ग्राहितविप्रकारां, तां, वाचम्, आसाद्य तिग्मरश्मिः, उदीचीं, इव, भृशं, दिदीपे ॥ ५५ ॥

व्याख्या—सः = अर्जुनः, इति = इत्थममुना प्रकारेण, याज्ञसेन्या = द्रौपद्या, उदीरिताम् = उक्ताम्, प्रतिपादितामिति यावत्। नवीकृतोद्ग्राहितविप्रकाराम् = पुनरुद्धाटनस्मारितवैरिकृतापकारां, ताम् = इतः पूर्वोक्तां, वाचं = वाणीम्, आसाद्य = अधिगम्य, कर्णाभ्यामिति शेषः। द्रौपदीवाक्यं श्रुत्वेत्यर्थः। तिग्मरश्मिः = सूर्यः, उदीचीम् = उत्तरां, काष्ठां = दिशम्, इव, भृशम् = अतिमात्रं दिदीपे = जज्वाल।

भावार्थः—सोऽर्जुनः द्रौपद्युक्तां विस्मृतामिव शत्रुकृतपराभवानां पुनः स्मारकतया नवीकृत्य प्रतिपादयित्रीं वाचामासाद्य तथाऽत्यन्तं चुक्रोश यथोत्तरायणमासाद्य सूर्यस्तपति।

समासः—यज्ञसेनो द्रुपदस्तस्यापत्यं स्त्री याज्ञसेनी, तया याज्ञसेन्या। अनवो नवः सम्पद्यमान इति नवीकृतः, पुनरुद्धाटनेन नवीकृतः, अत एवोद्ग्राहितः, उपर्युत्थापितो विप्रकारः शत्रुकृतापकारो यथा वाचा, सा नवीकृतोद्ग्राहितविप्रकारा तां नवीकृतोदग्राहितविप्रकाराम्। तिग्माः उग्रा रश्मयो यस्य स तिग्मरश्मिः ॥ ५५ ॥

व्याकरणम्—आसाद्य = आ + षद् + क्त्वा = ल्यप्। दिदीपे = दीप् + लट् ॥

कोषः—'ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती' इत्यमरः। 'अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम्' इत्यमरः। 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इत्यमरः। 'भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः' इत्यमरः ॥ ५५ ॥

पदार्थ—सः = वह (अर्जुन)। इति = इस प्रकार। याज्ञसेन्या = द्रौपदी द्वारा। उदीरितां = कही गई। नवीकृतोद्ग्राहितविप्रकारां = (भूले हुएको फिरसे स्मरण करानेकी भाँति) नया जैसा करके पुनः अनुभावित कर दिया है पराभव जिसने, ऐसी। तां वाचं = उस वाणीको। आसाद्य = पाकर (सुनकर)। उदीचीं काष्ठाम् (आसाद्य) = उत्तर दिशाको पाकर। तिग्मरश्मिः इव = सूर्य जैसे। भृशं = अत्यन्त। दिदीपे = चमक उठा ॥

**भावार्थ**—द्रौपदीकी इस वाणीको, जिससे कि शत्रुकृत अपकार नया जैसा होकर हृदयमें उद्भूत हो गया था, सुनकर अर्जुन अत्यन्त क्रोधसे ऐसे तमतमा उठे जैसे कि उत्तरायण होनेपर सूर्य तीखा तपने लगता हैं।

**विशेष**—वर्षा और शरद्में मेघाच्छन्न होनेसे तथा हेमन्तमें तुषारावृत होनेसे जो सूर्य मृदु आतपवाला लगता था, वहीं उत्तरायण होते ही ऐसा तपने लगता है कि उसकी गर्मी सहन नहीं होती। उसी प्रकार बान्धव-स्नेहसे अथवा मुनिजनोंके सहवाससे सौम्यभावको धारण किये हुए अर्जुन द्रौपदीकी इस धिक्कारपूर्ण उक्तियोंसे शत्रुओंके प्रति तमतमा उठे ॥ ५५ ॥

**अथाभिपश्यन्निव विद्विषः पुरः पुरोधसाऽऽरोपितहेतिसंहतिः।**
**बभार रम्योऽपि वपुः स भीषणं गतः क्रियां मन्त्र इवाभिचारिकीम्॥५६॥**

**अन्वयः**—अथ, पुरः, विद्विषः, अभिपश्यन् इव, पुरोधसा, आरोपितहेतिसंहतिः, रम्यः, अपि, सः, आभिचारिकीं, क्रियां, गतः मन्त्र इव, भीषणं, वपुः, बभार ॥ ५६ ॥

**व्याख्या**—अथ = तदःस्थानोपवेशनान्तरम्, पुरः=समक्षे, विद्विषः=अरीन्, दुर्योधनादीनिति शेषः। अर्थात्तथाऽधिकोत्तेजनासम्भवात्, तपसि सर्वतो भावेन प्रवृत्तिः सूचितेति भावः। अभिपश्यन्=विलोकयन्, इव स्थित इति शेषः। पुरोधसा=पुरोहितेन, धौम्येनेत्यर्थः। आरोपितहेतिसंहतिः=समन्त्रप्रयोगपूर्वकनिकटनिवेशितायुधसमूहः, सः=अर्जुनः, रम्यः=रमणीयकलेवरः अपि, प्रकृत्येति शेषः। तदानीम्, आभिचारिकीं=तन्त्रोक्तां मारणमोहनादिरुप. क्रियां=विधानं, गतः=प्राप्तः, प्रयुक्त इत्यर्थः, मन्त्रः=अमुकं हन २ दह २ मारय २ शोषय २ इत्यादिरूप इव, भीषणम्=भयङ्करं, वपुः=कायं, बभार=धारयामास ॥ ५६ ॥

**भावार्थः**—यथा परमरमणीयोऽपि मन्त्रो मारणाद्यभिचारकर्मसु प्रयुक्तः भीषणाकारो भवति तथैव निसर्गसुन्दरोऽपि पार्थः पुरोधसा धौम्येन निबद्धास्त्रसमूहः सन् शत्रून्पुरतोऽवलोकयन्निव क्रोधेन नितरां स्फीतो बभूव।

**समासः**—हेतीनां संहतिर्हेतिसंहतिः आरोपिता हेतिसंहतिर्यस्मिन् स आरोपितहेतिसंहतिः ॥ ५६ ॥

व्याकरणम्—अभिपश्यन्+अभि+दृश्=लट्+शतृ। बभार=भृ+लिट् ॥५६

कोष:—'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृद' इत्यमरः। पुरः स्यात्पुरोऽग्रत' इत्यमरः। 'पुरोधास्तु पुरोहित' इत्यमरः। 'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रह' इत्यमरः। 'हिंसाकर्माभिचारः स्याद्' इत्यमरः। 'वेदभेदे गुप्तवादे मन्त्रः' इत्यमरः ॥ ५६ ॥

पदार्थ—अथ=( द्रौपद्युक्त वाणीको ) सुननेके बाद। विद्विषः=शत्रुओंको पुरः अभिपश्यन्निव=सामने देखता हुआ सा। पुरोधसा=पुरोहित ( धौम्य ) द्वारा। आरोपितहेतिसंहतिः=आहित हो गया है अस्त्रसमूह जिसका, ऐसा सः=वह ( अर्जुन )। रम्यः अपि=रमणीय ( आकृतिवाला ) होता हुआ भी। आभिचारिकीं क्रियां गतः=अभिचार ( जादू टोना ) सम्बन्धी क्रियाको प्राप्त। मन्त्र इव=मन्त्रकी तरह। भीषणं=भयंकर। वपुः=शरीरको बभार=धारण करता था।

भावार्थः—जैसे अत्यन्त रमणीय मन्त्रका यदि मारणादि हिंसक कार्यों में प्रयोग किया जाय तो वह भीषण हो जाता है, उसी प्रकार स्वभाव से रमणीय आकृतिवाला अर्जुन शत्रुओंको सामने देखता हुआ सा और पुरोहित द्वारा मंत्रपूर्वक अस्त्रसमूहोंसे सन्नद्ध किया गया भयंकर सा लगने लगा।

उक्तमायुधारोपणं विवृण्वन्प्रस्थानमाह त्रिभिः—

अविलङ्घ्यविकर्षणं परैः प्रथितज्यारवकर्म कार्मुकम्।
अगतावरिदृष्टिगोचरं शितनिस्त्रिंशयुजौ महेषुधी ॥ ५७ ॥

अन्वयः—परैः अविलङ्घ्यविकर्षणं, प्रथितज्यारवकर्म, कार्मुकम्; अरिदृष्टिगोचरम्, अगतौ, शितनिस्त्रिंशयुजौ, महेषुधी, ( उद्वहन्, तपोभृतां हृदयानि समाविवेश, इति ५९ तमश्लोकेन सम्बन्धः )।

व्याख्या—परैः=शत्रुभिः अविलङ्घ्यविकर्षणम्=अनतिक्रमणीयाकर्षणम्, प्रथितज्यारवकर्म=सुविदितमौर्वीशब्दविक्रमम्, एवम्भूतं कार्मुकं=धनुः गाण्डीवमिति यावत्। अरिदृष्टिगोचरं=शत्रुनयनपथम्, अगतौ=अप्राप्तौ, शितनिस्त्रिंशयुजौ=तीक्ष्णखड्गयुक्तौ, महेषुधि=महातूणीरौ उद्वहंस्तपोभृतां हृदयानि समाविवेश—इति शेषः।

भावार्थः—अथार्जुनोऽव्यर्थसन्धानं विख्यातटङ्काररवबाणमोक्षणादिकं च विशालं धनुः तथा शत्रूणामक्षिपथमप्राप्तौ तीक्ष्णखड्गसहितौ महाविषुधी चोद्वहन् ( मुनीनां हृदयानि समाविवेश )।

समासः—न विलङ्घ्यम् अविलङ्घ्य विकर्षणं यस्य तद् अविलङ्घ्यविकर्षण' रवश्च कर्म च रवकर्मणी, ज्याया रवकर्मणी, ज्यारवकर्मणी प्रथिते ज्यारवकर्मणी यस्य तत् प्रथितज्यारवकर्म। अरीणां दृष्टयोऽरिदृष्टयस्तासां गोचर इत्यरिदृष्टिगोचरस्तमरिदृष्टिगोचरम्। शितश्च निस्त्रिंशः शितनिस्त्रिंशः तेन युक्ताविति शितनिस्त्रिंशयुजौ। इषवो बाणा धीयन्ते ययोस्तौ इषुधी महान्ताविषुधी।

व्याकरणम्—कार्मुकं=कर्मन्+उकञ्। अगतौ=नञ्+गम्+क्तः।

कोषः—'मौर्वी–ज्या–शिञ्जनी–गुण' इत्यमरः। 'शब्दे निनादनिनद–ध्वनिध्वान–रव स्वाना' इत्यमर। 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इत्यमरः। रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृद' इत्यमरः। दृग्दृष्टी लोचनं नेत्रमीक्षणं चक्षुरक्षिणी' इत्यमरः। खड्गे तु निस्त्रिंशश्चन्द्रहासासिरिष्टय' इत्यमरः। तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः इत्यमरः।

पदार्थः—परैः=शत्रुओंसे। अविलङ्घ्यविकर्षणं=अनतिक्रमणीय है आकर्षण जिसका ऐसे ( और ) प्रथितज्यारवकर्म=विख्यात है मौर्वीकी टंकार और ( बाण छोड़ना ) कर्म जिसका ऐसे। कार्मुकं=धनुषको ( और )। अरिदृष्टिगोचरम् अगतौ=शत्रुओंके दृष्टिपथमें न आते हुए। शितनिस्त्रिंशयुजौ=तीक्ष्ण खड्गसे युक्त। महेषुधी=बड़े दो तर्कसोंको ( धारण करता हुआ मुनियों के हृदयमें बैठ गया )।

भावार्थ—तपस्याके लिए जाता हुआ अर्जुन धौम्यसे आहित उस धनुष को जिसे शत्रुपक्षका कोई व्यक्ति नहीं चढ़ा सकता और जिसकी टङ्कार तथा बाणमोक्षण प्रसिद्ध है ऐसे धनुषको तथा तीक्ष्णखड्गसहित शत्रुओंकी दृष्टिमें न आनेवाले दो तर्कसोंको ( धारण करता हुआ मुनियोंके हृदयोंको विरहजनित शोकसे व्याकुल करता था )।

विशेष—इन दोनों श्लोकोंकी क्रिया तीसरे श्लोकमें 'समाविवेश' यह है और ये सब विशेषण 'उद्वहन्' के है। तर्कसोंका शत्रुओंके दृष्टिगोचर न होने का अर्थ है तर्कस पीठपर लटकाये जाते हैं और अर्जुन कभी युद्धमें शत्रुओंको पीठ नहीं दिखाता अर्थात् शत्रुओंके डरसे मुँह मोड़कर भागता नहीं, सामने डटा रहता हैं, इसलिए उसकी पीठमें लटके तर्कसोंको वे देख नहीं पाते ॥५७॥

यशसेव तिरोदधन्मुहुर्महसा गोत्रभिदायुधक्षती: ।
कवचं च सरत्नमुद्वहञ्ज्वलितज्योतिरिवान्तरं दिव: ॥ ५८ ॥

अन्वय:--गोत्रभिदायुधक्षती: यशसा, इव, सहसा तिरोदधन् सरत्नं, ज्वलितज्योति:, दिव:, अन्तरम्, इव कवचं, च उद्वहन् ।

व्याख्या--गोत्रभिदायुधक्षती:=इन्द्रास्त्रातचिह्नानि, वज्रप्रहारलक्षणानी-त्यर्थ: । यशसा=कीर्त्या; इव, महसा=ओजसा, तिरोदधन्=आच्छादयन्, तथा च, सरत्नम्=मणिगणालङ्कृतं, ज्वलितज्योति:=समुदितक्षत्रं, दिव:=आकाशस्य, अन्तरम्=मध्यं, प्रकाशवन्नशोभिताकाशमिवेत्यर्थ: । कवचं च=वर्म च, लोह-निर्मिताङ्गावरणमित्यर्थ: । यत्परिधानेनेन परबाणा: नान्त: प्रविशन्ति, तद् उद्वहन्=धारयन्, क्षणं तपोभृतां हृदयानि समाविवेशे ।

भावार्थ:—खाण्डवदाहावसरे इन्द्रयुद्धे इन्द्रकृतानां प्रहाराणां व्रणानि यशसा इव स्वतेजसाऽऽच्छादयन्, रत्नजटितत्वेन दीप्तनक्षत्रं नभोऽन्तरालमिव प्रकाशमानं कवचं च धारयन् ( स तपोभृतां हृदयानि समाविवेश ) ।

समास:—गोत्रं पर्वतं भिनत्तीति गोत्रभिद् इन्द्रस्तस्य यदायुधं वज्रम्, तद् गोत्रभिदायुधं तस्य या क्षतयस्ता गोत्रभिदायुधक्षती: । रत्नै: सहितं सरत्नम् । ज्वलितानि ज्योतींषि यस्मिस्तद् ज्वलितज्योति: । तद् ।

व्याकरणम्— तिरोदधत्=तिरस्+धा+लट्+शतृ । उद्वहन्=उद्+वह+लट्+शतृ ।

कोष:—'सुरत्राता गोत्रभृद्वज्री वासवो वृत्रहा 'वृषा' इत्यमर: । 'आयुधं तु प्रहरणं शस्त्रमस्त्रम्' इत्यमर: । 'क्षति: प्रहारे हानौ च' इति विश्व: । 'यश: कीर्ति: समज्ञा च' इत्यमर: । 'महस्तूत्सवतेजसो:' इत्यमर: । रत्नं मणिर्द्वयो-रश्मजातौ मुक्ताऽऽदिकेऽपि च' इत्यमर: । 'उरश्छद: कङ्कटकोऽजगर: कवचोऽ

स्त्रियाम्' इत्यमरः। 'ज्योतिस्तारान्गिनभाज्वालादृक्पुत्रात्मधरासु च' इति वैजयन्ती ॥५८॥

पदार्थ—गोत्रभिदायुधक्षतीः=इन्द्रके आयुधोंकी चोटोंको। यशसा इव=कीर्तिसे जैसे। महसा=तेजसे। मुहुः=बारबार। तिरोदधत्=छिपाते हुए। सरत्नं=रत्नजटित होनेसे। ज्वलितज्योतिः=चमकते हुए नक्षत्रोंसे युक्त। दिवः अन्तरम् इव=आकाश का मध्य जैसे कवचं च=कवचको भी। उद्वहन्=धारण करता हुआ (तपस्वियोंके मनको शोकाकुल करता था)।

भावार्थ—इन्द्र द्वारा किये हुए प्रहारोंके घावोंको यशसे जैसे बराबर अपने तेजसे ढकते हुए और स्थान स्थान पर जड़े गये रत्नोंसे टिमटिमाते नक्षत्रोंवाले आकाश जैसे लगते हुए कवचको धारण करता हुआ (तपस्वियोंके हृदयको शोकाकुल करता था)।

विशेष—एकबार एकहजार वर्षोंतक निरन्तर-हाथीके सूँड़के बराबर घृतकी मोटी धारा, ऋषियों द्वारा किये गये यज्ञकी पूर्णाहुतिमें अग्निमें गिरती रही, अग्नि उसे अजीर्ण हो गया। अब अग्निमें पड़ी आहुतिको अग्नि पचा नहीं पाता था और देवताओंको भोजन नहीं मिल रहा था। तब देवताओंने उसे राय दी कि खांडव बनको जला डालो, उसमें नाग बहुत रहते हैं उनकी चर्बी जब तुम्हारे उदरमें जायेगी तो तुम्हारा अजीर्ण दूर हो जायेगा। खांडव इन्द्रका वन था। जब-जब अग्नि उसे जलानेका प्रयास करता इन्द्र वर्षा करके अग्नि बुझा देता था। कई बार प्रयत्न करके वह हार गया तब भगवान् श्रीकृष्णकी शरणमें गया और वे अर्जुनको लेकर खाण्डव में पहुँचे। अग्निने खाण्डवको जलाया, इन्द्रने वर्षाकी जिसे अर्जुनने अपने बाणोंसे रोक दिया। इसीमें इन्द्र और अर्जुनका भीषण युद्ध हुआ, उसी समयसे इन्द्रके प्रहारोंके चिह्न अर्जुनके कवचमें बने हुए हैं, ऐसा कविका अभिप्राय है।

'गोत्र' नाम पर्वतोंका है। ('अद्रिगोत्रगिरिग्रावाऽचलमेलशिलोच्चयाः' इत्यमरः)। पहले पर्वतोंको पंख होते थे और वे पक्षियोंकी तरह इधर-उधर उड़ा करते थे। इन्द्रने अपने वज्रसे उनके पंख काट डाले, जिससे उसका नाम 'गोत्रभिद्' पड़ गया ॥५८॥

अलकाऽधिपभृत्यदर्शितं शिवमुर्वीधरवर्त्म संप्रयान् ।
हृदयानि समाविवेश स क्षणमुद्बाष्पदृशां तपोभृताम् ॥ ५९ ॥

अन्वयः---अलकाऽधिपभृत्यदर्शितं शिवम्, उर्वीधरवर्त्म, सम्प्रयान् सः, उद्बाष्पदृशां, तपोभृतां, हृदयानि, क्षणं समाविवेश ॥ ५९ ॥

व्याख्या---अलकाऽधिवभृत्यदर्शितं=यक्षोपदिष्टम्, अलका नामपुरी तस्या अधिपः कुवेरस्तस्य भृत्योऽनुचरो यज्ञ इति यावद् । शिवम्=मङ्गलम्; उर्वीधरवर्त्म=पर्वतमार्गं, सम्प्रयाद्=सङ्गच्छन्, सः=अर्जुनः, उद्वाष्पदृशाम्=उद्गताश्रुनयनानां, तपोभृतां=तपस्विनां, हृदयानि=मनांसि, क्षणं=मुहूर्त्तं, समाविवेश=प्रविष्टवान्, योगिनां मनांसि खेदान्वितानि चकारेत्यर्थः ॥ ५९ ॥

भावार्थः---मुनिवचनात्साहाय्यार्थमागतेन यक्षेण निर्दिष्टमबाधं हिमवन्मार्गं प्रस्थातुकामः सोऽर्जुनः क्षणमुद्बाष्पनेत्राणां तत्रत्यतपस्विनां हृदयानि वियोगदुःखक्रान्तानि चकार ।

समासः--अलकाया अधिपोऽलकाऽधिपस्तस्यालकाऽधिपस्य भृत्य इत्यलकाऽधिपभृत्यदर्शितम् । धरतीति धर उर्व्या धर उर्वीधरस्तस्य वर्त्म उर्वीधरवर्त्म। उद्भूतानि बाष्पाणि याभ्यस्ता उद्बाष्पास्ताश्च दृशो येषां त उद्बाष्पदृशस्तेषाम् उद्बाष्पदृशाम् । तपांसि बिभ्रति ये ते तपोभृतः तेषां तपोभृताम् ॥ ५९ ॥

व्याकरणम्---सम्प्रयान्+सम्+प्र+या+लट्+शतृ । समाविवेश=सम्+आ+विश्+लिट् ॥ ५९ ॥

कोषः---'कैलासः स्थानमलका पूः' इत्यमरः । भृत्ये दासेर-दासेय-दासगोप्यक-चेटका' इत्यमरः । 'श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्' इत्यमरः । सर्वसहा वसुमती वसुधोर्वी वसुन्धरा' इत्यमरः 'महीध्रे 'शिखरिक्ष्माभृदहार्यधरपर्वताः' इत्यमरः । अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः' इत्यमरः । 'लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी' इत्यमरः । 'बाष्पमुष्णाश्रु कथ्यते' इति कोषः ॥ ५९ ॥

पदार्थः---सः=वह (अर्जुन) । अलकाधिपभृत्यदर्शितं=अलकाके स्वामी (कुबेर) के सेवक (यक्ष) द्वारा दिखाये गये । शिवं=आनन्ददायक । उर्वी

धरवर्त्म = ( हिमालय ) पर्वतके रास्ते को। संप्रयान् = प्रस्थान करता हुआ। क्षणं = क्षणभर के लिए। उद्बाष्पदृशां = आँसुओं से भरी आँखों वाले। तपोभृतां = तपस्वियों के। हृदयानि = हृदयों को। समाविवेश = शोकाकुल करता था।

भावार्थ—कुबेर के सेवक यक्ष से प्रदर्शित सुखद हिमालय के मार्ग की ओर बढ़ता हुआ अर्जुन, क्षणभर के लिए जिनकी आँखों में आँसू भर आये हैं ऐसे द्वैतवनवासी तपस्वियों के हृदयों को, शोक से विह्वल कर रहा था।

विशेष—जैसा कि व्यासजी ने कहा है—'वीतस्पृहाणामपि मुक्तिभाजां भवन्ति भव्येषु हि पक्षपाताः' अर्जुन के सौजन्य से द्वैतवन के तपस्वी भी उस पर प्रसन्न रहते थे। अतः उसके वियोग में केवल पांडव ही व्याकुल न हुए प्रत्युत तपस्वियों के चित्त भी दुःखी हो गये। विश् धातु का यद्यपि प्रवेश करना अर्थ होता है किन्तु आङ् उपसर्ग से यहाँ अर्थ बदल जाता है।

यह वियोगिनी छन्द है। इसका लक्षण है "विषमें ससजा गुर्वियोगिनी" अर्थात् इसके विषम पादों में सगण, सगण, जगण और गुरु तथा समपादों में सगण, सगण, रगण और गुरु होता है। यह २१ वर्णों का छन्द होता है, और १०।११ पर विराम होता है। प्रायः विलाप और मनोव्यथा कविलोग इसी छन्द में वर्णित करते हैं॥ ५९॥

अनुजकुरथ दिव्यं दुन्दुभिध्वानमाशाः<br>
सुरकुसुमनिपातैर्व्योम्नि लक्ष्मीर्वितेने।<br>
प्रियमिव कथयिष्यन्नालिलिङ्ग स्फुरन्तीं<br>
भुवमनिभृतवेलावीचिबाहुः पयोधिः॥ ६०॥

अन्वयः—अथ, आशाः, दिव्यं, दुन्दुभिध्वानम्, अनुजगुः, व्योम्नि, सुरनिपातैः, लक्ष्मीः वितेने, अनिभृतवेलावीचिबाहुः, पयोधिः, प्रियं, कथयिष्यन्, इव, स्फुरन्तीं, भुवम् आलिलिङ्ग॥ ६०॥

व्याख्या—अथ = अर्जुनप्रयाणोत्तरकाले, आशाः दिशः, दिव्यं = स्वर्गसम्बन्धिनं; न तु लौकिकं, दुन्दुभिध्वानम् = भेरीशब्दम्, अनुजगुः = अनुदध्वनुः,

दिक्षु भेरीशब्दोऽभूदित्यर्थः। तथा च आशा एव कन्यः, सुरकुसुमनिपातैः=देव-पुष्पवर्षणैः, वा, सुरकुसुमानि पारिजातपुष्पाणि, तेषां निपातैः व्योम्नि=गगने, लक्ष्मीः=श्रीः, वितेने=वितस्तरे। अर्थात्तदानीं खात्पुष्पवृष्टिजातेति भावः। तथा च, अनिभृतवेलावीचिबाहुः=चञ्चलतटहरिभुजः, पयोधिः=समुद्रः, प्रियम्=प्रेमपूर्णं वचनम् इति शेषः। कथयिष्यन्=कथयितुमिच्छन्, इव स्फुरन्तीम्=उल्लसन्तीम्, भुवन्=महीम्, आलिलिङ्ग=परिषस्वजे, आलिङ्गितवानित्यर्थः॥ ६०॥

**भावार्थः**—तपस्यार्थं पार्थे प्रस्थिते सति देवीः दुन्दुभिं वादयामासुः दिशश्च तत्प्रतिध्वनिमकार्षुः, देववर्षितैः कुसुमैराकाशे कापि विलक्षणशोभाऽभूत्, समुद्रश्च शुभां वार्तां कथयिष्यन्निव चञ्चलतटवर्तितरङ्गरूपैर्भुजैः हर्षोत्फुल्लां भुवमालिलिङ्ग।

**समासः**—दुन्दुभेर्ध्वानो दुन्दुभिध्वानस्तं दुन्दुभिध्वानम्। कुसुमानां निपाताः कुसुमनिपाताः सुराणां कुसुमनिपाताः सुरकुसुमनिपातास्तैः सुरकुसुमनिपातैः। वेलाया वीचयो वेलावीचयः, अनिभृता या वेलावीचयोऽनिभृत्तवेलावीचयः, ता एव बाहवो यस्य सोऽनिभृतवेलावीचिबाहुः॥ ६०॥

**व्याकरणम्**—अनुजगुः=अनु+गै+लिट्। वितेने=वि+तन्+लिट् कर्मणि। कथयिष्यन्=कथ+णिच्+लृट्+शतृ। आलिलिङ्ग=आ+लिगि+लिट्॥

**कोषः**—'स्याद्यशःपटहो ढक्का भेरी स्त्री दुन्दुभिः पुमान्' इत्यमरः। 'शब्दे निनाद-निनद-ध्वनि-ध्वान-रव-स्वना' इत्यमरः। 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ता' इत्यमरः। 'अमरा निर्जरा देवास्त्रिदशा विबुधाः सुरा' इत्यमरः। 'प्रसूनं कुसुमं सुमम्' इत्यमरः। 'द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुरस्करमम्बरम्' इत्यमरः। 'अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि' इत्यमरः। 'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु' इत्यमरः। 'भुजबाहु प्रवेष्टो दोः' इत्यमरः। 'पयोधिरब्धिः समुद्रः सागरोऽर्णव' ॥६०॥

इत्युत्तरप्रदेशान्तर्गतजौनपुरमण्डलवर्तिचकपाण्डेयपुरग्रामनिवासिना विद्वद्वरेण्य पण्डितश्रीगयादत्तपाण्डेयस्यात्मजेन डॉ० बदरीनारायण पाण्डेयेन विरचितया

राजविवर्धिनीटीकया विभूषितः किरातार्जुनीयमहाकाव्यस्य तृतीयसर्गः पूर्णतामप्राप्पात् ।

पदार्थ—अथ = प्रस्थान के बाद। आशाः = दिशाएँ। दिवं = स्वर्ग में हुए। दुन्दुभिध्वानम् दुन्दुभियों की ध्वनि को। अनुजगुः=गुंजारने लगीं। व्योम्नि = आकाश में। सुरकुसुमनिपातैः=देवताओं द्वारा बरसाये हुए कल्प-वृक्षके फूलोंसे। लक्ष्मीः=शोभा। वितेने = फैल गई। अनिभृतवेलावीचिबाहुः= चञ्चलतटवर्ती तरङ्गरूप भुजाओं वाला। पयोधिः=समुद्र। प्रियं कथयिष्यन् इव = प्रियवार्ता करता हुआ सा। स्फुरन्तीं=हर्ष से उछलती हुई। भुवं=पृथ्वी को। आलिलिङ्ग=आलिङ्गन करता था।

भावार्थ— ज्योंहीं अर्जुन जाने लगे स्वर्ग में बाजे बजे और दिशाओं से उनकी प्रतिध्वनि आने लगी। देवताओं द्वारा बरसाये गये फूलोंसे आकाशकी विलक्षण शोभा हो गई। अपनी चञ्चलतटवर्ती तरङ्गरूप भुजाओं से समुद्र हर्षित हुई पृथ्वी को शुभ समाचार सुनाता हुआ सा उसे जैसे आलिङ्गन करने लगा।

विशेष—अर्जुन और कृष्ण दोनों नर और नारायण के अवतार थे। पृथ्वी का भार हरण करने के लिए देवताओं की प्रार्थना पर भूलोक में अवतीर्ण हुए थे। जब अर्जुन दिव्य अस्त्रों की प्राप्ति के लिए तपस्यार्थ जाने लगे तो देवताओं को आशा बँध गई कि अब निश्चय ही अर्जुन भूभारको हल्का करेंगे। इसी से प्रसन्न होकर उन्होंने बाजे बजाए जिनका शब्द दिशाओंमें गूँज गया और प्रतिध्वनि के बहाने जैसे दिशाएँ भी अपनी प्रसन्नता व्यक्त करने लगीं। आकाश से फूल बरसने लगे, जिससे आकाश अत्यन्त शोभित हुआ। समुद्र से लहरें उछल-उछलकर तटवर्ती भूमिपर मिलने लगीं। अर्थात् जल, स्थल, नभ में प्रसन्नता छा गई और अर्जुन के कार्यसिद्धिसूचक शकुन होने लगे। यहाँ पर पयोधि से नायक की, स्फुरन्ती भुवंसे रोमांचित हुई नायिका की प्रतीति होती है, अर्थात् समुद्ररूप नायक हर्षित हुई पृथ्वी रूप नायिका को तरंगरूप भुजाओं से इसलिए आलिङ्गन कर रहा है कि "अर्जुन

तपस्या करने जा रहा है वह शीघ्र ही दिव्यास्त्र प्राप्त कर तुम्हारा भार हल्का करेगा" यह प्रिय वार्ता उसके कान में कहने जा रहा हो।

यह मालिनी छन्द है। इसका लक्षण है—"न न म य य युतेयं मालिनी भोगिलोकैः'। इसमें नगण, नगण, मगण, यगण, प्रत्येक पद में होते हैं और ८।७ पर विराम होता है ॥ ६० ॥

उत्तरप्रदेशान्तर्गत बस्तीग्रामनिवासी पण्डितश्री राममूर्ति द्विवेदी की कन्या डॉ० कु० रामेश्वरीकुमारी "रासेश्वरी" कृत राजेश्वरी - हिन्दी - व्याख्या युक्त किरातार्जुनीय-महाकाव्य का तृतीय सर्ग समाप्त।

## चतुर्थः सर्गः

ततः स कूजत्कलहंसमेखलां सपाकसस्याऽऽहितपाण्डुतागुणाम् ।
उपाससादोपजनं जनप्रियः प्रियामिवासादितयौवनां भुवम् ॥ १ ॥

श्रीगणेशाय नमः

### राजविवर्धिनीसंस्कृत टीका

अन्वयः—ततः जनप्रियः सः कूजत्कलहंसमेखलां सपाकसस्याऽऽहितपाण्डुतागुणां भुवम् आसादितयौवनां प्रियाम् इव उपजनम् उपाससाद ।

व्याख्या—ततः तपश्चर्यायै प्रस्थानानन्तरं; जनप्रियः लोकजनरञ्जकः सर्वजनवल्लभः, सः अर्जुनः, कूजत्कलहंसमेखलां रणद्राजहंसमेखलारवम्, सपाकसस्याऽऽहितपाण्डुतागुणां परिपक्वधान्योपपादितपाण्डुतागुणां, भुवम् भूमिम्, आसादितयौवनाम् प्राप्ततारुण्याम्, प्रियाम् इव वल्लभाम् इव, उपजनं जनसमीपे, उपाससाद उपागतः । वंशस्थवृत्तम् । तल्लक्षणं यथा—'जतौ तु वंशस्थमुदीरितं जरौ' । पद्येऽस्मिन्नुपमाऽलङ्कारः ।

भावार्थः—मेखलेव कूजतां कलहंसानां स्वनवतीं, धान्यानां परिपक्वतया पाण्डुवर्णतामादधानां ग्रामसमीपवर्तिनीं भुवं स जनप्रियोऽर्जुनः कलहंसैरिव मेखलाभिः शब्दायमानां परिपक्वसस्यवत्पाण्डुतामादधानां युवतीं प्रियामिव प्रपेदे ।

समासः—जनप्रियः | जनानां प्रियः ( ष० तत्पु० ) । कूजत्—कलहंसमेखलाम्-कलहंसाः मेखलाः इव ( उपमितकर्म० ) कूजन्ती कलहंसमेखला यस्याः ताम् (बहुव्रीहिः) । सपाकसस्याऽऽहितपाण्डुतागुणाम्—पाकेन सहितानि सपाकानि ( तुल्ययोगबहु० ) सपाकानि च तानि सस्यानि (कर्मधारयः) सपाकसस्यैः आहितः ( तृ० तत्पु० ) सपाकसस्याऽऽहितः पाण्डुता एव गुणः यस्याः ताम् ( बहुव्रीहिः ) । आसादितयौवनाम्—आसादितं यौवनं यया ताम् ( बहुव्रीहिः ) ।

कोशः—'स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नराः'। 'कादम्बः कलहंसः स्यात्'। 'स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा'। 'वृक्षादीनां फलं सस्यम्'। 'भूर्भूमिरचलाऽनन्ता'। अमरकोषः।

व्याकरणम्—ततः—तद् शब्दात् 'पञ्चम्यास्तसिल्' इति तसिल् प्रत्ययः। प्रियाम्—प्रीञ्+कः+टाप्+अम्। अत्र 'इगुपधज्ञाप्रीकिरः कः'। इति कप्रत्ययः। उपाससाद—उप+आङ्+सद्+लिट्+तिप्।

श्रीविघ्नविनाशाय नमः

## राजेश्वरी हिन्दी व्याख्या

पदार्थः—ततः=प्रस्थानके बाद। जनप्रियः=लोकप्रिय। सः=वह (अर्जुन) कूजत्कलहंसमेखलां=शब्द करते हुए कलहंसोंकी पंक्ति ही जिसकी मेखला (=करधनी) है ऐसी। (तथा) सपाकशस्याहितपाण्डुतागुणां=पके हुए धानों में स्थित है पाण्डुता गुण जिसका ऐसी। भुवम्=भूमिको [कूजत्कलहंसमेखलां=शब्द करते कलहंसों की तरह बज रही है मेखला जिसकी ऐसी] (तथा) सपाकशस्याहतपाण्डुतागुणां=पके हुए धानोंकी तरह गौरवर्ण वाली] आसादितयौवनां=पूर्णयुवावस्थाको प्राप्त। प्रियामिव=प्रियाकी तरह। उपवनम्=लोगों (स्त्रीपक्षमें—सखियों) के समक्ष। उपाससाद=प्राप्त हुआ।

हिन्दी—इन्द्रकील पर्वतसे प्रस्थान करनेके बाद जनप्रिय अर्जुन कूजते हुए हंस जहाँ मेखलाकी तरह लग रहे हैं और परिपक्व दशाको प्राप्त धान्यराशिके कारण गौरवर्णवाली भूमिमें कृषकोंके समक्ष ऐसे पहुँचा जैसे कोई पुरुष हंसोंकी भाँति शब्द करनेवाली करधनी पहनी हुई और पके धानों जैसी गौरवर्णकी, प्राप्तयौवना प्रियाके पास सखियोंके समक्ष पहुँचता हो।

अभिप्राय—इन्द्रकील पर्वतसे चलकर हिमालय पहुँचने तक की मध्यवर्ती भूमिका वर्णन इस सर्गमें किया गया है। इस पद्यमें पूर्ण उपमा अलंकार है। प्रिया उपमान है, भूमि उपमेय, कूजत्कलहंसमेखलात्व और पाण्डुता सामान्य धर्म तथा इव वाचक शब्द हैं। इसमें वंशस्थ छन्द है, जिसकी लक्षण है—"जतौ तु वंशस्थमुदीरितं जरौ"॥ १॥

विनम्रशालिप्रसवौघशालिनीरपेतपङ्काः ससरोरुहाऽम्भसः ।
ननन्द पश्यन्नुपसीम स स्थलीरुपायनीभूतशरद्गुणश्रियः ॥ २ ॥

अन्वयः—सः विनम्रशालिप्रसवौघशालिनीः अपेतपङ्काः ससरोरुहाऽम्भसः, उपायनीभूतशरद्गुणश्रियः स्थलीः उपसीम पश्यन् ननन्द ।

व्याख्या—सः अर्जुनः, विनम्रशालिप्रसवौघशालिनीः अवनतशालिफलसम्भारसुशोभनीः, अपेतपङ्काः अकर्दमाः, ससरोरुहाम्भसः कमलसहिततोययुताः, उपायनीभूतशरद्गुणश्रियः (अर्जुनम्प्रति) उपहारीकृतशरद्कालसम्पत्तीः, स्थलीः अकृत्रिमभूमीः, उपसीम ग्रामसीमासु, पश्यन् विलोकयन्, ननन्द प्रसन्नो बभूव । अत्र परिणामालङ्कारः ।

भावार्थः—सीमापर्वत्तिषु प्रदेशेषु विनतधान्यफलानि क्षेत्राणि सकमलानि जलानि च शोभनान्यासन् । तानि शरदर्तुना प्रदत्तोपहारभूतानीव मत्वा ताः स्थलीः पश्यन् स प्रसन्नो बभूव ।

समासः—विनम्रशालिप्रसवौघशालिनीः—शालीनां प्रसवाः (ष० तत्पु०) तेषाम् ओघः (ष० तत्पु०) विनम्रः च असौ शालिप्रसवौघः (कर्मधारयः) विनम्रशालिप्रसवौघेन शालन्ते तच्छीलाः, ताः । अत्र ताच्छील्यार्थे णिनिः प्रत्ययः । अपेतपङ्काः—अपेतः पङ्कः याभ्यः ताः (बहुव्रीहिः) । स सरोरुहाम्भसः सरसि रोहन्तीति सरोरुहाणि (उपपद) । सरोरुहैः सहितानि ससरोरुहाणि (तुल्ययोगबहु०) ससरोरुहाणि अम्भांसि यासु ताः (बहुव्रीहिः) । उपायनीभूतशरद्गुणश्रियः—शरदः गुणाः (ष० तत्पु०) तेषां श्रियः (ष० तत्पु०) उपायनीभूताः शरद्गुणश्रियः यासु ताः (बहुव्रीहिः) ।

व्याकरणम्—सरोरुहाणि—सरस्+रुह्+कः+जस् । उपायनीभूताः—अनुपायनम् उपायनं यथा सम्पद्यते तथा भूताः ताः, अत्र 'कृभ्वस्तियोगे सम्पद्यमाने कर्तरि च्विः' इति च्वि प्रत्ययः, 'अस्य च्वौ' इति ईत्वम् । पश्यन्-दृश् (पश्य) +शतृ ।

कोशः—'शालयः कलमाद्याश्च' । 'निषद्वरस्तु जम्बाल, पङ्कोऽस्त्री शादकर्दमौ' । 'उपायनमुपग्राह्यमुपहारस्तथोपदा' । 'स्थलं स्थली' ।

पदार्थः—सः = वह (अर्जुन)। विनम्रशालिप्रसवौघशालिनीः = झुके हुए धानोंकी बालियोंसे भरी। अपेतपङ्काः = कीचड़ोंसे रहित। ससरोरुहाम्भसः= कमलोंसे युक्त जलोंवाली। उपायनीभूतशरद्गुणश्रियः=उपहारके समान प्राप्त शरद्की शोभासम्पत्तिवाली। उपसीम स्थलीः=सीमाके पासकी भूमियोंको। पश्यन्=देखता हुआ। ननन्द=प्रसन्न होता था।

हिन्दी—गांवोंकी सीमाओंके समीप, झुके हुए धानकी बालोंसे शोभित, कीचड़से रहित, स्वच्छ, खिले कमलोंसे पूर्ण जलवाले भूमिखण्डोंको देखकर अर्जुन बड़ा प्रसन्न हुआ। उसे प्रतीत होता था मानो उक्त शोभा-सम्पित्तियोंको शरद् ऋतु उसके लिए उपहार भेंट लाई हो।

अभिप्राय—अर्जुनके मार्गमें जंगल भी पड़ते होंगे किन्तु शरद्का यह रमणीय दृश्य उसे गांवोंके समीप ही दीखता था क्योंकि गांवोंके पास ही लोग खेती करते हैं। इस वर्णनसे कविका अभिप्राय यह है कि शरत्कालमें राजा दिग्विजयके लिए प्रस्थान करते हैं, अर्जुनका भी यह प्रस्थान विजयप्रद होगा। राजाको उसकी प्रजा उपहार देती है, यहाँ अर्जुनको दूर ग्रामवासी लोग पहिचानते नहीं, अतः शरद्ऋतु स्वयं उनकी ओरसे शोभाका उपहार लेकर उसका स्वागत कर रही है। इसमें परिणाम अलंकार है, क्योंकि शरद्के गुणोंमें जो उपायनका आरोप किया गया है वह प्रसन्न होने रूप क्रियाके लिए उपयोगी है॥ २॥

तुतोष पश्यत् कलमस्य सोऽधिकं सवारिजे वारिणि रामणीयकम्।
हृतप्रियादृष्टिविलासविभ्रमा मनोऽस्य जह्रुः शफरीविवृत्तयः॥३॥

अन्वयः—विस्मयाऽऽकुलैः उन्मीलितपद्मलोचनैः पयोभिः निरीक्ष्यमाणाः इव (स्थिताः) हृतप्रियादृष्टिविलासविभ्रमः शफरीविवृत्तयः अस्य मनः जह्रुः।

व्याख्या—विस्मयाऽऽकुलैः आश्चर्यचित्तैः उन्मीलितपद्मलोचनैः विकसित पद्मनेत्रैः, पयोभिः नीरैः, निरीक्ष्यमाणाः इव दृश्यमानाः इव स्थिताः, हृतप्रिया-दृष्टिविलासविभ्रमाः अपहृतवल्लभानयनोलासशोभाः शफरीविवृत्तयः प्राष्ठी-स्फुरणानि, अस्य अर्जुनस्य, मनः स्वान्तं हृदयमित्यर्थः। जह्रुः आकृष्टं चक्रुः। वंशस्थवृत्तम्। पद्येऽस्मिन्नुपमोत्प्रेक्षालङ्कारयोः संसृष्टिः।

भावार्थः—विकचकमललोचनैः सरोभिः। सादृश्यमवलोक्यमानानि मत्स्यी-स्फुरणानि कामिनीदृग्विलासविभ्रमहारितया अर्जुनस्यापि मनो जह्रुः।

समासः—विस्मयाऽऽकुलैः-विस्मयेन आकुलानि तैः ( तृ० तत्पु० )। उन्मीलितपद्मलोचनैः, पद्मानि इव लोचनानि ( उपमानकर्म० ) उन्मीलितानि पद्मलोचनानि येषां तैः ( बहुव्रीहिः )। हृतप्रियादृष्टिविलासविभ्रमाः—प्रियायाः दृष्टिः ( ष० तत्पु० ) प्रियादृष्टयोः विलासाः ( ष० तत्पु० ) तेषां विभ्रमः ( ष० तत्पु० ) हृतः प्रियादृष्टिविलासविभ्रमः याभिः ताः ( बहुव्रीहिः ) शफरीविवृत्तयः—शफरीणां विवृत्तयः ( ष० तत्पु० )।

व्याकरणम्—निरीक्ष्यमाणाः—निर्+ईक्ष्+कर्मणि यक्+शानच्+जस्। 'आने मुक्—आगमः। जह्रुः—हृञ्+लिट्—झि+उस्।

कोशः—'विस्मयोद्भुतामाश्चर्यं चित्रमप्यथ भैरवम्'। लोचनं नयनं नेत्र-मीक्षणं चक्षुरक्षिणी'। 'पयः क्षीरं पयोऽम्बु च'। 'प्रोष्ठी तु शफरी द्वयोः'। अमरकोषः।

पदार्थ—विस्मयाकुलैः=आश्चर्य भरे। ( अतएव ) उन्मीलितपद्मलोचनैः =विकसित कमल से जिनके लोचन हैं ( ऐसे ) सरोभिः=तालाबो से। निरी-क्ष्यमाणा इव=देखे जाते हुए से। हृतप्रियादृष्टिविलासविभ्रमाः=हरण किया है प्रियाओंके कटाक्षपातकी शोभाको जिन्होंने (ऐसी) शफरीविवृत्तयः=मछलियों की चिलके। अस्य=इस ( अर्जुन ) के। मनः जह्रुः=मनको हरती थी।

हिन्दी—खिले कमलरूप नेत्रोंसे तालाबों द्वारा आश्चर्यसे देखी जाती हुई सी और युवतियों के आँख नचानेकी क्रियाओंको हरने वाली मछलियों की चिलके इस अर्जुन के मन को भी हर ले रही थीं।

अभिप्राय—तात्पर्य यह है कि जलसे भरे तालाबोंमें कमल खिल रहे थे। और उनमें मछलियाँ ऊपर-नीचे ऐसे चिलक रही थीं मानों कोई युवती आँख मटका रही हो। यह सारा दृश्य अर्जुनको भी मोह रहा था। संस्कृत काव्य-साहित्य में युवतीयों के अक्षिपरिवर्तन क्रियाकी मछलियोंके चिलक मारनेसे उपमा कई स्थानोंपर दी गई। क्योंकि लोचनों का आकार मछलियाँ की तरह होता है और पुतलियाँ भी इतनी शीघ्रता से घूमती हैं, जैसे मछली ऊपर

नीचे घूम जाती है। चूंकि वे प्रियाओं की दृष्टि दृष्टिविलासकी शोभाको हरने वाली होती है। अतः अर्जुनके मन को भी हर लेती हैं अर्थात् मोहित करना उनका स्वभाव ही है इसलिये यह हेतु अलंकार है ॥ ३ ॥

सुदुर्लभे नाऽर्हति कोऽभिनन्दितुं प्रकर्षलक्ष्मीमनुरूपसङ्गमे ॥४॥
निरीक्ष्यमाणा इव विस्मयाऽऽकुलैः पयोभिरुन्मीलितपद्मलोचनैः।

अन्वयः—सः सवारिजे वारिणि कलमस्य रामणीयकं पश्यन् अधिकं तुतोष। सुदुर्लभे अनुरूपसङ्गमे (सति) प्रकर्षलक्ष्मीम् अभिनन्दितुं कः न अर्हति ?

व्याख्या—सः अर्जुनः, सवारिदे कमलयुक्ते, वारिणि सलिले कलमस्य शालिधान्यस्य, रामणीयकं सौन्दर्यं, पश्यन्नलोकयन्, अधिकं पर्याप्तं, तुतोष प्रसन्नो बभूवः। तदेवार्थं सामान्यतया समर्थयते—सुदुर्लभे अत्यन्तदुष्प्राप्ये अनुरूपसङ्गमे सुयोग्यसमागमे लब्धेसति प्रकर्षलक्ष्मीम् उत्कर्षश्रियाम् अभिनन्दितुं स्तोतुं कः जनः,अर्हति योग्यो न भवति। वंशस्थवृत्तम्। पद्येऽस्मिन् सामान्येन विशेषसमर्थन रूपोऽर्थान्तरन्यासालङ्कारः।

भावार्थः—यत्र केदारेषु धान्यानि परिपक्वानि तत्रैवावरुद्धेषु जलेषु कमलान्यपि विकचितानि। उभयोरपि धान्यकमलयोः जले पतितेन प्रतिबिम्बेन सह द्विगुणां शोभां पश्यन्सोऽत्यन्तं मुग्धो बभूव। दुष्प्राप्यं योग्यं च सम्बन्धं प्राप्योत्कृष्टां शोभां को नाभिनन्दति।

समासः—सवारिजे-वारिणि जातं वारिजम् (ष० तत्पु०) वारिजेन सहितं तस्मिन् (तुल्ययोगबहु०)। सुदुर्लभे—दुःखेन लब्धुं शक्यं दुर्लभम्, अत्यन्तं दुर्लभम् इति सुदुर्लभम्। अनुरूपसङ्गमे-अनुरूपः च असौ सङ्गमः तस्मिन् (कर्मधारयः)। प्रकर्षलक्ष्मीम्—प्रकर्षस्य लक्ष्मीः ताम् (ष० तत्पु०)।

व्याकरणम्—रमणीयकम्—रमणीय+वुञ्+अकः—आदिवृद्धिः। पश्यन्-दृश् (पश्य) + शतृ। तुष्+लिट्+-तिप्—णल्। अभिनन्दुम्—अभि+नदि+तुमुन्। अर्हति—अर्ह+लट्—तिप्।

कोशः—आपः स्त्री भूम्नि-वारि सलिलं कमलं जलम्'। "शालयः कलमाश्च'। 'सम्पत्तिः श्रीश्च लक्ष्मीश्च'। सर्वत्राप्यमरः। 'लक्ष्मीः श्रीशोभासम्पत्प्रियङ्गुषु'। इति हेमचन्द्रः।

**पदार्थ**—सः=वह ( अर्जुन ) । सवारिजे=कमलों सहित । वारिणि=जलमें कलमस्य=धानोंकी । रामणीयकम्=रमणीयता को । पश्यन्=देखता हुआ । अधिकं तुतोष=अत्यन्त प्रसन्न हुआ । सुदुर्लभे=अत्यन्त दुष्प्राप्य । अनुरूपसङ्गमे=योग्य सम्बन्ध होनेपर । प्रकर्षलक्ष्मीम्=उत्कृष्ट शोभा की । अभिनन्दितुं=प्रशंसा करनेको । कः न अर्हति=कौन तैयार नहीं होता ।

**हिन्दी**—कमलोंवाले जल में धानोंकी शोभा को देखता हुआ अर्जुन अत्यन्त प्रसन्न हो रहा था । अति दुर्लभ और योग्य पदार्थोंका समागम होनेपर उत्कृष्ट शोभाकी कौन प्रशंसा न करेगा ।

**अभिप्राय**–धानोंके खेतसे लबालब जल भरेहैं, निरन्तर पानी रहनेसे उनमें बीच बीचमें कमल भी खिल गये हैं । कमल तालबमें होते हैं और धान खेतोंमें ये दोनों एक जगह हों ऐसा अन्यत्र दुर्लभ हैं । इन पदार्थोंके संयोगसे उक्त खेतोंकी जो विलक्षण शोभा हो रही है उसकी कोई भी प्रशंसा किये बिना न रहेगा । इसलिये उसे देखकर अर्जुनका अत्यन्त प्रसन्न होना स्वाभाविक ही है । यहाँ अनुरूप पदार्थोंके समागमसे होनेवाली शोभा का कौन समर्थन न करेगा ? इस सामान्य उक्तिसे धान और कमलके संयोगसे उत्पन्न शोभा द्वारा अर्जुन के प्रसन्न होनेरूप विशेष अर्थका समर्थन किया गया गया है इस लिए सामान्य से विशेषका समर्थनरूप के कारण अर्थान्तरन्यास अलंकार है ॥ ४ ॥

नुनोद तस्य स्थलपद्मिनीगतं वितर्कमाविष्कृतफेनसन्ततिः ।
अवाप्तकिञ्जल्कविभेदमुच्चकैर्विवृत्तपाठीनपराहतं पयः ॥५॥

**अन्वयः**—आविष्कृतफेनसन्ततिः अवाप्तकिञ्जल्कविभेदम् उच्चकैः विवृत्तपाठीनपराहतं पयः तस्य स्थलपद्मिनीगतं वितर्कं नुनोद ।

**व्याख्या**—आविष्कृतफेनसन्ततिः प्रकटितडिण्डीरसमूहम्, अवाप्तकिञ्जल्कविभेदम् स प्राप्तकेसररागापगमम्, उच्चकैः उच्चैः, विवृत्तपाठीनपराहतं लुठितमस्य विशेषालोडितम्, पयः तोयम्, तस्य अर्जुनस्य, स्थलपद्मिनीगतं पृथिवीस्थकमलिनीविषयं, वितर्कं संशयं, नुनोद निवारयामास । वंशस्थवृत्तम् । श्लोकेऽस्मिन् निश्चयान्तः सन्देहाऽलङ्कारः ।

भावार्थः—क्वचित् क्वचित् जले विकसितकमलानामधस्तात्समुत्पन्नफेन-समूहेन केसरविमिश्रणात्पीतत्वं गतेनार्जुनस्य हृदि स्थलपद्मिनीयमिति संशयः जातः पाठीनपरिवर्तजनितताड़नेन फेनविलयनादपनुनुदे ।

समासः—आविष्कृतफेनसन्ततिः-आविष्कृता फेनसन्ततिः यस्य तत् (बहुव्रीहिः)। अवाप्तकिञ्जल्कानां विभेदः (ष० तत्पु०) अवाप्तः किञ्जल्कविभेदः येन तत् ( बहुव्रीहिः ) विवृत्तपाठीनपराहृतम्—विवृत्तः च असौ पाठीनः (कर्मधारयः)। विवृत्तपाठीनेन पराहतम् (तृ० तत्पु०)। स्थलपद्मिनीगतम्—स्थले पद्मिनी (स० तत्पु०) स्थलपद्मिनीं गतः तम् (द्वि तत्पु०)। अत्र 'द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्ताऽऽपन्नैः'। इति द्वितीयतत्पुरुष समासः।

कोशः—'डिण्डीरोऽब्धिकफः फेनः'। 'किञ्जल्कः केसरोऽस्त्रियाम्' 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे'। सहस्रदंष्ट्रः पाठीनः' अमरकोषः।

व्याकरणम्—उच्चैः एव उच्चकैः 'अव्ययसर्वनाम्नामकच् प्राक्टेः' इति अकच् प्रत्ययः। नुनोद—णुद्+लिट्+तिप्+णल्। 'णो नः' इति णस्य नकारः

पदार्थः—आविष्कृतफेनसन्ततिः=प्रकट किया है अत्यन्त फेन (झाग) जिसने (ऐसा) उच्चकैः = अत्यन्त। विवृत्तपाठीनपराहत = लोटते हुए मच्छलियों से ताड़ित। पयः=जल। तस्य=उस (अर्जुन) के। स्थलपद्मिनीगतं=स्थलकमलिनी सम्बन्धी। वितर्क=संशयको। नुनोद=दूर कर देता था।

हिन्दी—कहीं-कहीं जल में खिले कमलों के नीचे एकत्रित हुआ झाग केसर जड़ने से पीला हो जाता था अर्जुन को स्थलकमलों का भ्रम होने लगता था। किन्तु पाठीन नामक बृहदाकर वाली मत्स्य के उलटने पर वह फेन नष्ट हो जाता था और पानी दीख पड़ने से उसका भ्रम दूर हो जाता था।

कृतोर्मिरेखं शिथिलत्वमायता शनैः शनैः शान्तरयेण वारिणा।
निरीक्ष्य रेमे स समुद्रयोषितां तरङ्गितक्षौमविपाण्डु सैकतम्॥

अन्वयः—सः शिथिलत्वम् आयता शनैः शान्तरयेण वारिणा कृतोर्मिरेखं तरङ्गितक्षौमविपाण्डु समुद्रयोषितां सैकतं निरीक्ष्य रेमे।

व्याख्या—सः अर्जुनः, शिथिलत्वं शैथिल्यभावम्, आयता सम्प्राप्तवता क्रमशः क्षीयमाणेनेत्यभिप्रायः। अतएव शनैः-शनैः मन्दं-मन्दं, शान्तरयेण प्रतिहत वेगेन, अन्यथा ऊर्मिरेखाऽनुदयादिति भावः। वारिणा नीरेण, कृतोर्मिरेखं निर्मिततरङ्गराजि, तरङ्गितक्षौमविपाण्डु सञ्जाततरङ्गकौशेयशुभ्रं, समुद्रयोषितां सरीतां, सैकतं पुलिनं, निरीक्ष्य अवलोक्य, रेमे प्रसन्नो बभूव। उपमालंकारः।

भावार्थः—प्रतिदिनं क्षीयमाणतया शनैः-शनैः स्वल्पवेगवता जलेन कृत-तरङ्गरेख भङ्गिमायुक्तदुकूलवच्छुभ्रं सिकतामयं नदीपुलिनं पश्यन्नर्जुनस्तुतोष।

समासः—शान्तरयेण—शान्तः रयः यस्य तेन (बहुव्रीहिः)। कृतोर्मि-रेखम्—ऊर्मयः एव रेखाः (रूपककर्म०)। कृता ऊर्मिरेखा यस्य तत् (बहु-व्रीहिः)। तरङ्गितक्षौमविपाण्डु—तरङ्गितं च तत् क्षौमं (कर्मधारणः) तर-ङ्गितक्षौमम् इव विपाण्डु—(उपमान-कर्म०)। समुद्रयोषिताम्—समुद्रस्य योषितः तासाम् (श० तत्पु०)।

कोशः—'तरसी तु रयः स्यदः। 'भङ्गस्तरङ्ग ऊर्मिर्वा'। 'अतसी स्यादुमा क्षुमा'। 'क्षौमं दुकूलम्'। 'तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्'। सर्वत्रा-ध्यमरकोषः।

व्याकरणम्—शिथिलत्वम्–शिथिलस्य भावः, तत्। शिथिल+त्व। आयता—आङ्+इण्+शतृ+टा। तरङ्गितम्—तरङ्गाः सञ्जाताः अस्य, तत्। तरङ्ग+इतच्। क्षौमम्—क्षुमायाः विकारः, क्षुमा+अण्—आदिवृद्धिः। सैकतम् -सिकता+अण्।

पदार्थः—सः=वह (अर्जुन)। शिथिलत्वम् आयता=शिथिलता को प्राप्त होते हुए। (अतएव) शनैः-शनैः=धीरे-धीरे। शान्तरयेण=शान्त वेगवाले। वारिणा=जल से। कृतोर्मिरेखं=की है तरङ्गों की रेखाएँ जिसमें (ऐसे)। तरङ्गितक्षौमविपाण्डु=भङ्गिमायुक्त रेशमी वस्त्र के समान शुभ्र। समुद्रयोषितां=नदियों के। सैकतं=किनारों को। निरीक्ष्य=देखकर। रेमे=तृप्त होता था।

हिन्दी—प्रतिदिन घटने से धीरे-धीरे कम वेगवाली होते हुए, जल से जिसमें रेखायें सी बन गई हैं, ऐसे नदियों के बालूमय किनारों को लहराते रेशमी वस्त्र की तरह चमचमाता देख कर अर्जुन प्रसन्न होता था।

अभिप्राय—'अतसी तूमा क्षुमा' इस कोश-वाक्य के अनुसार तीसी के रेशे को क्षौम वस्त्र कहते है। इस समय जो जारजेट नामसे बाजार में बिकता है। यह साड़ी पहिनकर जब स्त्रियाँ चलती है तो उनमें हवा से लहरें सी उठती दीखती हैं क्योंकि वह कोमल और हल्का होता है। इसीको कविने तरङ्गित शब्दसे कहा है। शुभ्र और लहराते रहनेसे क्षौमकी उपमा वालूमय नदीके तट से दी गई है। सभी नदियाँ अन्त में समुद्रमें ही मिलती है इसलिये वे समुद्र की पत्नियाँ कही जाती है ॥ ६ ॥

मनोरमं प्रापितमन्तरं भ्रुवोरलङ्कृतं केसररेणुनाऽणुना।
अलक्तताम्राऽधरपल्लवश्रिया समानयन्तीमिव बन्धुजीवकम् ॥ ७॥

अन्वयः—अणुना केसररेणुना अलङ्कृतम् मनोरमं भ्रुवोः अन्तरं प्रापितं बन्धुजीवकम् अलक्तताम्राऽधरपल्लवश्रिया समानयन्तीम् इव (कलमस्य गोपिकां निरीक्ष्य पाण्डोः सुतेन शरदः कृतार्थता मेने, इति ९ श्लोकेन सह सम्बन्धः)।

व्याख्या—अणुना लेशमात्रेण, केसररेणुना किञ्जल्कपरागेण, अलंकृतं प्रसादितम् अतएव मनोरमं रमणीयं, भ्रुवोः नेत्ररोमपङ्क्त्योः, अन्तरम् मध्यभागं, प्रापितं व्याप्तम्, बन्धुजीवकं बन्धूकपुष्पम्, अलक्तताम्राऽधरपल्लवश्रिया लाक्षारागरक्ताभकिसलयशोभया, समानयन्तीम्, इव सपरीक्षतीमिव (कलमस्य धान्यविशेषस्य, गोपिकां रक्षिकां, निरीक्ष्य वलोक्य, पाण्डोः सुतेन अर्जुनेन, शरदः शरदृतोः, कृताऽर्थता साफल्यं मेने, इति नवमश्लोकेन सम्बन्धः)। उत्प्रेक्षालंकारः।

भावार्थः— सूक्ष्मकेसरपरागेण शोभितस्यात एव मनोरमस्य भ्रुवोर्मध्यभागे विनिवेशितस्य बन्धूकपुष्पस्य लाक्षारागरंजिताधरपल्लवस्य शोभया साम्यपरीक्षां कुर्वंतीमिव शालिगोत्री ददर्श।

समासः—केसररेणुना—केसरेषु रेणुः तेन (स० तत्पु०)। मनोरमम्—मनो रमयतीति तत् (उपपद०)। अत्र 'उपपदमतिङ्' इत्यनेन समस्यते। अलक्तताम्राधरपल्लवश्रिया—अलक्तकेन ताम्रम् (तृ० तत्पु०) अधरः पल्लवम्

व ( उपमान कर्म० ) अलक्तताम्रं च तत् अधरपल्लवं ( कर्मधारयः ) तस्य श्रीः, तया ( ष० तत्पु० ) ।

कोषः—'लवलेशकणाऽणवः' । 'किञ्जल्कः केसरोऽस्त्रियाम्' । 'कान्तं मनोरम रुच्यम्' । 'बन्धूको बन्धुजीवकः' । सर्वत्राऽप्यमरकोशः ।

व्याकरणम्—मनोरमम्—मनः रमयतीति णिजन्तात् रम् धातोः 'कर्मण्यण्' इति अण् प्रत्यये रूपम् । बन्धुजीवकम्—बन्धुजीवकस्य विकारः, इति अर्थे 'तस्य विकारः' इति अण् प्रत्ययः । 'पुष्पमूलेषु बहुलम्' इति अण्-प्रत्ययलोपः । समानयन्तीम्—समानं कुर्वन्ती ताम् इति विग्रहे 'तत्करोति तदाचष्टे' इति णिजन्तात् समानशब्दात् शतृप्रत्यये स्त्रीत्वविवक्षायाम् 'उगितश्च' इति ङीप् प्रत्यये रूपम् । समान+णिच्+शतृ+ङीप्+अम् ।

पदार्थ—अणुना=सूक्ष्म । केसररेणुना=नागकेसरके परागसे । अलंकृतं=विभूषित । ( अतएव ) मनोरमं=मनोहर । भ्रुवोरन्तरं प्रापितं=भौंहोंके बीच चिपकाए हुए । बन्धुजीवकं=दुपहरियाके फूलको । अलक्तताम्राऽधरपल्लवश्रिया=लाहके समान लाल-लाल कोमल अधरोंकी शोभासे । समानयन्तीम् इव=बराबरी करती हुई सी ( धान्यरक्षिकाओं को देखकर अर्जुनने शरद्को कृतार्थ माना ।

हिन्दी—थोड़ेसे नागकेसरके परागको भौंहोंके बीच सुन्दरतासे चिपकाए गए दुपहरियाके फूल की, अपने लाहसे रंगे ओठोंमें समानता करती हुई सी धान्यरक्षिकाओंको देखकर शरद् को कृतार्थ मानता था ) ।

नवातपाऽऽलोहितमाहितं मुहुर्महानिवेशौ परितः पयोधरौ ।
चकासयन्तीमरविन्दजं रजः परिश्रमाऽम्भःपुलकेन सर्पता ॥ ८ ॥

अन्वय—महानिवेशौ पयोधरौ परितः मुहुः आहितं नवातपाऽऽलोहितम् अरविन्दजं रजः सर्पता परिश्रमाऽम्भःपुलकेन चकासयन्तीम् ( कलमस्य गोपिकां वीक्ष्य पाण्डोः सुतेन शरदः कृताऽर्थता मेने ) ।

व्याख्या—महानिवेशौ विस्तृताऽवकाशौ, सुपुष्टौ इत्यर्थः । पयोधरौ स्तनौ, परितः सर्वतः, स्तनयोः समन्तादित्यर्थः । मुहुः वारं वारम्, आहितं स्थापितं, नवाऽऽतपाऽऽलोहितं बालाऽऽतपरक्तम्, अरविन्दजं कमलसम्भवं, रजः

किञ्जल्क सर्पतासंप्रसरता, परिश्रमाऽम्भःपुलकेन स्वेदोद्भवेन, चकास सुशोभयन्तीं ( कलमस्य गोपिकां निरीक्ष्य पाण्डोः सुतेन शरदः कृताऽर्थता मे इति नवमश्लोकेन सम्बन्धः)। पद्येऽस्मिन्नवातपा लोहितमित्यत्रोपमालङ्का

भावार्थः—पीनपयोधरयोः समन्तान्मुहुर्निक्षिप्तं कमलजं लोहित -परागं प्रसरता स्वेदोद्भेदेनालङ्करणं कुर्वतीं तां निरीक्ष्य सः शरदः कृता मेने।

समासः—महानिवेशौ–महान् निवेशः ययोः तौ ( बहुव्रीहिः )। प धरौ—पयसां धरौ, तौ ( ष० तत्पु० )। नवाऽऽतपाऽऽलोहितम्–नवः च आतपः ( कर्मधारयः )। नवाऽऽतप इव आलोहितम् ( उपमानकर्म० )। श्रमाऽम्भः-पुलकेन–परिश्रमेण अम्भः ( तृ० तत्पु० ) तस्य पुलकः (षं० तत्पु०)।

कोषः—'स्त्रीस्तनाब्दौ पयोधरौ'। 'वा पुंसि पद्मं नलिनमरविन्दं मह लम्'। 'परागः सुमनोरजः'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—पयोधरौ–पयस्+धृ+अच्+औ। सर्पता–सृप्लृ+शतृ+ चकासयन्तीम्–चकासृ+(णिजन्त)+शतृ+ङीप्+अम्।

पदार्थः—महानिवेशौ=उन्नत। पयोधरौ=स्तनोंके। परितः=चारों मुहुः=बार बार। आहितं=लगाये हुए। नवातपाऽऽलोहितं=प्रातः प्रकाशकी भाँति लाल। अरविन्दजं रजः=कमलके परागको। सर्पता=फैल परिश्रमाम्भः=पुलकेन=पसीनेकी बूँदोंके रोमांचसे। चकासयन्ती=शो करती हुई ( शालिगोप्त्रीको देखकर……)॥

हिन्दी—स्थूल पयोधरों (स्तनों) के चारों ओर लगाये हुए, प्रातः प्रकाशके समान लालिमायुक्त कमलके परागमें पसीनेकी बूँदोंके उ रोमांच सा प्रतीत होता था और उससे वे धान्यरक्षिकायें और भी शोभित होती थी। ( जिन्हें देखकर अर्जुन शरद ऋतुकी कृतार्थ रहे थे )।

अभिप्राय—निवेशका अर्थ होता है स्थान, इसलिए महानिवेशका अधिक जगह जिन्होंने घेर रखी है। अर्थात् स्तनों के चारों ओर लगाया

अंगराग पसीनेकी बूँदोंसे उभड़ जाता था और वह रोमांच-सा प्रतीत होता था। मानो शरद ऋतुमें उनके शरीरमें भी कामका विकार उत्पन्न हो गया है, यह तात्पर्य है ॥ ८ ॥

कपोलसंश्लेषि विलोचनत्विषा विभूषयन्तीमवतंसकोत्पलम् ।
सुतेन पाण्डोः कलमस्य गोपिकां निरीक्ष्य मेने शरदः कृतार्थता ॥ ९ ॥

अन्वयः—कपोलसंश्लेषि अवतंसकोत्पलं विलोचनत्विषा विभूषयन्तीं कलमस्य गोपिकां निरीक्ष्य पाण्डोः सुतेन शरदः कृतार्थता मेने ।

व्याख्या—कपोलसंश्लेषि गण्डस्थलावलम्बि, यद् अवतंसकोत्पलं कर्णोत्पलं, विलोचनत्विषा नेत्रशोभया, विभूषयन्तीम् अलंकुर्वतीम्, आभूषणस्य अपि आभूषणमिति भावः । कलमस्य शालिविशेषस्य, गोपिकां रक्षिकां, निरीक्ष्य विलोक्य, पाण्डोः सुतेन अर्जुनेन मध्यमपाण्डवेनेत्यर्थः, शरदः शरदृतोः, कृतार्थता कृतकृत्यता मेने अमानि ।

भावार्थः—गण्डस्थलयोः भूयः संश्लिषत् कर्णोत्पलं स्वनेत्रज्योतिषा विभूषयन्तीं धान्यरक्षिकामवलोक्य अर्जुनः शरदः सार्थकतां मेने ।

समासः—कपोलं संश्लिष्यतीति तत् ( उपपद० ) । अवतंसकोत्पलम्—अवतंसकं च तत् उत्पलं तत् ( कर्मधारयः ) । विलोचनत्विषा विलोचनयोः त्विट् तया ( ष० तत्पु० ) । कृतार्थता—कृतः अर्थः यस्या सा ( बहुब्रीहिः ) तस्याः भावः तत्तथा ।

कोशः—'गण्डौ कपोलौ' । 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे' । 'स्युः प्रभा रुग्-रुचिस्त्विड्-भा भाश्छवि-द्युति-दीप्तयः' । 'शालयः कलमाद्याश्च' । सर्वत्राप्यमरकोशः ।

व्याकरणम्—कपोलसंश्लेषि-कपोल + सम्+ श्लिष् + णिनिः । विभूषयन्तीम्—वि + भूष् + णिच् + शतृ + ङीप् + अम् । कलमस्य गोपिकाम्—अत्र 'कर्तृकर्मणोः कृति' इति षष्ठी । गोपिकाम्—गुप्+ण्वुल् + टाप् + अम् + इत्वम् । अत्र 'ण्वुल्तृचौ' इति ण्वुल्, 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः' इति इत्वम् । निरीक्ष्य-निर् + ईक्ष+ल्यप् । अत्र 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति ल्यप् आदेशः । मेने-दिवादिकात् मनु ज्ञाने धातोः कर्मणि लिट् ।

पदार्थः—कपोलसंश्लेषि=गालोंको छूते हुए। अवतंसकोत्पलम्=कर्णोत्पल को। विलोचनत्विषा=नेत्रोंकी कान्तिसे। विभूषयन्तीं=शोभित करती हुई कमलस्य=धानोंकी। गोपिकां=रक्षिकाको। निरीक्ष्य=देखकर। पाण्डु सुतेन=अर्जुनके द्वारा। शरदः=शरद् ऋतुकी। कृतार्थता=सफलता। मेने= मान ली।

हिन्दी—गालोंमें बराबर टकराते हुए कर्णोत्पलको अपनी नेत्रकान्ति विभूषित करती हुई धानोंकी रखवाली करनेवाली कृषकाङ्गनाको देखक अर्जुनने शरद ऋतुको सार्थक माना।

अभिप्राय—धानकी रखवाली करनेवाली कृषकस्त्रियाँ, जो कानोंमें क कमल खोंसी हैं बराबर उनके गालोंसे टकराते हैं और वे रह-रह कर उस ओर देखती हैं। उनकी आँखें भी कमल सदृश ही हैं। उनकी कान्ति जब कर्णोत्पलपर पड़ती हैं तो उसकी शोभा दूनी हो जाती है। इस प्रकार भूषणको भी भूषित करती है। इतने दिनों तक उन्होंने जो कष्ट सहा अब सफल हो जायगा, इसलिए उनकी इस शोभा पर आकृष्ट हुआ अर्जु शरदको सार्थक समझता था ॥ ९ ॥

उपारताः पश्चिमरात्रिगोचरादपारयन्तः पतितुं जवेन गाम्।
तमुत्सुकाश्चक्रुरवेक्षणोत्सुकं गवां गणाः प्रस्नुतपीवरोधसः ॥१०

अन्वयः—पश्चिमरात्रिगोचरात् उपारताः जवेन गां पतितुम् अपारयन्त प्रस्नुतपीवरोधसः उत्सुकाः गवां गणाः तम् अवेक्षणोत्सुकं चक्रुः।

व्याख्या—पश्चिमरात्रिगोचरात् अपरार्धगोचरभूमेः, उपारताः संनिवृत्त जवेन रङ्घेण, गां पृथिवीम्, पतितुं धावितुम् अपारयन्तः अशक्नुवन्तः, पर्या शष्पभक्षणपूरितोदरत्वादिति भावः। प्रस्नुतपीवरोधसः स्रवत्स्फीताऽऽपीन स्ववत्सस्मरणादित्याऽऽशयः। अतएव उत्सुकाः सोत्कण्ठिताः, वत्सेषु गवां धेनूनां, गणाः प्रासाः, तम् अर्जुनम्, अवेक्षणोत्सुकं दर्शनलालसं, चक्र विहितवन्तः। वंशस्थवृत्तम्। पद्येऽस्मिन् गवां स्वाभाविकवर्णनात् स्वभावोक्ति रलङ्कारः।

भावार्थः—उषाकालदेवः गोष्ठान्निःसृत्य गोचरगतत्वात् वत्सदर्शनाभावात्तमुत्सुका अपि गवांसमूहाः प्रस्नुतानामूधसां पीवरत्वात् जवेन भुवि धावितुसमर्थाः सन्तः तं दर्शनलालसं चक्रुः।

समासः—पश्चिमरात्रिगोचरात्—पश्चिमा च असौ रात्रिः (कर्मधारयः)। पश्चिमरात्रौ गोचरः तस्मात् ( स० तत्पु० )। प्रस्नुतपीवरोधसः-प्रस्नुतं पीवरम् ऊधः येषां ते ( बहुव्रीहिः ) अवेक्षणोत्सुकम्-अवेक्षणे उत्सुकः तम् ( त०-तत्पु० )।

कोशः—'अन्तो जघन्यश्चरममन्त्यपाश्चात्यपश्चिमाः'। 'जवोऽथ शीघ्रं त्वरितं लघुक्षिप्रतरं द्रुतम्'। 'गौरिला कुम्भिनी क्षमा'। 'ऊधस्तु क्लीबमापीनम्'। उद्युक्त उत्सुकः'।

व्याकरणम्—गोचरात् -अत्र 'गोचरसञ्चर' इत्यादिना निपातनात् साधुत्वम् अपारयन्तः—अपार+णिच्—शतृ+जस्।

हिन्दी—रातके पिछले पहरसे जहाँ चर रहे थे उस स्थानसे लौटते हुए, वेगसे भूमिपर दौड़नेमें असमर्थ, दूध चुआते हुए मोटे-मोटे ऊधसोवाले, बछड़ोंसे मिलने को उत्कण्ठित गायोंके झुण्ड, उस अर्जुनको अपनी ओर देखनेको लालायित कर रहे थे।

अभिप्राय—पश्चिमरात्रगोचरात्—श्रीमल्लिनाथने "पश्चिमरात्रि गोचरात्" पाठ मानकर विशेषण समास करके एकदेशि समास तथा समासान्त अच्का खण्डन किया है, किन्तु अन्य सभी टीकाकारोंने एकदेशी समास रात्रेः पश्चिमं यही विग्रह किया है। मल्लिनाथ "पश्चिमरात्रौ यो गोचरः तस्मात् उपारतः" अर्थात् रातके पीछे ( सायंकाल ) में जो गोचर उससे लौटी हुई, यह अर्थ करते हैं। हमें उनका यह अर्थ अच्छा प्रतीत होता है।

परीतमुक्षाऽवजये जयश्रिया नदन्तमुच्चैः क्षतसिन्धुरोधसम्।
ददर्श पुष्टिं दधतं स शारदीं सविग्रहं दर्पमिवाधिपं गवाम्॥ ११॥

अन्वयः—सः उक्षाऽवजये जयश्रिया परीतम् उच्चैः नदन्तं क्षतसिन्धुरोधसं शारदीं पुष्टिं दधतं गवाम् अधिपं सविग्रहं दर्पम् इव ददर्श।

व्याख्या—सः अर्जुनः, उक्षाऽवजये उक्षान्तरभङ्गे सति, जयश्रिया विजयशोभया, परीतं आवरितम् उच्चैः तीव्रस्वरेण, नदन्तं गर्जन्तं, क्षतसिन्धुरोधसं भग्ननदीतटं, शारदीं शरत्सम्बद्धां, पुष्टिम् अवयवोपचयं दधतं धारयन्तं, गवां पयस्विनीनाम् अधिपं पतिं वृषभमिति भावः। सविग्रहं मूर्तिमन्तं, दर्पम् इव अहङ्कारम् इव, ददर्श अवलोकयामास। दर्पमिव ददर्श इत्युत्प्रेक्षालङ्कारः।

भावार्थः—अन्यवृषभपराजयेन स्वविजयेन चोच्चैर्गर्जन्तं भग्नसरित्तटं शरदि प्रचुरशष्पभक्षणेनोपचिताङ्गं महावृषभं गवां मध्ये मूर्तिमन्तं दर्पमिव स ददर्श।

समासः—उक्षाऽवजये–उक्षणः अवजयः तस्मिन् ( ष० तत्पु० )। जयश्रिया–जयस्य श्री तया (ष० तत्पु०)। क्षतसिन्धुरोधसम्–सिन्धोः रोधः ( ष० तत्पु० ) क्षतं सिन्धुरोधः येन, तम् ( बहुव्रीहिः )। सविग्रहम्–विग्रहेण सहितम् ( तुल्योगबहु० )।

कोशः—'उक्षा भद्रो बलीवर्दः'। 'कूलं रोधश्च तीरञ्च प्रतीरञ्च तटं त्रिषु'। उभयत्राप्यमरः। 'गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान्। स्त्री सौरभेया दृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च'–इति मेदिनी। 'गात्रं वपुः संहननं शरीरं वष्म विग्रहः'। 'दम्भो दर्पोऽभिमानश्च'। उभयत्राऽपि अमरकोशः।

व्याकरणम्—नदन्तम्–णद् + शतृ+अम्। शारदीम्–शरद्+अण्–आदि वृद्धि+ङीप्। दधतम्–धा + शतृ+अम्। ददर्श–दृश्+लिट्–तिप्।

पदार्थ—स = उस ( अर्जुन ) ने। उक्षावजये=( दूसरे ) सांड़को पराजित करनेपर। जयश्रिया परीतम् = विजयलक्ष्मीसे युक्त। उच्चैः नदन्तम् = ऊंची गर्जना करते हुए। क्षतसिन्धुरोधसम् = नदीके=किनारेको ( अपने सींगों से ) खोदते हुए। शारदीं पुष्टिं = शरत्कालीन मोटापेको। दधतम् = धारण किये। गवाम् अधिपं=गायोंके पति ( बड़े सांड़ ) को। सविग्रहं = शरीरधारी। दर्पमिव = अहकारकी तरह। ददर्श=देखा ॥ ११ ॥

हिन्दी—अर्जुनने ( उन गायोंके बीच ) उस सांड़को देखा, जो दूसरे सांड़को हरानेपर विजयी होनेके गर्वसे जोरसे गरज रहा था, अपने सींगोंसे नदीके तटकी मिट्टीको उखाड़-उखाड़कर फेंक रहा था और शरत्कालीन प्रचुर

धान्योंको खानेसे इतना मोटाया हुआ था मानो अहङ्कार ही शरीर धारण करके इस रूप में आया हो।

अभिप्राय — यह स्वभावोक्तिका सुन्दर उदाहरण है। शरत् कालमें सब अन्न पक जाते हैं घास भी पर्याप्त हो जाती है इसलिए पशुओंको प्रचुरमात्रामें खानेको मिल जाता है और वे मोटे हो जाते हैं। "कुआंरकी मोटाई" पशुओं के विषयमें लोकोक्ति सी हो गई है। इसलिए "शारदीं पुष्टि दधतम्" यह विशेषण दिया है। वस्तुतः एक सांड़ दूसरे सांड़को हरानेपर जो चेष्टायें करता है वह देखने योग्य होती है ॥ ११ ॥

विमुच्यमानैरपि तस्य मन्थरं गवां हिमानी विशदैः कदम्बकैः।
शरन्नदीनां पुलिनैः कुतूहलं गलद्दुकूलैर्जघनैरिवादधे ॥१२॥

अन्वयः—हिमानीविसदैः गवां कम्दकैः मन्थरं विमुच्यमानैः अपि शरन्नदीनां पुलिनैः गलद्दुकूलैः जघनैः इव तस्य कुतूहलम् आदधे।

व्याख्या—हिमानीविसदैः हिमजातविमलैः गवां पयस्विनीनां कदम्बकैः ग्रामैः मन्थरं मन्दं, विमुच्यमानैः अपि परित्यज्यमानैः अपि, शरन्नदीनां शरत्सरितां, वर्षापगमे शरदि श्यामपुलिनाः सरितः सम्भवन्ति, अतएव शरदः ग्रहणम्। पुलिनैः तोयोत्थितसिकतामयतटैः, गलद्दुकूलैः स्रसद्वासोभिः, जघनैः इव कटिपुरोभागैः इव, अर्जुनस्य, कुतूहलम् आश्चर्यम्, आदधे आहितम्,। उत्प्रेक्षालंकारः।

भावार्थः—हिमशुभ्रैः गवां समूहैः मुच्यमानं शरन्नदीपुलिनं गलद्दुकुलं प्रियायाः जवनमिव पश्यतस्तस्य कूतूहलमुत्पादयामास।

समासः—हिमानीविशदैः—महान्ति हिमानि हिमान्यः, ताः इव विशदानि तैः (उपमान.। शरन्नदीनाम्—शरदि नद्यः तासाम् (स० तत्पु०)। गलद्दुकूलैः—गलत् दुकूल येभ्यः तैः (बहुव्रीहिः)।

कोशः—'हिमानी हिमसंहतिः'। 'संहृतिर्वृन्दं निकुरम्बं कदम्बकम्'। 'तोयोत्थितं तत्पुलिनम्'। 'क्षौमं दुकूलं स्याद् द्वे तु'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—हिमानी-अत्र इन्द्रवरुणभवशर्वरुमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्, इति आनुक्, 'हिमारन्ययोर्महत्वे' इति ङीष्। हिम+आनुक्+

ङीष् । विमुच्यमानैः-वि+मुच्+कर्मणि यक्+शानच्+भिस् । अत्र 'आने मुक्' इति मुक् आगमः । आदधे-आङ्+धा+कर्मणि लिट् ।

पदार्थः—हिमानीविशदैः=हिमसमूहकी तरह स्वच्छ ( सफेद ) । गवां कदम्बकैः=गायोंके झुंडोंसे । मन्थरं=धीरे-धीरे । विमुच्यमानैरपि=छोड़ते हुए भी । शरन्नदीनां शरत्कालीन नदियोंके । पुलिनैः=तटों ने । गलद्दुकूलैः=खिसक रहे हैं वस्त्र जिनसे ऐसे । जघनैः इव=जङ्घाओंसे जैसे । तस्य=उस (अर्जुन का । कुतूहलं=कौतुक । आदधे=किया ।

हिन्दी—बरफ के ढेर की तरह सफेद गायों के झुण्ड धीरे-धीरे शरत्कालीन नदियों के तटों को छोड़ रहे थे । उनसे छोड़े जाते हुए वे किनारे अर्जुन को ऐसा कुतूहल उत्पन्न करते थे, जैसे रमणियों के जघनों से खिसकती हुई साड़ी ( किसी कामुक व्यक्ति को ) प्रतीत होता है ।

अभिप्राय—वर्षाकाल में नदियों के तट ढके रहते हैं, शरद् में वे अपने नियत स्थान पर चली जाती हैं अतः बालूमय किनारे स्पष्ट दीखते है । बरफ के ढेर जैसे सफेद गायों के झुण्ड सायंकाल उनसे धीरे-धीरे हट रहे थे । ऐसा प्रतीत हो रहा था जैसे किसी रमणी के जाघों से साड़ी खिसक रही हो । यहाँ पुलिन कर्त्ता है । अर्जुन को कुतूहल पुलिनों से ही होता है ।

विशेष—शरद् ऋतु के वर्णन प्रसंग में कवि नदियों की स्वच्छता, कृशता का वर्णन उत्प्रेक्षा अलंकार के माध्यम से रमणियों के तत्काल उतरते हुए वस्त्र वाले जघन प्रदेश से कर रहा है ॥ १२ ॥

गतान् पशूनां सहजन्मबन्धुतां गृहाश्रयं प्रेम वनेषु बिभ्रतः ।
ददर्श गोपानुपधेनु पाण्डवः कृताऽनुकारानिव गोभिरार्जवे ॥ १३ ॥

अन्वय—पाण्डवः सहजन्मबन्धुतां गतान् गृहाश्रयं प्रेम वनेषु बिभ्रतः आर्जवे गोभिः कृताऽनुकारान् इव गोपान् उपधेनु ददर्श ।

व्याख्या—पाण्डवः अर्जुनः, पशूनां गवां, सहजन्मबन्धुतां सोदर-सौहार्दं प्रेम वनेषु अरण्येषु बिभ्रतः धारयतः, वनेषु गृहाभिमानिन इत्याऽऽशयः । आर्जवे सरलतायां गोभिः, धेनुभिः, कृताऽनुकारान् इव अनुकृतानिव, स्थिता-नीत्युत्प्रेक्षा । गोपान् गोपबालकान्, उपधेनु धेनुसमीपे, ददर्श अवलोकयामास ।

वंशस्थवृत्तम् । पद्येस्मिन् उत्प्रेक्षानुप्राणितः स्वभावोक्तिरलङ्कारः । अनयोरङ्गाङ्गिभावसङ्करः ।

भावार्थः --सहजातत्वात् गव एव येषां कुटुम्बितां गताः तान्; गृहादत्यधिकं प्रेम वनेषु कुर्वतः सारल्ये च गवामेवानुकुर्वतः गोपानपश्यत् ।

समासः—सहजन्मबन्धुताम्—सहजन्म येषां ते (बहुव्रीहिः) सहजन्मानः एव बन्धवः (रूपक कर्म०) । गृहाश्रयम्--गृहम् आश्रयः यस्य तत् (बहुव्रीहिः) । कृतानुकारान्—कृतः अनुकारः येषां ते तान् (बहुव्रीहिः) । उपधेनु-धेनूनां समीपे (अव्ययी भावः) ।

कोशः—'पशुर्मृगादौ छगले प्रमथे च पुमानयम्' । इति तालव्यान्तो रभसे । 'सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः' । इत्यमरः । 'गोपो ग्रामौघगोष्ठाधिकृतयोर्वल्लवे' इति विश्वः । 'गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः । स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि । नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु इति केशवः ।

व्याकरणम्—पाण्डवः—पाण्डोः अपत्यं पुमान् । पाण्डु+अण्+सु । अत्र 'तस्यापत्यम्' इति अण् । बिभ्रतः—भृ+शतृ+शस् । आर्जवे-ऋजोः भावः तस्मिन् । ऋजु+ङि । कृतानुकारान्—कृ+क्त+सु । अनु+कृ+घञ्+शस् । गोपान्—गाः पान्तीति गोपाः तान् । 'आतोऽनुपसर्गे कः' इति क--प्रत्ययः । गोप+शस् ।

पदार्थ—पाण्डवः=अर्जुन ने । पशूनां=पशुओं के । सहजन्मबन्धुतां गतान्=सहोदर भ्रातृत्व को प्राप्त । गृहाश्रयं प्रेम=घरों में होने वाले प्रेम को । वनेषु बिभ्रतः=वनों में धारण करते हुए । आर्जवे=सरलता में गोभिः=गायों का कृतानुकारान् इव=अनुकरण करते हुए जैसे । गोपान्=ग्वालों को । उपधेनु=गायों के समीप । ददर्श=देखा ।

हिन्दी—अर्जुन ने गायों के साथ उन ग्वालों को देखा जो गायों से सहोदर भाई का सा स्नेह करते है, घर में जो प्रेम होता है वही जिनका वनों में है अर्थात् जो वन में रहना घर में रहने से अधिक पसन्द करते है और सरलता में मानों गायों का ही अनुकरण कर रहे हैं ।

अभिप्राय—'गृहाश्रयं प्रेम वनेषु बिभ्रतः" कवि की इस उक्ति से भगवान् कृष्ण की उस गोपलीला का स्मरण हो आता है जिसमें रात के पिछले पहर में ग्वालो के साथ वे वन को निकल जाते हैं और दिन भर वनों में रह कर सायंकाल घर लौटने पर उन्हें रात भर नीद नहीं आती कि कब सवेरा हो और कब बन को चलें। किसी भी सीधे-सादे मनुष्य को कहा जाता है कि यह तो गौ है। 'गौवाहीकः' यह उदाहरण प्रसिद्ध है। इन ग्वालों ने यह भोलापन मानो निरन्तर गायों के साथ रहने के कारण उन्हीं से सीखा है, यह अभिप्राय है ॥ १३ ॥

परिभ्रमन्मूर्धजषट्पदाऽऽकुलैः स्मितोदयादर्शितदन्तकेसरैः।
मुखैश्चलत्कुण्डलरश्मिरञ्जितैर्नवाऽऽतपाऽऽमृष्टसरोजचारुभिः ॥१४॥

अन्वयः—परिभ्रमन्मूर्धजषट्पदाऽऽकुलैः स्मितोदयादर्शितदन्तकेसरैः चलत्कुण्डलरश्मिरञ्जितैः नवाऽऽतपाऽऽमृष्टसरोजचारुभिः मुखैः ( वल्लवीः अभि- प्रवृत्ताः वारयोषितः इव सः निरीक्षितुं न उपरराम इति १७ तक श्लोकों का सम्बन्धः )।

व्याख्या—परिभ्रमन्मूर्धजषट्पदाऽऽकुलैः संचलत्केशभृङ्गाऽऽकुलैः, स्मितोदयादर्शितदन्तकेसरैः मन्दहास्योदयेषत्प्रकाशितरदनकेसरैः, चलत्कुण्डलरश्मि- रञ्जितैः प्रचलत्स्वर्णकटकचमत्कृतैः नवाऽऽतपाऽऽमृष्टसरोजचारुभिः बालसूर्य- प्रकाशसंस्पृष्टकमलसुन्दरैः, तादृशैः मुखैः शरीरैः उपलक्षिताः ( वल्लवीः अभि- प्रवृत्ताः वारयोषितः इव सः निरीक्षितुं न उपरराम, इति १७ तमश्लोकेन सम्बन्धः )। अत्रस्वभावोक्तिसत्त्वात् संसृष्टिः।

भावार्थः—भ्रमद्भिः भ्रमरैः कमलानीव प्रचलद्भिः कचैराकुलीकृतैः स्मिते सति दर्शिता दन्तपंक्तिरेव येषां केसराः तैः, दोलायमानकर्णाभरणकिरण- रागवद्भिः बालातपस्पृष्टसरोजवत्सुन्दरैः मुखैरुपलक्षिताः ( नृत्यन्तीः वार- योषित इव दधिमथनप्रवृत्तान् गोपाङ्गनान् स ददर्श )।

समासः—परिभ्रमन्मूर्धजषट्पदाऽऽकुलैः—षट् पदानि येषां ते षट्पदाः (बहुव्रीहिः), मूर्धजाः षट्पदाः इव (उपमानकर्म०), परिभ्रमन्तः च ते मूर्धजषट्- पदाः ( कर्मधारयः ) तैः आकुलानि तैः ( तृ० तत्पु० )। स्मितोदयादर्शित

केसरैः—स्मितस्य उदयः तेन ( ष० तत्पु० )। स्मितोदयेन आदर्शिता ( तृ० तत्पु०) दन्ताः केसराः इव (उपमानकर्म०)। स्मितोदयाऽऽदर्शिताः दन्तकेसरा, येषां तानि तैः (बहुव्रीहिः)। चलत्कुण्डलरश्मिरञ्जितैः—चलती च ते कुण्डले, (कर्मधारयः)। चलत्कुण्डलयो रश्मयः ( ष० तत्पु० )। तैः रञ्जितानि तैः (तृ० तत्पु०)। नवाऽऽतपामृष्टसरोजचारुभिः—नवः च असौ आतपः ( कर्मधारयः ) तेन आमृष्टानि (तृ० तत्पु०)। नवाऽऽतपाऽऽमृष्टानि च तानि सरोजानि ( कर्मधारयः )। तानि इव चारूणि नवातपामृष्टसरोजचारूणि, तैः ( उपमानकर्म० )।

कोशः—'द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमराऽलयः'। 'व्यस्ते त्वप्रगुणाऽऽकुलौ'। 'कुण्डलं कर्णवेष्टनम्'। 'प्रकाशो द्योत आतपः'।

व्याकरणम्—मूर्धजाः—मूर्ध्नि जाताः मूर्धजाः, अत्र 'सप्तम्यां जनेर्डः' तिङ-प्रत्ययः। मुखैः—अत्र 'इत्थम्भूतलक्षणे' इति तृतीया।

पदार्थः—परिभ्रमन्=घूमते (बिखरे) हुए मूर्धज=केश ( रूप ) षट्पदैः=भौंरोंसे—आकुलैः=व्याकुल ( मुखैः का विशेषण )। स्मितोदय=मुसकान से आदर्शित=कुछ कुछ दिखाई देते हुए, दन्तकेसरैः—दाँत ही हैं केसर जिनके ऐसे मुखैः )। चलत्=हिलते हुए, कुण्डलरश्मिरञ्जितैः=कुण्डलों की किरणों से ...गीन। नवातपामृष्ट=प्रातःकालीन घामसे छुए। सरोजचारुभिः = कमल के ...मान सुन्दर। मुखैः=मुखोंसे युक्त (ग्वालिनों को देखने से वह रुक न सका—

हिन्दी—( अब चार श्लोकोंसे गोपानाङ्गनाओं का वर्णन नर्तकी की ...पमा करते कहते हैं—) (अर्जुन नाचती हुई सी उन गोपनाङ्गनाओं को देखते ...हीं अघा रहे थे जो कि—) घूमते हुए बिखरे हुए) केशरूप भौंरोंसे व्याकुल ...न्द मुसकान में कुछ कुछ दिखाई देने वाली दन्तकान्ति रूप केसर से युक्त, ...हिलते हुए कुण्डलोंकी किरणों से सुनहरे तथा प्रातःकालीन सूर्यकिरणोंसे छुए ...ए कमल के समान सुन्दर मुखों से युक्त थीं।

अभिप्राय—इन तीनों श्लोकों का अन्वय १७वें श्लोक के "अभिप्रनृत्ता ...योषित इव वल्लवीः निरीक्षितुं नोपरराम" से है। इस पद्य में मुख को ...कमल, दन्तकान्ति को कमल का केसर और गोपिकाओं के केशपाश को कमल

अभिप्राय—'गृहाश्रयं प्रेम वनेषु बिभ्रतः" कवि की इस उक्ति से भगवान् कृष्ण की उस गोपलीला का स्मरण हो आता है जिसमें रात के पिछले पहर में ग्वालो के साथ वे वन को निकल जाते हैं और दिन भर वनों में रह कर सायंकाल घर लौटने पर उन्हें रात भर नीद नहीं आती कि कब सबेरा हो और कब बन को चलें। किसी भी सीधे-सादे मनुष्य को कहा जाता है कि यह तो गौ है। 'गौवाहीकः' यह उदाहरण प्रसिद्ध है। इन ग्वालों ने यह भोलापन मानो निरन्तर गायों के साथ रहने के कारण उन्हीं से सीखा है, यह अभिप्राय है ॥ १३ ॥

परिभ्रमन्मूर्धजषट्पदाऽऽकुलैः स्मितोदयादर्शितदन्तकेसरैः ।
मुखैश्चलत्कुण्डलरश्मिरञ्जितैर्नवाऽऽतपाऽऽमृष्टसरोजचारुभिः ॥१४॥

अन्वयः—परिभ्रमन्मूर्धजषट्पदाऽऽकुलैः स्मितोदयादर्शितदन्तकेसरैः चलत्कुण्डलरश्मिरञ्जितैः नवाऽऽतपाऽऽमृष्टसरोजचारुभिः मुखैः ( वल्लवीः अभिनृत्ताः वारयोषितः इव सः निरीक्षितुं न उपरराम इति १७ तक श्लोक सम्बन्धः )।

व्याख्या—परिभ्रमन्मूर्धजषट्पदाऽऽकुलैः संचलत्केशभृङ्गाऽऽकुलैः, स्मितोदयादर्शितदन्तकेसरैः मन्दहास्योदयेषत्प्रकाशितरदनकेसरैः, चलत्कुण्डलरश्मिरञ्जितैः प्रचलत्स्वर्णकटकचमत्कृतैः नवाऽऽतपाऽऽमृष्टसरोजचारुभिः बालसूर्यप्रकाशसंस्पृष्टकमलसुन्दरैः, तादृशैः मुखैः शरीरैः उपलक्षिताः ( वल्लवीः अभिनृत्ताः वारयोषितः इव सः निरीक्षितुं न उपरराम, इति १७ तमश्लोकेन सम्बन्धः )। अत्रस्वभावोक्तिसत्त्वात् संसृष्टिः।

भावार्थः—भ्रमद्भिः भ्रमरैः कमलानीव प्रचलद्भिः कचैराकुलीकृतैः स्मिते सति दर्शिता दन्तपंक्तिरेव येषां केसराः तैः, दोलायमानकर्णाभरणकिरणरागवद्भिः बालातपस्पृष्टसरोजवत्सुन्दरैः मुखैरुपलक्षिताः ( नृत्यन्तीः वारयोषित इव दधिमथनप्रवृत्तान् गोपाङ्गनान् स ददर्श )।

समासः—परिभ्रमन्मूर्धजषट्पदाऽऽकुलैः—षट् पदानि येषां ते षट्पदाः (बहुव्रीहिः), मूर्धजाः षट्पदाः इव (उपमानकर्म०), परिभ्रमन्तः च ते मूर्धजषट्पदाः ( कर्मधारयः ) तैः आकुलानि तैः ( तृ० तत्पु० )। स्मितोदयादर्शित

केसरैः-स्मितस्य उदयः तेन ( ष० तत्पु० )। स्मितोदयेन आदर्शिता ( तृ० तत्पु०) दन्ताः केसराः इव (उपमानकर्म०) । स्मितोदयाऽऽदर्शिताः दन्तकेसरा, येषां तानि तैः (बहुव्रीहिः) । चलत्कुण्डलरश्मिरञ्जितैः-चलती च ते कुण्डले, ( कर्मधारयः ) । चलत्कुण्डलयो रश्मयः ( ष० तत्पु० ) । तैः रञ्जितानि तैः ( तृ० तत्पु० ) । नवाऽऽतपामृष्टसरोजचारुभिः-नवः च असौ आतपः ( कर्मधारयः ) तेन आमृष्टानि (तृ० तत्पु०) । नवाऽऽतपाऽऽमृष्टानि च तानि सरोजानि ( कर्मधारयः ) । तानि इव चारूणि नवातपामृष्टसरोजचारूणि, तैः ( उपमानकर्म० ) ।

कोशः--'द्विरेफपुष्पालिड्भृङ्गषट्पदभ्रमराऽलयः' । 'व्यस्ते त्वप्रगुणाऽऽकुलौ' । 'कुण्डल कर्णवेष्टनम्' । 'प्रकाशो द्योत आतपः' ।

व्याकरणम्--मूर्धजाः--मूर्ध्नि जाताः मूर्धजाः, अत्र 'सप्तम्यां जनेर्डः' इति ड-प्रत्ययः । मुखैः-अत्र 'इत्थम्भूतलक्षणे' इति तृतीया ।

पदार्थः--परिभ्रमन्=घूमते (बिखरे) हुए मूर्धज=केश ( रूप ) षट्पदैः=भौंरोंसे--आकुलैः=व्याकुल ( मुखैः का विशेषण ) । स्मितोदय=मुसकान से आदर्शित=कुछ कुछ दिखाई देते हुए, दन्तकेसरैः-दाँत ही हैं केसर जिनके ऐसे मुखैः ) । चलत्=हिलते हुए, कुण्डलरश्मिरञ्जितैः=कुण्डलों की किरणो से रंगीन । नवातपामृष्टं=प्रातःकालीन घामसे छुए । सरोजचारुभिः = कमल के समान सुन्दर । मुखैः=मुखोंसे युक्त (ग्वालिनों को देखने से वह रुक न सका--

हिन्दी -( जब चार श्लोकोंसे गोपानाङ्गनाओं का वर्णन नर्तकी की उपमा करते कहते हैं-) (अर्जुन नाचती हुई सी उन गोपनाङ्गनाओं को देखते नहीं अघा रहे थे जो कि--। घूमते हुए बिखरे हुए) केशरूप भौंरोसे व्याकुल मुसकान में कुछ कुछ दिखाई देने वाली दन्तकान्ति रूप केसर से युक्त, हिलते हुए कुण्डलोंकी किरणों से सुनहरे तथा प्रातःकालीन सूर्यकिरणोंसे छुए र कमल के समान सुन्दर मुखों से युक्त थीं ।

अभिप्राय--इन तीनों श्लोकों का अन्वय १७वें श्लोक के "अभिप्रवृत्ता नर्तयोषित इव वल्लवीः निरीक्षितुं नोपरराम" से है । इस पद्य में मुख को कमल, दन्तकान्ति को कमल का केसर और गोपिकाओं के केशपाश को कमल

पर उड़ते हुए भौंरों की समता दी गई है। दन्तकान्ति श्वेत होती है और केसर पीला, अतः स्वर्णनिर्मित कुण्डलों की कान्ति से सुनहरे मुख में दन्तकान्ति भी पीली हो गई है। इस प्रकार पूरा कमल चित्रित हो जाता है। इन चारों श्लोकों को एक साथ पढ़ने के बाद वस्तुतः एक नाचती हुई स्त्री का स्वरूप दृष्टिगोचर हो जाता है जिसे आगे स्पष्ट करेंगे ॥ १४ ॥

निबद्धनिःश्वासविकम्पिताऽधरा लता इव प्रस्फुरितैकपल्लवाः।
व्यपोढपार्श्वैरपवर्तितत्रिका विकर्षणैः पाणिविहारिभिः ॥१५॥

अन्वयः—निबद्धनिःश्वासविकम्पिताऽधराः प्रस्फुरितैकपल्लवाः लताः व्यपोढपार्श्वैः पाणिविहारहारिभिः विकर्षणैः अपवर्तितत्रिकाः (बल्लवीः अभि-प्रनृत्ताः वारयोषितः इव सः निरीक्षितुं न उपरराम, इति १७ तमश्लोकेन सम्बन्धः)।

व्याख्या—निबद्धनिःश्वासविकम्पिताऽधरा निःश्वासनिरोधेन वेपिताधराः प्रस्फुरितैकपल्लवाः कम्पितैककिसलयाः, लताः इव वलयः इव स्थिताः ... भावः व्यपोढपार्श्वैः, विपरीतपार्श्वैः, पाणिविहारिभिः करविक्षेपमनोहरैः विकर्षणैः मन्थनरज्ज्वाऽऽकर्षणैः, अपवर्तितत्रिकाः सञ्चलितनितम्बाः (बल्लवीः अभिप्रनृत्ताः वारयोषितः इव सः निरीक्षितुं न उपरराम, इति १७ तमश्लोकेन सम्बन्धः)। यद्यप्यमरसिंहः त्रिकशब्देन पृष्ठवंशाधरभागं स्वीकुरुते तथापि लक्षणया नितम्ब एव लक्ष्यते तन्नैकट्यात् संसृष्टिरत्रोपमास्वभावोक्तिसमन्...

भावार्थः—श्वासावरोधाद् वेपिताधरा प्रचलितैककिसलया लता ... पार्श्वविपरिवर्तनैः पाणिविक्षेपमनोहरैः सं[च]लितनितम्बा वल्लवीः वी... मर्जुनःनोपरराम।

समासः—निबद्धनिःश्वासविकम्पिताऽधरा—निबद्धः च असौ निःश्वासः (कर्मधारयः) विकम्पिताः अधराः यासां ताः (बहुव्रीहिः)। निबद्धनिःश्वास-विकम्पिताऽधराः (तृ० तत्पु०)। प्रस्फुरितैकपल्लवाः—प्रस्फुरितम् एकं पल्लवं यासां ताः (बहुव्रीहिः)। व्यपोढपार्श्वैः—व्यपोढानि पार्श्वानि पार्श्वानि... तानि तैः तानि तैः (बहुव्रीहिः) ।पाणिविहारहारिभिः—पाण्योः विहा...

(ष० तत्पु०) प्राणिविहारैः हारीणि तैः (तृ० तत्पु०)। अपवर्तितत्रिकाः—अपवर्तितं त्रिकं यासां ताः (बहुव्रीहिः)।

कोशः—'अधरस्तु पुमानोष्ठे हीनेऽनूर्ध्वेऽपि वाच्यवत्'—इति मेदिनी। 'वल्ली तु व्रततिर्लता'। 'अङ्गहारोऽङ्गविक्षेपः'। 'पृष्ठवंशाऽधरे त्रिकम्' सर्वं त्राप्यमरकोषः।

व्याकरणम्—हारिभिः—हरन्ति तच्छीलानि हारीणि, ताच्छील्याऽर्थे णिनिः—इति णिनिप्रत्ययः। विकर्षणैः—विकर्षति विकृष्यते वा, अत्र 'नन्द्यादि'-ल्युप्रत्ययः।

पदार्थ—निबद्ध रुके हुए, निश्वास = श्वास से, विकम्पित=कांप रहे हैं, अधर=नीचे के ओठ जिनके ऐसी। प्रस्फुरित=फड़क रहा है, एकपल्लवा = एक दल जिनका, ऐसी। लता इव=लता के समान (जो दीख रही है ऐसी)। व्यपोढपार्श्वैः=(व्यपोढ=) परस्पर विपरीत हो रहे हैं (पार्श्व=) पसलियों वाले भाग जिनमें ऐसे। पाणिविहारहारिभिः = हाथों के विक्षेप से मनोहर। विकर्षणैः=खिचावों से। अपवर्तित=चञ्चल हो रहे हैं, त्रिक=नितम्ब जिनके ऐसी गोपाङ्गनाओं को देखते नहीं अघाते थे)।

हिन्दी—(जल्दी-जल्दी दही महने में) श्वास का व्यतिक्रम होने से जिनका नीचे का ओठ काँप रहा है अतएव जो उस लता सी लग रही हैं जिसका एक पल्लव हिल रहा हो, ऐसी, मथानी की रस्सी को खींचने में जिनके हाथों का आगे पीछे होना सुन्दर लग रहा है और इसी क्रिया में जिनके पार्श्व (दाँयें-बाँयें) भी क्रम से आगे-पीछे हो रहे हैं अर्थात् इसी क्रम में जिनके नितम्ब भी हिल रहे हैं (ऐसी गोपाङ्गनाओं को अर्जुन देखते नहीं अघा रहे थे)।

अभिप्राय—जैसे नर्तकी नाचने में जल्दी-जल्दी थिरकने लगती है तो उसके श्वास का व्यतिक्रमण हो जाता है और श्वास रुक जाने से उसके ओठ फड़-फड़ाने लगते हैं। ऐसे ही गोपाङ्गनाएँ भी जल्दी-जल्दी दही मथ रही हैं अतः उनके भी श्वास का व्यतिक्रम होने से ओठ फड़फड़ा रहे हैं। जिससे वे भी लता-सी लग रही है जिसका एक पल्लव हिल रहा हो। लता से उनकी देह की उपमा कोमलता और तनुता को व्यक्त करती है। नर्तकी नाचने में हाथ

आगे-पीछे करती है जिससे उसकी पसलियाँ भी आगे-पीछे होती हैं और
कार नितम्ब भी हिलते रहते हैं। उसी प्रकार गोपियाँ भी मथने में हाथ
कर रही हैं जिससे उनके पार्श्व भाग आगे-पीछे हो रहे हैं और इसी का
मांसल नितम्बों में चञ्चलता आ रही है अर्थात् वे उछल से रहे हैं ॥१५॥

व्रजाऽजिरेष्वम्बुदनादशङ्किनीः शिखण्डिनामुन्मदयत्सु योषितः
मुहुः प्रणुन्नेषु मथां विवर्तनैर्नदत्सु कुम्भेषु मृदङ्गमन्थरम् ॥१६॥

अन्वयः—व्रजाऽजिरेषु अम्बुदनादशङ्किनीः शिखण्डिनां योषितः उन्मद
मथां विवर्तनैः मुहुः प्रणुन्नेषु कुम्भेषु मृदङ्गमन्थरं नदत्सु (वल्लवीः अभिप्रनृ
वारयोषितः इव सः निरीक्षितुं न उपरराम)।

व्याख्या—व्रजाऽजिरेषु वृन्दाङ्गणेषु, अम्बुदनादशङ्किनीः स्तनितभ्रमवः
शिखण्डिनां योषितः मयूराणां स्त्रियः, उन्मदयत्सु उत्कटमदाः कुर्वत्सु,
मन्थनदण्डानां विवर्तनैः परिचालनैः, मुहुः वारं वारम्, प्रणुन्नेषु कम्पि
कुम्भेषु कलशेषु, मृदङ्गमन्थरं मुरजवन्मन्दं, नदत्सु शब्दायमानेषु सत्सु (वल्ल
अभिप्रनृत्ताः वारयोषितः इव सः निरीक्षितुं न उपरराम)। अत्र पद्ये मयू
शब्दस्थाने मयूरीशब्दप्रयोगः तासां मुग्धातिशयतां व्यनक्ति। अत्र भ्रान्ति
स्वभावोक्तिसमत्वात्ससृष्टिः।

भावार्थः—अर्जुनः गोष्ठाङ्गणेषु मन्थानभ्रमणात् दधिभाजेभ्यो नि
मृदङ्गवन्मन्थरेण गम्भीरनादेन मयूरीणां मेघभ्रममुत्पादयन्तीः वल्लवीः
क्षितुं नोपरराम।

समासः—व्रजाऽजिरेषु-व्रजस्य अजिराणि तेषु (ष० तत्पु०) अम्बुद
शङ्किनीः—अम्बुदस्य नादः (ष० तत्पु०) तं शङ्कन्त इति, ताः उन्मद
उत्कटः मदः यासां ताः उन्मदाः (बहुव्रीहिः) उन्मदाः कुर्वत्सु।

कोशः—'व्रजो गोष्ठाऽध्ववृन्देषु' इति विश्वः। 'अङ्गणं चत्वराजि
'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः।' 'वैशाखमन्थानमन्
मन्थदण्डके'। 'मृदङ्गा मुरजा भेदाः'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—शङ्किनीः-शङ्कन्ते इति ताः, ताच्छील्ये णिनिः, 'ऋन्ने
ङीप्' इति ङीप्। शङ्क+णिनि+ङीप्+शस्। उन्मदयत्सु-उत्+मद+णि

शतृ+सुप् । नदत्सु—णद्+शतृ+सुप् । अत्र 'यस्य च भावेन भावलक्षणम्'—इति भावलक्षणा सप्तमी ।

पदार्थः—व्रजाऽजिरेषु=गोठोंके आँगनोंमें । अम्बुदनादशङ्किनीः=बादलोंकी गर्जनाकी शंका करती हुई । शिखण्डिनां=मयूरोंकी । योषितः=स्त्रियोंको । उन्मदयत्सु । उन्मत्त करते हुए । मथां=रइयों (मन्थनदन्डों) के । विवर्तनैः=परिभ्रमणोंसे । मुहुः=बारबार । प्रणुन्नेषु=कांपते हुए । कुम्भेषु=(मथने के) घड़ों के । मृदङ्गमन्थरं=मृदङ्गके समान धीरे धीरे । नदत्सु=शब्द करनेपर (नृत्यके लिये प्रवृत्त हुई नर्तकियोंकी तरह गोपाङ्गनाओं को देखते नहीं अघाते थे) ।

हिन्दी—गोठों के आँगनों में दही मथते समय मथन बार घूमने के कारण मटकोंसे जो मृदङ्गकीसी गम्भीर ध्वनि हो रही थी उससे मयूरियोंके लिये मेघगर्जनाकी भ्रान्ति उत्पन्न करती हुई गोपाङ्गनाओंको अर्जुन देखते नहीं अघा रहे थे ।

अभिप्राय—सङ्गीतके तीन अंग होते हैं—नृत्य, गीत और वाद्य । पूर्वश्लोकोंमें नृत्यका प्रदर्शन हुआ इसमें गीत और वाद्यका । दहीके मटकोंमें मथानी (रई) के बार बार घूमनेसे मृदङ्गकीसी ध्वनि हो रही है । वह सामान्य ध्वनि नहीं, इतनी गम्भीर है जिससे मयूरियोंको भ्रम होने लगता है कि बादल गरज रहे हैं और वे नाचने लगती हैं । व्रजाजिरसे नर्तकी के फर्शकी, अम्बुदनादसे संगीतको और मृदङ्गवन्मन्थर कहने से वाद्यकी अभिव्यक्ति होती है ॥ १६ ॥

स मन्थरावल्गितपीवरस्तनीः परिश्रमक्लान्तविलोचनोत्पलाः ।
निरीक्षितुं नोपरराम वल्लवीः अभिप्रनृत्ता इव वारयोषितः ॥१७॥

अन्वयः—मन्थराऽऽवल्गितपीवरस्तनीः परिश्रमक्लान्तविलोचनोत्पलाः वल्लवीः अभिप्रनृत्ताः वारयोषितः इव सः निरीक्षितुं न उपरराम ।

व्याख्या—मन्थराऽऽवल्गितपीवरस्तनीः मन्दचपलपीनपयोधराः, परिश्रमक्लान्तविलोचनोत्पलाः आयासमलिननेत्रकमलाः वल्लवीः गोपभार्याः प्रवृत्ताः

नर्तितुं प्रवृत्ताः, वारयोषितः इव वेश्याः इव, सः अर्जुनः, निरीक्षितुं अभिद्रष्टुं न उपरराम न विरमतिस्म। संसृष्टि पद्येऽस्मिन्नुपमास्वभावोक्त्यलङ्कारयोः।

भावार्थः—मन्दं-मन्दं स्फुरत्स्थूलस्तनयुताः मन्थश्रमेण खिन्ननेत्रा गोपाङ्गनाः नृत्यन्तीः वारवधूरिव पश्यन् स ततः नोपरराम।

समासः—मन्थराऽऽवलितपीवरस्तनीः मन्थरं-यथा स्यात् तथा आवलिताः 'सह सुपा' इति समासः। मन्थराऽऽवलिताः पीवराः स्तनाः यासां ताः (बहुव्रीहिः)। परिश्रमक्लान्तविलोचनोत्पलाः-परिश्रमेण क्लान्तानि (तृ० तत्पु०) विलोचनानि उत्पलानि इव (उपमान, मं०) परिश्रमक्लान्तानि विलोचनोत्पलानि यासां ताः (बहुव्रीहिः)। वारयोषितः-वारस्य योषितः (ष०-तत्पु०)।

कोषः—'पीनोध्नी पीवरस्तनी'। 'गोपे गोपालगोसङ्ख्यगोधुगाऽऽभीरवल्लवाः।' वारस्त्री गणिका वेश्या'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—स्तनीः अत्र शरीरावयनत्वात् 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीष्। अभिप्रनृत्ताः—अभि+प्र+नृत्+कर्तरि क्त+शस्। निरीक्षितुम्—निर्+इक्ष+तुमुन्। 'समानकर्तृकेषु तुमुन्' इति तुमुन् प्रत्ययः।

पदार्थः—मन्थरावलितपीवरस्तनीः=(मन्थरा) धीरे-धीरे, (आवलित=) थिरक रहे हैं, (पीरवस्तनीः=) स्थूल स्तन जिनके ऐसी। परिश्रमक्लान्तविलोचनोत्पलाः=(दही मथने के परिश्रम से थक गये हैं नेत्रकमल जिनके ऐसी वल्लवीः=गोपाङ्गनाओं को। अभिप्रनृत्ताः=नाच करती हुई। वारयोषितः इव=वेश्याओंकी तरह। निरीक्षितुं=देखने के लिये। स=वह (अर्जुन) न उपरराम=नहीं शान्त होता था।

हिन्दी—थोड़े-थोड़े थिरकते हुए मोटे उभड़े स्तनोंवाली तथा मथने के श्रम से थके हुए नेत्रकमलोंवाली गोपाङ्गनाओं को नाचती हुई नर्तकियों जैसी देखकर अर्जुन उधरसे अपनी दृष्टि हटा नहीं पा रहा थे।

अभिप्राय—इन चारों श्लोकोंमें जो विशेषण गोपाङ्गनाओंके दिये गये हैं और उनसे जो स्थिति उनकी चित्रित होती है ठीक वही स्थिति नाचते समय

नर्तकीकी भी होती है। प्रत्येक विशेषण दोनोंकी एक स्वाभाविक अवस्थाका चित्रण कर देता है। इसलिये उपमाके साथ स्वभावोक्ति अलंकार मिल गया है अर्थात् दोनोंकी संसृष्टि हो गई है। यहाँ एक ओर तो गोपाङ्गनाओंका इतना उत्कर्ष दिखाया जा रहा है कि अर्जुन उनसे अपनी दृष्टि हटा नहीं पाता और दूसरी ओर उनकी उपमा वेश्याओंसे दी जा रही है। यह दोष प्रतीत होता है। वारयोषितः शब्द न रखकर अप्सरा या नर्तकीवाचक सामान्य शब्द भी रखा जाता तो खटकता नहीं। कालिदास इसीलिये उपमाके आचार्य माने जाते हैं। उनकी उपमाओंमें यह वैषम्य कदापि नहीं मिलता ॥ १७ ॥

पपात पूर्वां जहतो विजिह्मतां वृषोपभुक्तान्तिकसस्यसम्पदः।
रथाङ्गसीमन्तितसान्द्रकर्दमान् प्रसक्तसम्पातपृथक्कृतान् पथः॥१८॥

अन्वयः—पूर्वां विजिह्मतां जहतः वृषोपभुक्ताऽन्तिकसस्यसम्पदः रथाऽङ्गसीमन्तितसान्द्रकर्दमान् प्रसक्तसम्पातपृथक्कृतान् पथः पपात।

व्याख्या—पूर्वां वर्षर्तुजातां, विजिह्मतां वक्रतां, जहतः परित्यजतः, वृषोपभुक्तान्तिकसस्यसम्पदः बलीवर्दास्वादितप्रान्तसस्यसमृद्धीन्, रथाऽङ्गसीमन्तितसान्द्रकर्दमान् चक्रसीमन्तीकृतापंकरहितान्, पथः मार्गान्, पपात गतवान्। स्वभावोक्त्यलङ्कारः।

भावार्थः—सोऽर्जुनः साम्प्रतं यानवलम्ब्य गच्छतिस्म तैः मार्गैः वर्षाकालीना वक्रता त्यक्ता, वृषभैश्च तेषामन्तिकस्थानानि सस्यानि चर्वितानि, रथचक्रैश्च तत्रस्था घनीभूतपङ्काः विभक्ताः, जनानामतिसञ्चारेण ते स्पष्टं परिलक्ष्यन्तेस्म।

समासः—वृषोभुक्ताऽन्तिकसस्यसम्पदः—वृषैः उपभुक्ताः (तृ० तत्पु०) सस्यानां सम्पदः (ष० तत्पु०)। वृषोपभुक्ताः अन्तिकसस्यसम्पदः येषु तान् (बहुव्रीहिः)। रथाङ्गसीमन्तितसान्द्रकर्दमान्—रथस्य अङ्गानि (ष० तत्पु०) सीमन्तोऽस्ति येषां ते सीमन्तवन्तः तथाविधाः कृताः सीमन्तिताः, रथाङ्गैः सीमन्तिताः (तृ० तत्पु०), सान्द्राः कर्दमाः येषु तान् (बहुव्रीहिः)। प्रसक्तसम्पातपृथक्कृतान्—प्रसक्तः च असौ सम्पातः (कर्मधारयः), प्रसक्तसम्पातेन पृथक्कृताः तान् (तृ० तत्पु०)।

कोष:--'अरालं वृजिनं जिह्ममूर्तिमत् कुञ्चितं नतम् । आविद्धं कुटि भुग्नं वेल्लितं वक्रमित्यपि'। 'उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः'। 'च रथाङ्गम्'। अयनं वर्त्ममार्गाऽध्वपन्थानः पदवी सृतिः'। सर्वत्राऽप्यमरकोषः।

व्याकरणम्--विजिह्मताम्-वि + जिह्म + तल् + टाप् + अम्। जहतः-जहातीति जहतः तान्। हा + शतृ + शस्। सीमन्तवन्तः-सीमन्त + मतुप् जस्। सीमन्तिताः-'तत्करोति तदाचष्टे' इति णिच्, क्तः, मतुपो लुक् च पपात-पत्लृ पतने धातोः लिटि रूपम्।

पदार्थः—(स = वह अर्जुन)। पूर्वां=पहिले (अर्थात् वर्षाकाल) की विजिह्मतां = वक्रताको। जहतः=छोड़ते हुए। वृषोपभुक्तान्तिकसस्यसम्पदः= बैलोंने चर डाली है (अन्तिक=आसपास की (सस्यसम्पदः=) धान्यरूप सम्पत्ति जिनकी ऐसे। रथाङ्गसीमन्तितसान्द्रकर्दमान् = (रथाङ्ग) गाड़ीके पहियों (सीमन्ति-) विभक्त कर दिया है। (सान्द्रकर्दमान् = गाढ़ा कीचड़ जिनका ऐसे प्रसक्तसम्पातपृथक्कृतान् = अत्यन्त (जनोंके) चलनेसे स्पष्ट दीखते हुए पथः=मार्गोंको। पपात=गया।

हिन्दी—वह अर्जुन उन मार्गोंसे जा रहे थे जिन्होंने वर्षाकालका टेढ़ा छोड़ दिया था, बैलोंने जिनके समीपके धान चर डाले थे, रथके पहियों जिनके सूखते हुए कीचड़ कई भागों में बट गये थे और लोगोंके अधिक चलने जो अलग-अलग स्पष्ट दीख रहे थे।

अभिप्राय—पूर्वां विजिह्मतां—यह शरत्काल था इससे पूर्व वर्षा में पिच्छिल होनेसे लोग मार्गोंके अगल-बगलसे चलते थे इसलिए वे टेढ़े दीखते थे किन्तु शरत्में पानी बरसना बन्द हो गया और रास्ते सूख गये अ लोग इधर-उधरसे न जाकर सीधे रास्तेसे जाने लगे। रथाङ्गसीमन्तित— स्त्रियाँ अपने केशपाशमें माँग निकालती हैं उसे सीमन्त कहते हैं क्यों वह केशसमूहोंको दो भागोंमें बाँट देता है। इसी प्रकार वर्षा बन्द हो जाने रास्तेका कीचड़ सूखता हुआ गाढ़ा हो गया और उसपर जब गाड़ीके पहि चले तो वह बीचमें गहरा होकर दो भागोंमें बँट गया है। सजीव चित्र महाकविने किया है ॥ १८ ॥

जनैरुपग्राममनिन्द्यकर्मभिर्विविक्तभावेङ्गितभूषणैर्वृताः ।
भृशं ददर्शाऽऽश्रममण्डपोपमाः सपुष्पहासाः स निवेशवीरुधः ॥१९॥

अन्वयः—सः उपग्रामम् अनिन्द्यकर्मभिः विविक्तभावेङ्गितभूषणैः जनैः वृताः आश्रममण्डपोपमाः सपुष्पहासाः निवेशवीरुधः भृशं ददर्श ।

व्याख्या—सः अर्जुनः, उपग्रामं नगरसमीपम् अनिन्द्यकर्मभिः प्रशस्तवृत्तिभिः, ग्रामीणैः तपस्विभिः वा यथाक्रमं व्यवहारः । विविक्तभावेङ्गितभूषणैः वाचाऽशयचेष्टाऽऽभरणैः, जनैः, लोकैः, वृताः अधिष्ठिताः, आश्रममण्डपोपमाः तपस्विजनोटजतुल्याः सपुष्पहासाः कुसुमहास्ययुक्ताः निवेशवीरुधः गृहलताः, भृशं सादरं ददर्श दर्शयामास । वंशस्थवृत्तम् । पद्येऽस्मिन्नुपमाऽलङ्कारः ।

भावार्थः—अर्जुनः गच्छन् मार्गे ग्रामेषु अनिषिद्धवृत्तिभिः एकाग्राभिप्रायः चेष्टाभूषणैः अनैरधिष्ठिता आश्रममण्डपतुल्या विकसितपुष्पाः गृहगुल्मिनीः भूयो ददर्श ।

समासः—उपाग्रामम्–ग्रामेषु इति, अत्र विभक्त्यर्थेऽव्ययीभावः । अनिन्द्यकर्मभिः–न निन्द्यम् अनिन्द्यम् (नञ्) । अनिन्द्यं कर्म येषां ते अनिन्द्यकर्माणः तैः (बहुव्रीहिः) । विविक्तभावेङ्गितभूषणैः–भावाः च इङ्गितं च भूषणं च तानि, (इतरेतरयोगद्वन्द्वः) । विविक्तानि भावेङ्गितभूषणानि येषां तैः (बहुव्रीहिः) । आश्रममण्डपोपमाः–आश्रमेषु मण्डपाः (स. तत्पु.) आश्रममण्डपाः उपमा यासां सा (बहुव्रीहिः) । सपुष्पहासाः–पुष्पाणां हासः (ष. तत्पु०), तेन सहिताः ताः (तुल्ययोग बहु०) । निवेशवीरुधः–निवेशाः वीरुधः इव (उपमानकर्म०) ।

कोषः—ग्रामः स्वरे संवसथे वृन्दे शब्दादिपूर्वकः । इति विश्वः । 'विविक्तौ पूतविजनौ' । 'मण्डपोऽस्त्री जनाऽऽश्रयः' । 'लता प्रतानिनी वीरुद्गुल्मिन्युपल इत्यपि' । सर्वत्राऽप्यमरकोषः । 'वीरुधौ वल्लिगुल्मिन्यौ' इति वैजयन्ती ।

व्याकरणम्—इङ्गितम्–इगि + क्त + नुम् + सु + अम् । वृताः–वृञ् + क्त शस् । ददर्श–दृश् + लिट् + तिप् + णल ।

पदार्थ—स=वह (अर्जुन) । उपग्रामम्=गाँवमें । अनिन्द्यकर्मभिः=अनिषिद्धवृत्तिवाले । विविक्तभावेङ्गितभूषणैः=(विविक्त=) एकाग्र है (भाव=)=अभिप्राय, (इङ्गित=) चेष्टाएँ और (भूषणैः)=अलंकार जिनके ऐसे । जनैः=

लोगोंसे । वृता:=अधिष्ठित । आश्रममण्डपोपमा:=तपोवनों के मण्डप जैसी। सपुष्पहासा:=खिचे हुए फूलोंवाली । निवेशवीरुध:=घरेलू झाड़ियोंको । भृश= बार-बार । ददर्श=देखता था ।

हिन्दी—अर्जुनने मार्गमें पड़ते हुए गाँवोंमें अनिन्दित (अर्थात् शास्त्र-विहित कर्म करनेवाले तथा एकान्तमें रहनेसे जिनके भाव, चेष्टायें और वेष-भूषा आदि स्पष्ट हो रहे हैं ऐसे ग्रामवासी जिनमें बैठा करते है, ऐसी, खिले हुए फूलोंवाली आश्रमोंके मण्डपों जैसी, घरोंके पास बनी हुई झाड़ियोंको बड़े सम्मान से देखा ।

अभिप्राय—कविका अभिप्राय है कि जैसे आश्रमों के मुनिलोग कणकण बीनकर अपनी जीविका चलाते हैं और उनके वेष आदि अत्यन्त सात्विक होते है, वैसे ही इन गाँवोंके निवासी भी कृषि आदि शस्त्रोक्त कर्मोंसे अपनी जीविका निर्वाह करते हैं तथा इनके भी भाव चेष्टायें और वेषभूषा आदि एकान्त में रहने से शुद्ध हैं। ये लोग जिनमें बैठते है वे झाड़ियाँ प्रत्येक घरके आगे बनी है जिनमें फूल खिले हैं और जो आश्रम के आगे बने मण्डपों जैसी लग रही हैं।

यहाँ गाँवोंकी आश्रमोंसे, ग्रामवासियोंकी मुनियोंसे और लतागुल्मों की आश्रममण्डपों से उपमा दी गई है ॥१९॥

ततः स सम्प्रेक्ष्य शरद्गुणश्रियं शरद्गुणाऽऽलोकनलोलचक्षुषम् ।
उवाच यक्षस्तमचोदितोऽपि गां न हीङ्गितज्ञोऽवसरेऽवसीदति ॥२०॥

अन्वयः—ततः सः यक्षः शरद्गुणश्रियं सम्प्रेक्ष्य शरद्गुणाऽऽलोकनलोलचक्षुषं तम् अचोदितः अपि गाम् उवाच, हि इङ्गितज्ञः अवसरे अवसीदति ।

व्याख्या—ततः तदनन्तरं, सः प्रसङ्गप्राप्तः, यक्षः गुह्यकः अर्जुनस्य मार्ग-निदर्शकः, शरद्गुणश्रियं शरद्कामशोभां सम्प्रेक्ष्य अवलोक्य, शरद्गुणाऽऽलोकन-लोलचक्षुषं शरद्गुणेक्षणचपलदृष्टिं, तम् अर्जुनम्, अचोदितः अपि अप्रेरितः अपि, अपृष्टोऽपीतिभावः । गां वाणीम्, उवाच जगाद । अतएवोक्तम्—हि यस्मात् कारणात्, इङ्गितज्ञः ज्ञाताभिप्रायः अवसरे प्राप्तसमये अवसीदति नैव मौनमालम्बते । यत्तु मनुना उक्तम्—'नापृष्टः कस्यचिद् ब्रूयात्' । इति, तत्

अनाकाङ्क्षितोक्ति सम्पुष्णाति। पद्येऽस्मिन् सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासाऽलङ्कारः।

भावार्थः—ततः व्यासप्रेषितोऽर्जुनसहचरो यक्षः शारदीं शोभां विलोक्य तदालोकने सतृष्णनेत्रमर्जुनं विचार्यापृष्टोऽपि जगाद। यतोहि अभिप्रायविद् जनः समये तूष्णीभवतुं न शक्नोति।

समासः—शरद्गुणश्रियम्–शरदः गुणाः (ष० तत्पु०), तेषां श्री ताम् (ष० तत्पु०)। शरद्गुणालोकनलोलचक्षुषम्—शरद्गुणानाम् आलोकने लोले चक्षुषी यस्य सः (बहुव्रीहिः), शरद्गुणाऽऽलोकने लोलचक्षुः तम् (स०तत्पु०)। इङ्गितज्ञः–इङ्गितं जानाति (उपपद०)।

कोषः—'यक्षरक्षोगन्धर्वकिन्नरः। पिशाचो गुह्यकः सिद्धः'। 'चलनं कम्पनं कम्प्रं चलं लोलं चलाचलम्। सर्वत्राऽप्यमरकोषः। 'इङ्गितं हृद्गतो भावः'। इति विश्वः।

व्याकरणम्—चोदितः—चुद्+क्त+सु। इङ्गितज्ञः–इङ्गितं जानातीति, इङ्गितज्ञः–इङ्गितं जानातीति (उपपद०)।

पदार्थ—ततः = इसके बाद। सः=वह (व्यासजी के द्वारा अर्जुनको रास्ता दिखलानेके लिए भेजा हुआ)। यक्षः = यक्ष। शरद्गुणश्रियं=शरद्कालकी शोभाको सम्प्रेक्ष्य = (दर्शनीय एवं वर्णनीय) समझकर। शरद्गुणालोकनलोलचक्षुषम्=शरद्की शोभाको देखनेमें ललचाये हैं नेत्र जिसके ऐसे। तम्=उस (अर्जुन) को। अनोदितः अपि=बिना प्रेरित किए (बिना पूछे) ही। उवाच=बोला। हि=क्योंकि। इङ्गितज्ञः=अभिप्रायको समझनेवाला। अवसरे=समयपर। न अवसीदति = नहीं चूकता।

हिन्दी—तब साथ चलते हुए यक्षने शरत्कालीन शोभाओंको दर्शनीय और वर्णनीय समझकर तथा अर्जुनको ललचायी आँखोंसे शारदी शोभाका अवलोकन करते देख बिना पूछे ही कहना शुरू किया। क्योंकि अभिप्रायको समझनेवाले प्राज्ञ लोग समयपर नहीं चूकते।

इयं शिवायाः नियतेरिऽऽयतिः कृतार्थयन्ती जगतः फलैः क्रियाः।
जयाश्रियं पार्थ! पृथुकेतु ते शरत्प्रसन्नाऽम्बुरनम्बुवारिदा ॥२१॥

अन्वयः—पार्थ ! शिवायाः नियतेः आयतिः इव जगतः क्रियाः फलैः कृतार्थयन्ती प्रसन्नाऽम्बुः अनम्बुवारिदा इयं शरत् ते जयश्रियं पृथूकरोतु ।

व्याख्या—पार्थ ! हे धनञ्जय !, शिवायाः शुभकारिण्याः, नियतेः भाग्यस्य, आयतिः इव उत्तरकालः इव, जगतः विश्वस्य, क्रियाः कृष्यादिकर्माणि, फलैः लाभैः, कृतार्थयन्ती, सफलयन्ती प्रसन्नाऽम्बुः स्वच्छजला, अनम्बुवारिदा निर्जलमेघमाला, अत्रोर विशेषणद्वयेन अर्जुनम्प्रति द्यावापृथिव्योः परस्परमानुकूल्यं प्रतीयते । इयम् प्रवर्तमाना, शरद्, ऋतुविशेषः, ते तव, जयश्रियं विजयलक्ष्मीम्, पृथूकरोतु विस्तारयतु ।

भावार्थः—शुभेन भाग्येन जीवनमिव जगतः क्रियाः फलैः कृतार्थयन्ती निर्मलजलयुता स्वच्छजलदा चेयं शरत्, हे पार्थ ! ते विजयलक्ष्मीं विस्तारयतु।

समासः—शिवायाः शिवम् अस्ति यस्याः सा तस्याः (बहुव्रीहिः) । प्रसन्नाम्बुः—प्रसन्नम् अम्बु यस्यां सा (बहुव्रीहिः) । अनम्बुवारिदा–अनम्बवः वारिदा यस्यां सा (बहुव्रीहिः) । जयश्रियम्–जयस्य श्रीः ताम् (ष० तत्पु०) ।

कोशः—'श्वः श्रेयस शिवं भद्रं कल्याणं मंगल शुभम्' । 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः' । उत्तरःकाल आयतिः' । 'पृथुपीवरबहुलप्रकर्षार्थाः' । सर्वत्राऽप्यमरः कोशः ।

व्याकरणम्—पार्थः–पृथा + अण् + सु । शिवायाः—शिव+अच्+टाप् + ङस् । 'अर्शादिभ्योऽच्' । इति अच् प्रत्ययः । कृतार्थयन्ती–कृत+अर्थ+णिच् +शतृ+ङीप् । पृथूकरोतु–पृथु+च्वि+कृ+लोट्+तिप् । अत्र—'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' । इति च्विप्रत्ययः, 'च्वौ च' । इति दीर्घः ।

पदार्थ—पार्थ = हे अर्जुन ! शिवायाः=कल्याणकारी । नीयतेः=भाग्यके। आयतिः इव – उत्तरकालकी तरह । जगतः = संसारके । क्रियाः=(कृषि आदि) कर्मोंको । फलैः = फलों ( धान्यादि ) से । कृतार्थयन्ती = सफल करती हुई। प्रसन्नाम्बु = निर्मल जलोंवाली । अनम्बुवारिदा = जलहीन बादलोंवाली । इयं शरत् = यह शरदृतु । ते जयश्रियं=तुम्हारी विजयलक्ष्मीको । पृथूकरोतु= बढ़ावे ।

हिन्दी—अच्छा भाग्य जैसे मनुष्यके जीवनको सफल कर देता है ऐसे ही

कृषकोंके कृषि आदि कर्मोंको सफल करती हुई, स्वच्छ जलोंवाली, तथा निर्जल बादलोंवाली, यह शरत् तुम्हारी विजयलक्ष्मीका विस्तार करे।

अभिप्राय—वर्षाऋतुके समाप्त होते तथा शरत्के प्रारम्भ होते ही राजा लोग दिग्विजय के लिए प्रस्थान करते थे। विजयादशमीका पर्व इसीलिए क्षत्रियोंका पर्व माना जाता है, उस दिन प्रस्थानका मुहूर्त होता था। अर्जुन भी राजपुत्र था इसलिए यक्ष शरत्की शोभा देखनेमें लगे हुए अर्जुनको उसके राजत्वका स्मरण दिलाता है और इस उचित समयकी यात्रामें शुभाशंसा व्यक्त करता है। इस समय फसल तैयार हो जाती है। किसान इतने दिनों तक जो श्रम करते हैं उसका फल उन्हें इसी ऋतुमें प्राप्त होता है। कविका तात्पर्य है कि जैसे अच्छा भाग्य समय आनेपर मनुष्यको उसके कर्मोंका अच्छा फल देता है उसी प्रकार यह ऋतु भी कृषकोंको उनके परिश्रमका फलदेनेवाली है। ऐसी फलद ऋतुमें तुमने जिस कार्य के लिए प्रस्थान किया है वह अवश्य सफल होगा ॥ २१ ॥

उपैति सस्यं परिणामरम्यतां नदीरनौद्धत्यमपङ्कतां मही।
नवैर्गुणैः सम्प्रति संतवस्थिरं तिरोहितं प्रेम घनाऽऽगमश्रियः ॥ २२ ॥

अन्वयः—सस्यं परिणामरम्यतां उपैति, नदीः अनौद्धत्यम् (उपैति), मही अपङ्कताम् ( उपैति ), सम्प्रति नवैः गुणैः संस्तवस्थिरं घनागमश्रियः प्रेम तिरोहितम्।

व्याख्या—सस्यं व्रीह्यादिसम्पद्, परिणामरम्यतां परिपाकमनोहरतां उपैति आप्नोति, नदीः सरितः, अनौद्धत्यं चापल्याऽभावम् उपैति मही पृथिवी अपङ्कतां निष्पङ्कत्वम् उपैति, सम्प्रति अधुना, नवैः अभिनवैः, गुणैः धर्मैः संस्तवस्थिरं परिचयदृढं, घनाऽऽगमश्रियः वर्षर्तुलक्ष्याः प्रेम प्रणयः, तिरोहितम् अन्तर्हितं व्यर्थीकृतमिति भावः। अर्थात् प्रणयः गुणाऽधीनो भवति न तु परिचयाऽधीन कुत्रापि क्वचिदिति लोकव्यवहारः।

भावार्थः—धान्यं पाकेन रमणीयं दृश्यते। नदीभिरौद्धत्यं ( वृद्धिजनितं ) त्यक्तम्, मही निष्कर्दमा जाता, साम्प्रतमेभिर्गुणैः एतावत्कालीनपरिचयेन दृढ़-

समासः—परिणामरम्यतां-परिणामेन रम्यता ताम् ( तृ० तत्पु० )।

अनौद्धत्यम्—न औद्धत्यम् (नञ्०)। अपङ्कताम्—अविद्यमानः पङ्कः यस्याः सा तान् (नञ्बहुव्रीहिः)। संस्तवस्थिरम्—संस्तवेन स्थिरम् (तृ०.तत्पु०)। धनाऽऽगमश्रियः-धनानान् आगमः (ष० तत्पु०) धनागमस्य श्रीः तस्याः (ष० तत्पु०)।

कोषः—'वृक्षादीनां फलं सस्यम्'। 'परिणामो विकारो द्वे समे विकृतिविक्रिये'। 'संस्तवः स्यात् परिचयः'। 'प्रेमा ना प्रियता हार्दम्'। सर्वत्राऽप्यमरः कोशः।

व्याकरणम्—औद्धत्यम्–उद्धतस्य भावः कर्म वा, 'गुणवचनब्राह्मणादिभ्यः कर्मणि च'। इति ष्यञ्। उद्धत+ष्यञ्+आदिवृद्धि+सु+अम्। 'सामान्ये नपुंसकम्' इति नपुंसकत्वम्। अपङ्कताम्–न+पङ्क+तल्+टाप्+अम्।

पदार्थ—शस्यं=धान्यको। परिणामरम्यतां=पकनेकी सुन्दरता। उपैति=प्राप्त होती है। नदीः=नदियोंको। अनौद्धत्यं=चञ्चलता। (तथा) महीम्=पृथ्वीको। अपङ्कता=कीचड़का न होना (उपैति)। संप्रति=इस समय। नवैः गुणैः=(शरद्के) नये गुणोंसे। संस्तवस्थिरं=परिचयसे दृढ़। धनागमश्रियः=वर्षाकालकी शोभाका। प्रेम=प्रेम। तिरोहितम्=ढक गया है।
मपि प्रावृट्शोभायाः प्रेम लुप्तं जातम्।

हिन्दी—फसलें पक जानेसे अच्छी लग रही है, नदियोंने बाढ़ न होनेके कारण इधर-उधर बहना छोड़ दिया है। पृथ्वी कीचड़से रहित हो गई है। इन्हीं गुणों के कारण परिचयसे दृढ़ भी वर्षाकी शोभाका प्रेम लुप्त हो गया है।

अभिप्राय—यहाँ मल्लिनाथने शस्य और महीको कर्त्ता तथा परिणामरम्यता एवं अपङ्कताको कर्म माना है, किन्तु नदीः यह द्वितीयान्त पाठ देखकर कविके अभिप्रायमें एकरूपता लानेके लिए हमें सस्य और महीको कर्म मानना उचित प्रतीत होता है॥ २२॥

पतन्ति नास्मिन् विशदाः पतत्त्रिणो धृतेन्द्रचापा न पयोदपङ्क्तयः।
तथापि पुष्णाति नभः श्रियं परां न रम्यमाहार्य्यमपेक्षते गुणम्॥२३॥

अन्वयः—अस्मिन् विशदाः पतत्त्रिणः न पतन्ति, धृतेन्द्रचापाः पयोदपङ्क्तयः च (न पतन्ति); तथाऽपि नभः परां श्रियं पुष्णाति, रम्यम् आहार्यं गुणं न अपेक्षते।

व्याख्या—अस्मिन् क्षणे, विशदाः श्वेतवर्णाः पतत्रिणः पक्षिणः, न पतन्ति न प्रसरन्ति, धृतेन्द्रचापाः इन्द्रधनुर्युक्ताः पयोदपङ्क्तयः वारिधिश्रेणयः, न पतन्ति न प्रसरन्ति, तथाऽपि पूर्वोक्तकारणाऽभावेऽपि, नभः आकाशं, पराम श्रेष्ठां, श्रियं सुषमां पुष्णाति सञ्चिनोति। तदेव प्रकारान्तरेण समुपस्थाप्यते—रम्यं मनोहारि, वस्तु, आहार्यम् आरोप्यमाणं गुणं प्राणिस्थां विशेषयोग्यतां, न अपेक्षते न अभिलषतीति भावः। अर्थाऽन्तरन्यासाऽलङ्कारः।

भावार्थः—यद्यपि अस्मिन्नभसि बलाकाभिर्नोड्डीयते; गृहीतेन्द्रचापा मेघमाला अपि न सन्ति तथापि नभः उत्कृष्टां शोभामादधाति। यतो हि रमणीयं वस्तु आरोप्यमाणगुणस्यापेक्षां न करोति।

समासः—धृतेन्द्रचापाः—इन्द्रस्य चापः ( ष० तत्पु० ), धृतः इन्द्रचापः याभिः ताः ( बहुव्रीहिः )। पयोदपंक्तयः—पयांसि ददतीति पयोदाः ( उपपद-तत्पु० ), पयोदानां पंक्तयः (ष० तत्पु०)।

कोशः—'शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डुराः' इत्यमरः। 'विशदः पाण्डुरे व्यक्ते'। इति हैमः। 'पतत्त्रिपत्रिपतगपतत्पत्त्ररथाऽण्डजाः'। 'इन्द्राऽऽयुधं शक्रधनुः'। नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम्'। सर्वत्राऽप्यमरः कोशः।

व्याकरणम्—विशदाः—विशीयन्ते इति, शद्लृ+अच्+जस्। पतत्त्रिणः—पतत्त्रे स्तः येषां ते ( बहुव्रीहिः )। 'अत इनिठनौ'। इति इनिः। पतत्त्र + इनि + जस्। पयोदाः—पयस् + दा + क+जस्। आतोऽनुपसर्गे कः'। इति क प्रत्ययः।

पदार्थः—अस्मिन् = इस (आकाश) में। विशदाः=बहुत से। पतत्रिणः = पक्षी (बगुले)। न पतन्ति = नहीं उड़ रहे हैं। धृतेन्द्रचापाः = धारण किया है इन्द्र धनुष जिन्होंने ऐसी। पयोदपङ्क्तयश्च = मेघोंकी पंक्तियाँ भी नहीं हैं। तथापि = तो भी। नभः=आकाश। परां श्रियं=उत्कृष्ट शोभाको। पुष्णाति= धारण कर रहा है। रम्यम्=रमणीय वस्तु। आहार्यं=आरोप किये जाते हुए। गुण=गुणकी। न अपेक्षते=अपेक्षा नहीं करती।

हिन्दी—यद्यपि आकाशमें बलाकाओंकी पंक्तियाँ नहीं उड़ रही हैं और मेघमालाएँ भी नहीं हैं तो भी यह आकाश उत्कृष्ट शोभाको धारण कर रहा है। रमणीय वस्तु दूसरे आरोप किये गए गुणकी अपेक्षा नहीं करती।

**अभिप्राय**—यहाँपर रमणीय पदार्थ किसी आरोपित गुणकी अपेक्षा नहीं करता' इस सामान्यसे—'बकपंक्ति और मेघमालाओंसे रहित भी आकाश शोभित हो रहा है' इस विशेषका समर्थन किया गया है, इसलिए सामान्यसे विशेषका समर्थन रूप अर्थान्तरन्यास अलंकार है। वर्षाऋतुमें बकपंक्तियोंका आकाशमें उड़ना कविप्रसिद्ध है ॥ २३ ॥

**विपाण्डुभिर्म्लानतया पयोधरैश्च्युताऽचिराऽऽभागुणहेमदामभिः ।**
**इयं कदम्बाऽनिलभर्तुरत्यये न दिग्वधूनां कृशता न राजते ॥२४॥**

**अन्वयः**—कदम्बाऽनिलभर्तुः अत्यये म्लानतया विपाण्डुभिः च्युताऽचिराऽऽभागुणहेमदामभिः पयोधरैः दिग्वधूनाम् इयं कृशता न राजते (इति) न ।

**व्याख्या**—कदम्बानिलभर्तुः वर्षर्तोः, अत्र कदम्बानिलप्रयोगेण वर्षर्तु रुपलक्ष्यते तेन वर्षाकालस्यैवात्र परिग्रहः। अत्यये व्यपगमे, विरहे इति भावः। म्लानतया क्लिन्नतया, दुर्बलतया च, विपाण्डुभिः पाण्डुरवर्णैः च्युताऽचिराऽऽभागुणहेमदामभिः विहीनविद्युल्लतासुवर्णसूत्राऽऽभरणैः पयोधरैः, जलधरैः अन्यत्र स्तनैः उपलक्षितानां, दिग्वधूनां दिशामयीयुवतीनाम्, इयं समुखस्था, कृशता दुर्बलता, न राजते राजते न अपितु शोभत एव, अत्र द्वौ नञौ एकं प्रकृतार्थं गमयतः। यथाऽऽह वामनः—'सम्भव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ' इति। रूपकाऽलङ्कारः ।

**भावार्थ**—प्राणवल्लभरूपपरयुः प्रयाणे सति मलिनतया पाण्डुवर्णैः विद्युल्लतारूपसुवर्णसूत्ररहितैः मेघरूपैः, स्तनैः दिग्वधूनां तनुता न राजते इति न अपितु राजत एव ।

**समासः**—कदम्बानिलभर्तुः—कदम्बे अनिलः यस्मिन् सः (व्याधिकरणबहु०) कदम्बाऽनिल एव भर्ता तस्य (रूपक)। च्युताऽचिराऽऽभागुणहेमदामभिः—अचिरम् आभा यासां ताः अचिराभाः (बहुव्रीहिः), तासां गुणाः (ष. तत्पु.), हेम्नः दामानि (ष. तत्पु.), अचिराऽऽभागुणाः एव हेमदामानि (रूपककर्म.) च्युतानि अचिराऽऽभागुणहेमदामानि येभ्यः ते, तैः (बहुव्रीहिः)। पयोधरैः-पयसां धरा-तैः (ष. तत्पु.)। दिग्वधूनाम्—दिशः एव वध्वः तासाम् (रूपकक.)।

**कोशः**—'नीपप्रियकदम्बास्तु हरिप्रिये'। 'हरिणः पाण्डुरः पाण्डुरीवर्णः

-ङ्गुस्तु धूसरः' । उभयत्राऽप्यमरः कोशः । 'स्तनाम्भोदौ पयोधरौ' इति वैजयन्ती । 'अत्ययोऽतिक्रमे कृच्छ्रे ऽत्युत्पाते नाशदण्डयोः । इति धरणिः ।

व्याकरणम्—भर्तुः-भृ+तृच्+ङस् । अत्ययः—अत्ययनम् इति, इण्+अच्+सु । कृषता-कृश+तल्+टाप् । राजते—राजृ+लट्+तिप् ।

पदार्थ—कदम्बानिलभर्तुः=वर्षाॠतुरूप पतिके । अत्यये=विरहमें । म्लानतया=मलिन होनेसे । विपाण्डुभिः=पीले पड़े हुए । च्युताचिराभांगुणहेमदामभिः=(च्युत=) गिर गये हैं (अचिराभागुण=) विद्युल्लता रूप (हेमदामभिः=) सुवर्णसूत्र जिनसे ऐसे । पयोधरैः=मेघों एवं स्तनोंसे । दिग्वधूनां=दिशारूप वधुओंको कृशता=दुर्बलता । न राजते (इति) न=नहीं शोभित होती ऐसा नहीं (अर्थात् अवश्य शोभित होती है) ।

हिन्दी—वर्षाॠतु रूप पतिके चले जाने पर मलिनताके कारण फीके पड़े हुए तथा विद्युल्लता रूप सुवर्ण सूत्र जिनसे हट गया है, ऐसे मेघरूप स्तनोंसे दिशारूप वधुओंकी दुर्बलता अच्छी नहीं लग रही थी ऐसी बात नहीं । अपितु अच्छी ही लग रही थी ।

अभिप्राय—पतिके विदेश चले जानेपर जैसे किसी पतिव्रता स्त्रीके स्तन म्लान होकर फीके पड़ जाते है अर्थात् स्पर्शादिके अभावमें वे दुर्बल हो जाते हैं और सुवर्णसूत्र आदि आभूषण उनपर नहीं रहते । ऐसे ही वर्षाॠतुके बीत जानेपर मेघ फीके पड़ गये और उनमें बिजली नहीं चमकती, उनकी घटाएं धीरे-धीरे क्षीण होती जा रही हे । यहाँ कविने दिशाओंको वधू, वर्षाको पति, मेघोंको स्तन और विद्युल्लताको सुवर्णसूत्र रूपमें चित्रित किया है अतः रूपक अलङ्कार है । पतिके विदेश जानेपर उसके विरहमें शरीरको प्रसाधित न करना भारतीयसंस्कृतिमें परम्परा रही है । पतिव्रताका लक्षण ही किया गया है कि—

आर्तार्त्ते मुदिते हृष्टा प्रोषिते मलिना कृशा ।
मृते म्रियेत या पत्युः सा स्त्री ज्ञेया पतिव्रता ॥

'जो पतिके दुःखी होनेपर दुःखी रहे, उसके प्रसन्न होने पर प्रसन्न रहे, उसके विदेश जानेपर मलिन और दुर्बल रहे, उसके मरनेपर स्वयं भी मर जाय, वही पतिव्रता स्त्री है ॥ २४ ॥

**विहाय वाञ्छामुदिते मदाऽत्ययादरक्तकण्ठस्य रुते शिखण्डिनः।**
**श्रुतिः श्रयत्युन्मदहंसनिःस्वनं गुणाः प्रियत्वेऽधिकृता न संस्तवः ॥२५॥**

**अन्वयः**—मदाऽत्ययात् अरक्तकण्ठस्य शिखण्डिनः उदिते रुते वाञ्छां विहाय श्रुतिः उन्मदहंसनिःस्वनं श्रयति, प्रियत्वे गुणाः अधिकृताः, संस्तवः न।

**व्याख्या**—मदाऽत्ययात् मदनाशात्, अरक्तकण्ठस्य अश्राव्यस्वरस्य, अत्र कण्ठ शब्देन लक्षणासाहचर्य्यात् तद्गतः स्वरो लक्ष्यते। शिखण्डिनः मयूरस्य, उदिते उच्चैस्तरे, रुते रवे वाञ्छाम् स्वार्थं, विहाय परित्यज्य श्रुतिः कर्णम् उन्मदहंसनिःस्वनं मत्तमरालकूजितं, श्रयति भजते। अत्र परिचितंमयूरस्वर परिहृत्य कथमपरिचिते प्रीतिः, इति समर्थयन् वदति—प्रियत्वे प्रीतिहेतौ, गुणाः तद्गत विशिष्टधर्माः, अधिकृताः स्वायत्तीकृताः संस्तवः परिचयः न अधिकृतः। अर्थान्तरन्यासपरिसङ्ख्याऽलङ्कारयोः संसृष्टिः।

**भावार्थः**—वर्षाभावात् क्षीणमदस्यात एवारमणीयस्वरस्य मयूरस्य केकां विहाय जनानां कर्णा उन्मदहंसनिस्वनं भजन्ते। यतोहि गुणकारणादेव वस्तु प्रियं भवति न तु परिचयेन।

**समासः**—मदाऽत्यात्-मदस्य अत्ययः तस्मात् (ष. तत्पु.)। अरक्तकण्ठस्य—अरक्तः कण्ठः यस्य सः तस्य (बहुव्रीहिः)। शिखण्डः अस्य अस्ति इति तस्य (उपपदतत्पु.)। उन्मदहंसनिःस्वनम्—उत्कटः मदः येषां ते उन्मदाः (बहुव्रीहिः), ते च ते हंसः (कर्मधारयः), उन्मदहंसानां निःस्वनः तम् (ष. तत्पु.)

**कोशः**—दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेकः स्मयो मदः'। 'मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक्'। इच्छाकाङ्क्षास्पृहेहातृड्वाञ्छालिप्सामनोरथः' 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः'। 'संस्तवः स्यात् परिचयः' इत्यमरः कोशः।

**व्याकरणम्**—शिखण्डिनः—शिखण्ड+इनि+ङस्। 'अतइनिठनौ'। इति इनिः। प्रियत्वे-प्रीणातीति प्रियः, प्रीञ्+कत्वसुङि।

**पदार्थ**—मदात्ययात्=मदके क्षीण हो जानेसे। अरक्तकण्ठस्य=सुननेके योग्य नहीं रह गया है गला (स्वर) जिसका ऐसे। शिखण्डिनः=मोरके। उदिते ऊँचे। रुते=शब्दमें। वाञ्छां=अभिलाषको। विहाय=छोड़कर। श्रुतिः=

काम। उन्मदहंसनिस्वनं=उन्मत्त हंसोंके कोलाहलको। श्रयति=आश्रित करता (सुनता) है। प्रियत्वे=प्रिय होनेमें। गुणाः=गुण। अधिकृता=अधिकारी हैं। संस्तवः=परिचय। न=नहीं।

हिन्दी—वर्षाकाल बीत जानेसे मोरोंकी उन्मत्तता चली गई। उनकी बाणीमें वह मधुरता नहीं है, इसलिए कान उसे सुनना छोड़कर हंसोंके कलरव-को सुनना चाहते हैं। क्योंकि किसी वस्तुके प्रिय होनेमें उसके गुण ही प्रयोजक होते हैं, परिचय नहीं।

अभिप्राय—वर्षाऋतुमें पानी गन्दा हो जाता है इसलिए हंस सब जगहसे उड़कर मानस-सरोवर चले जाते हैं। बादलोंको देखकर नाचनेवाले मोरोंकी ही ध्वनि सुनाई पड़ती है अतः वही अच्छी लगती है। किन्तु शरद्के आते ही पानी निर्मल हो जाता है। अतः हंस भी मानससरोवरसे लौट आते हैं। घन-घोर घटाएँ न रहनेसे मोरोंका उत्साह ठंडा पड़ जाता है और उनकी ध्वनिमें वह मधुरता नहीं प्रतीत होती। इसलिए मोरोंकी अपेक्षा हंसोंकी ध्वनि सुनने-को आकृष्ट होना स्वाभाविक है। कोई वस्तु यदि केवल परिचयके कारण प्रिय कही जाय तो वह पक्षपात हो जाता है। गुणवान् यदि परिचित न भी हो तो अवश्य हृदय उसकी ओर आकृष्ट हो जाता है। इस पद्यमें भी गुणोंका परि-चयकी अपेक्षा प्रियत्वमें कारण होना रूप सामान्य द्वारा मोरोंकी अपेक्षा हंसोंकी ध्वनि की ओर आकृष्ट होना रूप विशेषका समर्थन होनेसे सामान्यसे विशेष समर्थन रूप अर्थान्तरन्यास अलंकार है॥ २५॥

अमी पृथुस्तम्बभृतः पिशङ्गतां गता विपाकेन फलस्य शालयः।
विकासि वप्राम्भसि गन्धसूचितं नमन्ति निघ्रातुमिवासितोत्पलम्॥२६॥

अन्वयः—अमी पृथुस्तम्बभृतः फलस्य विपाकेन पिशङ्गतां गताः शालयः वप्राऽम्भसि विकासि गन्धसूचितम् असितोत्पलं निघ्रातुम् इव नमन्ति।

व्याख्या—अमी एते, पृथुस्तम्बभृतः प्रचुरगुच्छधारिणः, फलस्य प्रसका-लस्य, विपाकेन परिणामेन, पिशङ्गताङ्गताः पीततां प्राप्ताः, शालयः व्रीहि-विशेषाः, वप्राऽम्भसि केदारजले, विकासि विकसितं, गन्धसूचितम्, आमोद-ज्ञापितम्, असितोत्पलं नीलोत्पलं, निघ्रातुम् इव जिघ्रातुम् इव, नमन्ति अवः

नताः भवन्ति। निध्यातुमिव क्वाचित्कः पाठः, तत्र द्रष्टुमित्यर्थः। अत्र पद्ये निघ्रातुमिवेत्यत्रोत्प्रेक्षाऽलङ्कारः।

समासः-पृथुस्तम्भभृतः-पृथवः च ते स्तम्भाः (कर्मधारयः), पृथुस्तम्भान् बिभ्रतीति तस्य (उपपद०)। वप्राम्भसि-वप्रस्य अम्भः तस्मिन् (प० तत्पु०)। गन्धसूचितम्-गन्धेन सूचितम् (तृ० तत्पु०)। असितोत्पलम्-न सितम् (नञ्०) असितं च तद् उत्पलं तत् (कर्मधारयः)।

कोशः—'वप्रकाण्डे स्तम्बगुल्मौ'। स्तम्बो गुच्छस्तृणादिनः'। 'पुंनपुंसकयोर्वप्रः, केदारः क्षेत्रम्'। सर्वत्राऽत्यमरः कोशः।

व्याकरणम्—पृथुस्तम्बभृतः पृथुस्तम्ब+भृ+क्विप्+ङस्। पिशङ्गताम्-पिशङ्ग+तल् टाप्+अम्। विकासि-वि+कस्+णिनि। निघ्रातुम्—नि+घ्रा+तुमुन्। नमन्ति—नम्+लट्+झि।

पदार्थः—अमी=ये। पृथुस्तम्बभृतः=मोटे-मोटे गुच्छोंको धारण किए हुए। फलस्य विपाकेन=फलोंके पक जानेसे। पिशङ्गतां गताः=पीलेपनको प्राप्त हुए। शालयः=धान। वप्राम्भसि=खेतके जलमें। विकासि=खिले हुए। गन्धसूचितम्=गन्धसे जताये गये। असितोत्पलम्-नीले कमलको। निघ्रातुम् इव=सूंघनेके जैसे। नमन्ति=झुक रहे हैं।

भावार्थः—एते धान्यवृक्षाः स्थूलगुच्छान्धारयन्तः फलपरिपाकेन पिङ्गवर्णाः सन्तः गन्धज्ञापितं क्षेत्रजले विकसितं नीलोत्पलमाघ्रातुं नमन्तीत्युत्प्रेक्षते।

हिन्दी—ये मोटे-मोटे, बालके गुच्छोंको धारण किए हुए, फलोंके पक जानेसे पीले पीले धानके पौधे, खेतके जलमें खिले हुए तथा गन्धसे प्रतीत होने वाले नीले कमल को सूंघनेके लिए झुक रहे है।

अभिप्राय—धानकी बालें पक जानेपर पीली हो जाती हैं और नीचे झुक जाती हैं। कवि झुकनेके कारणकी उत्प्रेक्षा करता है कि जिस खेतमें धान के पौधे उगे है वह पानीसे भरा है और उस पानीमें नीले कमल खिले है सम्भवतः उनकी गन्ध की सूंघनेके लिए ही बालें नीचेको झुक रही हैं। वप्राम्भसि—चारों ओर भीड़ होनेसे खेतमें जल जमा रहता है और उसमें कमल खिल गये है। विप्र शब्द यद्यपि प्राकार (घेरा) अर्थमें ही प्रसिद्ध

किन्तु "उप्यते बीजमत्र" इस विग्रहसे डुवप् बीजसन्ताननें धातुसे "वृधिवपिन्यां रन्" ( उ० २।२७ ) सूत्रसे रन् प्रत्यय होकर जो वप्र शब्द बनता है उसका अर्थ खेत होता है ॥ २६ ॥

अथ चतुर्भिः पद्यैः कलापकमाह—

मृणालिनीनामनुरञ्जितं त्विषा विभिन्नमम्भोजपलाशशोभया ।
पयः स्फुरच्छालिशिखापिशङ्गितं द्रुतं धनुष्खण्डमिवाऽहिविद्विषः॥ २७॥

अन्वयः—मृणालिनीनां त्विषा अनुरञ्जितम् अम्भोजपलाशशोभया विभिन्नं स्फुरच्छालिशिखापिशङ्गितं द्रुतम् पयः अहिविद्विषः धनुष्खण्डम् इव (अपदिश्य धावतामित्यादिभिः ३० तमश्लोकेन सम्बन्धः)।

व्याख्या—मृणालिनीनां सरोजिनीनां, त्विषा शोभया हरिद्वर्णेन, अनुरञ्जितं तद्वर्णतागतं, हरितीकृतमिति भावः। अम्भोजपलाशशोभया कमलपत्रकान्त्या, विभिन्नं विमलं स्फुरच्छालिशिखापिशङ्गितं शोभमानकलमाग्रपीतीकृतम्, एवम्प्रकारेण विभिन्नवर्णत्वात् द्रुतं पलायितं, पयः वप्राऽम्भः, अहिविद्विषः इन्द्रस्य धनुष्खण्डम् इव इन्द्राऽऽयुधमिव (अपदिश्य धावतामित्याऽऽदिभिः ३० तमश्लोकेन सम्बन्धः)। उत्प्रेक्षाऽलङ्कारः।

भावार्थः—कमलिनीकान्त्यानुरञ्जितं, कमलदलत्विषा विमिश्रं, चंचलकलमाग्रैः पिङ्गलीकृतम् अतएव विगलितम् इन्द्रधनुषः खण्डमिव पयः (अपदिश्य धावतामित्यादि ३० श्लोकेनान्वयः)।

समासः—अम्भोजपलाशशोभया—अम्भसि जातानि अम्भोजानि, अम्भोजानां पलाशानि ( ष० तत्पु०), तेषां शोभा तया (ष० तत्पु०)। स्फुरच्छालिशिखापिशङ्गितम्—शालीनां शिखाः (ष. तत्पु.), स्फुरन्त्यः च ताः शालिशिखाः (कर्मधारयः), ताभिः पिशङ्गितम् (तृ० तत्पु०)। धनुष्खण्डम्—धनुषः खण्डं (ष० तत्पु०)।

कोशः—'मृणालं विदम्'। 'स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः'। 'पत्रं पलाशं छदनम्'। 'पयः क्षीरं पयोऽम्बु च'। 'अहिवृत्तेऽपि । भित्त शकलखण्डे वा पुंस्यर्धोऽर्धम्' सर्वत्राऽप्यमरः कोशः।

व्याकरणम्—मृणालिनीनाम्—अल्पं मृणालं = मृणाली, तासाम्। मृणाल+इनि+ङीप्+आम्। 'अत इनिठनौ' इति ङ इनिः। अम्भोजम्—अम्भस्+जनी+ड+सु+अम्। 'सप्तम्यां जनेर्डः' इति ड प्रत्ययः। द्रुतम्—द्रु+क्तसु+अम्। अहिविद्विषः—अहि+वि+द्विद्+क्विप्+ङस्। धनुष्खण्डम्—नित्यं समासेऽनुत्तरपदस्थस्य'। इति धनुषः विसर्गस्य षत्वम्।

पदार्थ—मृणालिनीनां=कमलिनियोंकी। त्विषा=कान्तिसे। अनुरञ्जितं=रंग हुए। अम्भोजपलाशशोभया=कमलके पत्तोंकी शोभासे। विभिन्नम्=मिश्रित। स्फुरच्छालिशिखापिशङ्गितं = हिलती हुई धानकी बालोंसे पीला किया हुआ। (इस प्रकार कई वर्णका होनेसे) द्रुतं=पिघले हुए। अहिशत्रोः=वृत्रशत्रु (इन्द्र) के। धनुष्खण्डम् इव = धनुषके टुकड़ेकी तरह (स्थित) पयः = जलके [अपदिश्य बहानेसे धावताम् = दौड़ते हुए, ३० वें श्लोकसे अन्वय हैं]।

हिन्दी—कमलिनीकी कान्तिसे रंगे हुए, कमलदलोंकी शोभासे मिश्रित तथा हिलते हुए धानोंकी बालियोंसे पीले अतएव पिघले हुए इन्द्रधनुषके टुकड़े की तरह लगते हुए पानी को (बहाना बनाकर दौड़ते हुए, आदि ३० वे श्लोक से अन्वय है)।

अभिप्राय कमलीनी हरी होती है उसकी कान्तिसे जल हरा हो जाता है कमल लाल होते है उसकी पंखड़ियोंकी कान्तिसे जल लाल हो गया है। पके हुए धानोंकी वालें पीली हैं उनके हिलने से उनपर पीली परछाई पड़ रही है अतः कहीं कहीं पीला दीख रहा है। इस प्रकार वह धानके खेतोंमें भरा हुआ जल ऐसा प्रतीत होता है मानो इन्द्रधनुषका टुकड़ा टूटकर पिघल गया हो क्योंकि इन्द्रधनुषमें भी कई रंग होते हैं। इन्द्रधनुषका टुकड़ा टूटकर पिघलना यह कविकी मौलिक कल्पना है, चूंकि इन्द्रधनुष टूटकर पिघलता नहीं इसलिये केवल कल्पना ही हो सकती है अतः यह उत्प्रेक्षा अलंकार ही है, उपमा नहीं ॥ २७॥

विपाण्डु संव्यानमिवाऽनिलोद्धतं निरुन्धतीः सप्तपलाशजं रजः ॥
अनाविलोन्मीलितवाणचक्षुषः सपुष्पहासा वनराजियोषितः ॥२८॥

अन्वयः—विपाण्डुअनिलोद्धतं सप्तपलाशजं रजः सव्यानम् इव निरुन्धतीः

अनाविलोन्मीलितवाणचक्षुषः सपुष्पहासाः वनराजियोषितः (अपदिश्य धावता- मित्यादिभिः ३० तमश्लोकेन सम्बन्धः)।

व्याख्या—विपाण्डु शुभ्रम् अनिलोद्धतम् पवनेनोद्धतम्- सप्तपलाशजं सप्त- पर्णपुष्पप्रभवं, रजः रागं, संव्यानम् इव धौतम् इव, निरुन्धतीः निवारयन्तीः, अनाविलोन्मीलितवाणचक्षुषः अकलुषविकसितनीलशैरेकनेत्राः, सपुष्पहासाः कुसुमविकचविकासाः, वनराजियोषितः आरण्यस्त्रियः, (अपदिश्य धावता- मित्यादिभिः ३० तमश्लोकेन सम्बन्धः)। उपमालङ्कारः।

भावार्थः—शुभ्रं वायुनोत्थापितं च सप्तपर्णरजः उत्तरीयमिव प्रावृट्वतीः- स्वच्छविकसितवाणवृक्षं चक्षुरिव दधतीः, पुष्पैः सहासा इव वनराजियोषित। (अपदिश्य धावताम्)।

समासः—अनिलोद्धतम्—अनिलेन उद्धतम् (तृ० तत्पु०)। सप्तपला- शजम्—सप्तपलाशानि पर्वसु येषां ते (बहुव्रीहिः)। अनाविलोन्मीलितवाण- चक्षुषः—न आविलानि (नञ्०) बाणानि चक्षूंषि इव उपमान०) अनाविलानि, उन्मीलितानि बाणचक्षूंषि यासां ताः (बहुव्रीहिः)। सपुष्पहासाः—पुष्पाणि हासा इव उपमान०), पुष्पहासैः सहिताः (तुल्ययोगबहुव्रीहिः)। वनराजियो- षितः—वनराजयः योषितः इव ताः (उपमानकर्मधारयः)।

कोशः 'सप्तपर्णो विशालत्वक् शारदो विषमच्छदः' 'संव्यानमुत्तरीयञ्च'। 'नीली झिण्टी द्वयोर्बाणा', 'लेखास्तु राजयः'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—सप्तपलाशजम्—सप्तपलाशानां विकाराः, सप्तपलाशानि अत्र तस्य विकारः' इति अण् प्रत्ययः, 'फलेलुक्' इति अण् प्रत्ययलोपः। सप्त- पलाशेषु जातं तत् 'सप्तम्यां जनेर्डः'। इति डः। सप्तपलाश+जनी+ड+सु+ अम्।

पदार्थ—विपाण्डु=अत्यन्त सफेद। अनिलोद्धतम्=वायुसे उड़ाये हुए। सप्तपलाशजं रजः=सप्तपर्ण (छितौना) के पत्तोंके परागको। संव्यानम् इव= ओढ़नी की तरह। निरुन्धतीः=ओढ़ी हुई। अनाविलोन्मीलितवाणचक्षुषः= (अनाविल=) स्वच्छ (उन्मीलित=) विकसित (वाणचक्षुषः=) कटसरैया

९ कि० ८०

ही है चक्षु जिनका ऐसी। सपुष्पहासाः=फूलरूप मुसकानवाली। वनरा षितः= वनपंक्तिरूप स्त्रियोंको (उद्देश्य करके दौड़ते हुए)।

भाषार्थ—श्वेतवर्णके तथा वायुसे उड़ाए सप्तवर्णं वृक्षके परागको ओ की तरह ओढ़ी हुई, स्वच्छ और खिले हुए वाणवृक्ष ही जिनके नेत्र बं रहे हैं ऐसी, और खिले हुए फूलोंसे हंसती हुई सी, वनपंक्तिरूप स्त्रि (लक्ष्य करके दौड़ते हुए—)।

अभिप्राय—सप्तपर्ण—यह एक वृक्ष होता है जिसके प्रत्येक पत्तेमें सात दल होते हैं और पत्तोंके बाहर अत्यन्त सफेद तथा सुगन्धित धूल रहती है। यह स्पष्ट ही रूपक अलंकार हैं जिसमें वनराजिपर स्त्री आरोप किया गया है। जैसे कोई स्त्री ओढ़नी ओढ़े अपनी नीली आँखें काती तथा मुसकाती हुई चलती है और कामुक व्यक्ति उसके स्तनों अंचल हटा देता है तो वह पुनः उसे ढांप लेती है। इसी प्रकार वनरा सप्तपर्णके हवासे उड़ाए हुए श्वेत परागसे ढके गई है जैसे, वही उसका है। वायु उसे उड़ा दे रहा है तो वह पुनः उससे ढक जा रही है। बाण (कट रैया) के नीले-नीले फूलोंवाले वृक्ष ही उस (वनराजि) की आँखें हैं सर्वत्र खिले हुए फूल ही उसकी मुस्कान हैं। [उसे लक्ष्य करके दौड़ते आदि ३० वें श्लोक से अन्वय हैं] ॥ २८ ॥

अदीपितं वैद्युतजातवेदसा सिताम्बुदच्छेदतिरोहिताऽऽतपम्।
तताऽन्तरं साऽन्तवारिसीकरैः शिवं नभोवर्त्म सरोजवायुभिः ॥२

अन्वयः—वैद्युतजातवेदसा अदीपितं सिताऽम्बुजच्छेदतिरोहिताऽऽतपं सा रवारिसीकरैः तताऽन्तरं सरोजवायुभिः शिवं नभोवर्त्म (अपदिश्य धावता दिभिः ३० तमश्लोकेन सम्बन्धः)।

व्याख्या—वैद्युतजातवेदसा विद्युदग्निना, अदीपितं अप्रकाशितं, सिता दच्छेदतिरोहिताऽऽतपं शुभ्रघनसकलाऽऽवृतप्रकाशं सान्तरवारिसीकरैः विरल विन्दुभिः तताऽन्तरं व्याप्तमध्यं, सरोजवायुभिः कमलपवनैः शिवं कल्याणं वर्त्म गगनमार्गम् (अपदिश्य धावतामित्यादिभिः ३० तमश्लोकेन सम्बन्धः) स्वभावोक्त्यलङ्कारः।

भावार्थः—दृष्टिविघातकेन विद्युदग्निना रहितं, श्वेताम्बुदशकलैर्वारितातपं, जललवयुतैः कमलवायुभिपूरितं रम्यं नभोवर्त्म चापदिश्य धावताम् :

समासः—वैद्युतजातवेदसा—वैद्युतः च असौ जातवेदाः वैद्युतजातवेदाः तेन (कर्मधारयः)। सिताऽम्बुदच्छेदतिरोहितातपम्—सिताः च ते अम्बुदाः (कर्मधारयः) तेषां छेदाः (ष. तत्पु.), तिरोहितः आतपः यस्मिन् तत् (बहुव्रीहिः) सिताऽम्बुजच्छेदैः तिरोहिताऽऽतपं तत्। (तृ० तत्पु०)। सान्तरवारिसीकरैः—अन्तरेण सहिताः (तुल्ययोगबहु:०) वारीणां सीकराः (ष० तत्पु०), साऽन्तराः च ते वारिसीकराः तैः (कर्मधारयः)। तताऽन्तरम्—ततम् अन्तरं यस्य तत् (बहुव्रीहिः)। सरोजवायुभिः—सरोजानां वायवः तैः (ष० तत्पु०) नभोवर्त्म—नभसः वर्त्म: तत् (ष. तत्पु.)।

कोशः—'जातवेदा तनूपात्'। 'अपिधानतिरोधानपिधानाच्छादनानि च'। प्रकाशोद्योत आतपः,। 'शीकरोऽम्बुकणाः स्मृताः'। श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्। नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम्'। 'अयन वर्त्म मार्गाऽध्वपन्थानं पदवी सृतिः'। सर्वत्राऽप्यमरः कोशः।

व्याकरणम्—वैद्युतः—विद्युत भवः, विद्युत्+अण्+सु। 'तत्र भवः'। इति अण्, आदिवृद्धिश्च। अम्बुदाः—अम्बूनि ददति इति, अम्बु + दा + क+जस्। सरोजम्-सरसि जातम्, 'सप्तम्यां जनेर्डः'। सरस् + जनी + ड + सु + अम्।

पदार्थ—विद्युतजातवेदसा = विद्युत्की अग्निसे। अदीपितम्=अप्रकाशित। सिताम्बुदच्छेदतिरोहितातपम् = श्वेत बादलोंके टुकड़ोंसे ढक गया है आतप जिसमें ऐसे। सान्तरवारिसीकरैः = भीतरमें है जलकण जिसके ऐसे। सरोजवायुभिः=कमलोंकी हवाओंसे। ततान्तरं=व्याप्त है मध्यभाग जिसका ऐसे। शिवं=कल्याणकारक नभोवर्त्म = आकाश रूप मार्गको (अपदिश्य धावताम्= लक्ष्य करके दौड़ते हुए......)।

हिन्दी—आँखोंको चौंधियानेवाले विद्युत् प्रकाशसे रहित, श्वेत बादलोंके टुकड़ोंसे जिसका आतप (धूप) रोका जा रहा है ऐसे, तथा भीतरसे जलकणोंसे आर्द्र, कमलोंकी वायुसे व्याप्त, रमणीय आकाश मार्गमें दौड़ते हुए......।

अभिप्राय—वर्षाकालमें जलसे भरे काले-काले मेघोंमें परस्पर ... विजली उत्पन्न होती है जिसके प्रकाशसे आँखोंमें चकाचौंध हो जाती है। ... शरत्कालमें मेघ तो है पर उनमें पानी नहीं रह गया है अतः वि... चौंधियानेवाले प्रकाशकी आशंका नहीं रह गयी है। स्थान-स्थानपर श्वेत ... निर्जल बादलोंके टुकड़ोंसे धानोंको रोका जा रहा है। आसन्न वर्षा... पर्यन्त वर्षा होनेसे हवाकी नमी गयी नहीं है अतः कमलोंकी जो सुगन्धि ... वह रही है वह आर्द्र भी है। जैसे कोई पथिक किसी मार्गपर चल ... हवासे उड़ती हुई धूल आदिसे उसकी आँखे न मुँद जाती हों, छायासे ... निरापद हो, शीतल, मन्द सुगन्धित हवा उसकी थकान मिटाती हो ... आनन्दसे उस मार्गमें चलता जाता है। ऐसे ही मेघ भी इस रमणीय ... आकाशमार्गको लक्ष्य करके दौड़ रहे हैं। स्वभावोक्ति अलंकार है॥ २९॥

**सितच्छदानामपदिश्य धावतां रुतैरमीषां ग्रथिताः पतत्त्रिणाम्।**
**प्रकुर्वते वारिदरोधनिर्गताः परस्पराऽऽलापमिवाऽमला दिशः॥ ३०॥**

अन्वयः—अपदिश्य धावताम् अमीषां सितच्छदानां पतत्त्रिणां ... ग्रथिताः वारिदरोधनिर्गताः अमलाः दिशः परस्पराऽऽलापं प्रकुर्वते इव।

व्याख्या—अपदिश्य उद्दिश्य, धावतां शीघ्रं गच्छताम्, अमीषां दू... नाम् 'अदसस्तु विप्रकृष्टे'। इति वचनात्। सितच्छदानां शुक्लपक्ष... पतत्त्रिणाम् खगानां, हंसानामित्याऽऽशयः। रुतैः कलरवैः ग्रथिताः ... वारिदरोधनिर्गताः मेघोपरोधनिर्मुक्ताः, अमलाः निर्मला, दिशः आशाः, ... राऽऽलापम् अन्योन्यसंलापम्, प्रकुर्वते इव विदधाति इव। उत्प्रेक्षालङ्कारः।

भावार्थः—पयसः वनराज्या नभोवर्त्मनश्चोद्देशेन धावतामेतेषां श्वेत... हंसानां कूजनैः गुंजिताः मेघोपरोधाद्बहिरागताः प्रसन्ना दिशः परस्परा... प्रकुर्वते।

समासः—सितच्छदानाम्-सितौ छदौ येषां, तेषाम् (बहुव्रीहिः)। वारि... रोधनिर्गताः—वारि ददतीति वारिदाः (उपपद), वारिदैः रोधः (तृ. तत्पु.) तस्मात् निर्गताः (पं. तत्पु.)। परस्पराऽऽलापम्—परस्परासु आलापः

कोशः—'गरुत् पक्षच्छदाः पत्त्रम्'। 'हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः'। 'तिरश्चां वाशितं रुतम्'। ग्रथितं गुम्फितं दृब्धम्'। सर्वत्राप्यमरः। कोशः।

व्याकरणम्—धावताम्—धाव्+शतृ+आम्। पतत्त्रिणाम्—पतत्रे स्तः येषां ते, तेषाम्। पतत्त्र+इनि+आम्। वारिदः—वारि+दा+क+सु। रोधः—रुधिर्+घञ्+सु।

पदार्थः—(पूर्वोक्त ३० श्लोकमें वर्णित, वनराजि और नभोवर्त्म का) अपदिश्य=उद्देश्य करके। धावतां=दौड़ते हुए। अमीषां=इन सितच्छदानां=श्वेत पंखोंवाले (हंस)। पतत्त्रिणां=पक्षियोंके। रुतैः=कूजनोंसे। ग्रथिताः=गुञ्जित। वारिदरोधनिर्गताः=मेघोंके प्रतिबन्धसे मुक्त हुई। (अतएव) अमलाः=निर्मल, प्रसन्न। दिशः=दिशाएँ। परस्परालापम् इव=एक दूसरीसे बात सी। प्रकुर्वते=कर रही है।

हिन्दी—धानके खेतमें भरे रंग-विरंगे जल, सप्तपर्णकी सुगन्धित धूलिसे ढकी वनराजि और रमणीय आकाशमार्गको उद्देश्य करके दौड़ते हुए, सफेद पंखोंवाले हंसोंके, कलरवसे गूँजती हुई दिशाएँ मानों मेघके प्रतिबन्धसे मुक्त होकर परस्पर वार्तालाप कर रही है।

अभिप्राय—किसी एक ही व्यक्तिके चंगुलमें फँसी हुई स्त्रियाँ जैसे उससे मुक्त होकर परस्पर तत्सम्बन्धी आपबीती एक दूसरेको सुनाती, इसी प्रकार मानों मेघोंके चंगुलसे मुक्त हुई दिशाएँ भी परस्पर जैसे बात कर रही हैं। चूँकि दिशाएँ बोल नहीं सकतीं अतः धानके खेतोंमें भरे बहुरंगी जल, खिले फूलोंसे हँसती हुई व सप्तपर्णकी धूलिसे ढकी वनराजि तथा रमणीय आकाश-मार्गको उद्देश्य करके दिशाओंके एक छोर से दूसरे छोर तक दौड़ते हुए हंसोंका कलरव ही जैसे दिशाओंकी वाणी है ॥ ३० ॥

विहारभूमेरभिघोषमुत्सुकाः शरीरजेभ्यश्च्युतयूथपङ्क्तयः।
असक्तमूधांसि पयः क्षरन्त्यमूरुपायनानीव नयन्ति धेनवः ॥ ३१ ॥

अन्वयः—विहारभूमेः अभिघोषम् उत्सुकाः च्युतयूथपङ्क्तयः अमूः धेनवः असक्तं पयः क्षरन्ति ऊधांसि शरीरजेभ्यः उपायनानि इव नयन्ति।

व्याख्या—विहारभूमेः क्रीडाभुवः, अभिघोषम् आभीरपल्ल्याम्, गोष्ठे इति भावः। उत्सुकाः उत्कण्ठिताः, वत्सस्नेहादित्याऽऽशयः। च्युतयूथपङ्क्तयः त्रुटितकुलश्रेणीबन्धाः, अमूः एताः, धेनवः गावः असक्तम् अप्रतिबन्धम्, पयः दुग्धं क्षरन्ति स्रवन्ति वत्सस्मरणादिति भावः। ऊधांसि आपीनानि, शरीरजेभ्यः वत्सेभ्यः, उपायनानि इव उपहारान् इव, नयन्ति प्रापयन्ति। पद्येऽस्मिन् धेनुषु मातृव्यवहारसमारोपात् समासोक्तिरलङ्कारः, उत्प्रेक्षाऽलङ्कारः च उभयोः संसृष्टिः।

भावार्थः—चरणस्थानात् गोष्ठं प्रतिनिवर्तनायोत्कण्ठिताः विकीर्णयूथपङ्क्तयोऽमूर्धेनवः निरन्तरं पयः क्षरन्ति ऊधांसि च अर्भकेभ्य उपायनानीव प्रापयन्ति।

समासः—विहारभूमेः—विहारस्य भूमिः तस्याः (ष० तत्पु०)। अभिघोषम्—घोषे इति, विभक्त्यर्थेऽव्ययीभावः। च्युतयूथपङ्क्तयः—यूथानां पङ्क्तिः (ष० तत्पु०), च्युताः यूथपंक्तिः यासां ताः (बहुव्रीहिः)।

कोशः—'घोष आभीरपल्ली स्यात्'। 'सजातीयैः कुलं यूथम्'। 'पयः क्षीरं पयोऽम्बु च'। 'ऊधस्तु क्लीबमापीनम्'। 'उपायनमुपग्राह्यमुपहारस्तथोपदा'। सर्वत्रऽप्यमरः कोशः।

व्याकरणम्—उत्सुकाः—उत्सुवति, षू प्रेरणे धातोः, डु प्रत्ययः। क्षरन्ति—क्षर+शतृ+नुम्+जस्। शरीरजेभ्यः—शरीरात् जाताः तेभ्यः, 'पञ्चम्यामजातौ' इति ड प्रत्ययः। नयन्ति—णीञ्+लट्+झि।

पदार्थ—विहारभूमेः=चरनेके स्थानसे। अभिघोषम्=घोष (ब्रज—अहीरों के निवास) की ओर। उत्सुकाः=उत्कण्ठित। च्युतयूथपंक्तयः=बिखर गई झुण्डोंकी श्रेणियाँ जिनकी, ऐसी। अमू धेनवः = ये गायें। असक्तं=निरन्तर पयः=दूधको। क्षरन्ति = चुआ रही है। ऊधांसि=ऊधसोंको। शरीरजेभ्यः=अपने शरीरसे उत्पन्न (बछड़ों) के लिए। उपायनानि इव=भेंट जैसे। नयन्ति=ला रही हैं।

हिन्दी—गोचर भूमिसे अपने गोठोंमें आनेको उत्कण्ठित हुई तथा अपने समूहोंसे पृथक् हुई ये गायें लगातार दूध चुआ रही हैं और अपने ऊधसोंको बच्चोंके लिए उपहार जैसा सौंप रही है।

विशेषः –रात के पिछले पहरमें ही दूध दुहकर गायोंको वनके लिये छोड़ दिया जाता था अतः सायंकाल उनका बछड़ोंके मोहमें घर आनेके लिए उत्कण्ठित होना स्वाभाविक है। वनसे तो वे झुण्डोंमें एक साथ आईं किन्तु गाँवमें आकर अपने अपने घरोंको जाते समय उनके वे झुण्ड बिखर गए। यह प्रकृतिका नियम है कि जब बच्चोंको भूख लगती है तो माताके स्तनोंसे दूध बहने लगता है। इन बछड़ोंको भी प्रातःकालसे ही माताओंसे बिछुड़े रहनेसे भूख सता रही है अतः गायोंके स्तनोंसे दूधकी धार निकल रही है। जब माताएं कहीं बाहरसे आती हैं तो बच्चोंके लिए कुछ उपहार ले आती हैं। यहाँ गायें मानों अपने ऊधस् रूप उपहार ही बच्चोंको सौंप रही हैं। यहाँपर स्वभावोक्ति तो है ही "उपायनानि इव" यह उत्प्रेक्षा भी है॥ ३१॥

जगत्प्रसूतिर्जगदेकपावनी व्रजोपकण्ठं तनयैरुपेयुषी।
द्युतिं समग्रां समितिर्गवामसौ उपैति मन्त्रैरिव संहिताहुतिः॥३२॥

अन्वयः—जगत्प्रसूतिः जगदेकपावनी व्रजोपकण्ठं तनयैः उपेयुषी असौ गवां समितिः मन्त्रैः संहिता आहुतिः इव समग्रां द्युतिम् उपैति।

व्याख्या—जगत्प्रसूतिः संसारकारणं, आज्यादिहविर्द्वारेणेत्याऽऽशयः। जगदेकपावनी संसारमुख्यशोधनी, व्रजोपकण्ठं गोष्ठान्तिकं, तनयैः वत्सैरिति-यावत्, उपेयुषी सङ्गता, असौ एषा, गवां धेनूनां, समितिः संहति, मन्त्रैः वेदमन्त्रादिभिः, संहिता संयोजिता, आहुतिः इव हविःप्रक्षेप इव, समग्रां सम्पूर्णां, द्युतिं कान्तिम्, उपैति प्राप्नोति। आहुतिरपि जगत्प्रसूतिः जगदेक-पावनी च भवति। यथाह मनुना:—अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः। मनुस्मृतौ–३।७६ इति। उपमा-लङ्कारः।

भावार्थः—यथा मन्त्रैर्योजिता आहुतिः दीप्तिमुपैति तथैव जगन्माता जगतामद्वितीया शोधिका, गोष्ठसमीपे स्वस्वार्भकैः संगता इयं गोसमितिरपि पूर्णां शोभां प्राप्नोति।

समासः—जगत्प्रसूतिः–जगतां प्रसूतिः (ष० तत्पु०)। जगदेकपावनी–एका च असौ पावनी (कर्मधारयः) जगताम् एक पावनी (ष० तत्पु०)। व्रजोपकण्ठम्–व्रजस्य उपकण्ठः तम् (ष० तत्पु०)।

कोशः—'एके मुख्यान्यकेवलाः'। 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्'। 'शोभाकान्तिद्युतिश्छविः' इत्यमरः। 'मन्त्रो ऋगादिगुह्योक्ति' इति वैजयन्ती।

व्याकरणम्—व्रजोपकण्ठम्—'दूरान्तिकार्थेभ्यो द्वितीया च'। द्वितीया। 'उपेयुषी—उप+इण्+क्वसु+ङीप्। 'उपेयिवाननाश्वाननूचानश्च' इति निपातनात् क्वसु प्रत्ययः, 'उगितश्च'। इति ङीप् प्रत्ययः।

पदार्थ—जगत्प्रसूतिः=संसारकी माता। जगदेकपावनी=संसारमें पवित्र करनेवाली। व्रजोपकण्ठं=गोठोंके समीप। तनयैः=पुत्रों (बछड़ों) उपेयुषी=मिलती हुई। असौ=यह। गवां समितिः=गायोंकी समिति (मन्त्रैः=मन्त्रोंसे। संहिता=योजित। आहुतिः इव=आहुतिकी तरह। सम्पूर्ण। द्युतिम्=कान्तिको। उपैति=प्राप्त होती है।

हिन्दी—संसारकी उत्पत्तिमें कारणभूत और सब प्रकारसे उसे पवित्र करनेवाला गोष्ठोंके पास अपने अपने बछड़ोंसे मिलता हुआ यह गायोंका मन्त्रोंसे प्रयुक्त आहुतिकी तरह सम्पूर्ण शोभाको प्राप्त करता है।

अभिप्राय जगत्प्रसूतिः—अग्निमें मंत्रपूर्वक दी हुई आहुति सूर्यके पास जाती है, सूर्य वर्षा करता है, वर्षासे अन्न होता है और प्रजायें उत्पन्न होती हैं। वह आहुतिका साधन घृतादि गायोंसे मिलता इसलिए, गायें और आहुति दोनों जगत्की उत्पत्तिमें कारण हैं। जगदेकपावनी—गायका निर्माण परमात्माने जिन परमाणुओंसे किया है वे अधिक शुद्ध हैं, इसलिए उसके अन्दर अद्भुत शोधक शक्ति है। यही कारण कि हिन्दू संस्कृतिमें उसे अत्यन्त महत्त्वपूर्ण स्थान दिया जाता है। उसके दही, घी यहाँ तककि गोमय तथा गोमूत्रको भी अमृत कहा जाता है। विलक्षण रोगादि नाशक शक्ति प्रत्यक्ष देखी जाती है। किसी भी पापका प्रायश्चित्त गोदानके बिना हो नहीं सकता। मरनेके बाद भी परलोकमें वैतरणी पार करनेवाली गाय ही मानी जाती है। उसके अंग-अंगमें देवताओंका निवास माना गया है। इस प्रकार वह सबसे अधिक पवित्र करनेवाली कही है॥ ३२॥

कृताऽवधानं जितबर्हिणध्वनौ सुरक्तगोपीजनगीतनिःस्वने ।
इदं जिघत्सामपहाय भूयसीं न सस्यमभ्येति मृगीकदम्बकम् ॥३३॥

अन्वयः—जितबर्हिणध्वनौ सुरक्तगोपीजनगीतनिःस्वने कृताऽवधानम् इदं मृगीकदम्बकं भूयसीं जिघत्साम् अपहाय सस्यं न अभ्येति ॥ ३३ ॥

व्याख्या—जितबर्हिणध्वनौ केकानुकारिणीरवे। यथाऽऽह मातङ्गः—'षड्जं मयूरो वदति'। अनेन षड्जस्वरे गोपीनामेकाधिपत्यं व्यज्यते। सुरक्तगोपीजनगीतनिःस्वने गानाऽनुरक्तवल्लभीजनगीतस्वरे कृताऽवधानं दत्ताधानम् इदं सम्मुखस्थितम्, मृगीकदम्बकं हरिणीवृन्दं, भूयसीम् अत्यधिकां, जिघत्सां भक्षणेच्छाम्, अपहाय विहाय, सस्यं धान्यं तृणादिकं वा, अभ्येति नाऽऽयाति।

भावार्थः—मयूरध्वनिभिरप्युत्कृष्टतरं मधुरकण्ठीभिर्गोपाङ्गनाभिः गीतं गीतरवमाकर्ण्यैतन्मृगीणां यूथमतिक्षुधितमपि शस्यं न गृह्णाति।

समासः—जितबर्हिणस्य—बर्हिणस्य ध्वनिः (ष० तत्पु०)। जितः बर्हिणः ध्वनिः येन सः, तस्मिन् (बहुव्रीहिः)। सुरक्तगोपीजनगीतनिःस्वने—गोपी च असौ जनः (कर्मधारयः) सुरक्तः च असौ गोपीजनः (कर्मधारयः) तस्य गीतं (ष. तत्पु.) तस्य निःस्वनः तस्मिन् (ष. तत्पु.)। कृताऽवधानम्—कृतम् अवधानं येन तत् (बहुव्रीहिः)। मृगीकदम्बकम्—मृगीणां कदम्बकम् (ष० तत्पु०)।

कोशः—'मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक्'। 'अवधानं समाधानं प्रणिधानं तथैव च'। 'स्त्रियां तु संहतिर्वृन्द निकुरम्बं कदम्बकम्'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—गोपी—गाः पातीति गोपः 'आतोऽनुपसर्गे कः'—इति क प्रत्ययः। गोपस्य स्त्री गोपी, गोप+ङीप्। जिघत्साम्—अत्तुम् इच्छा जिघत्सा ताम्। सन्नन्ताद् अद् धातोः 'समाशंसभिक्ष उः'—इति उ प्रत्ययः। 'लुङ्सनोर्घस्लृ'—इति अदः स्थाने घस्लृ-आदेशः।

पदार्थ—जितबर्हिणध्वनौ=जीत लिया है मोरोंकी केकाको जिसने, ऐसे। सुरक्तगोपीजनगीतनिस्वने=(सुरक्त=) मधुरकण्ठवाली ग्वालिनोंकी गीत-ध्वनि। कृतावधानम्=दत्तचित्त हुआ। इदं मृगीदकम्बकम्=यह मृगियोंका समूह। भूयसीं=अत्यन्त। जिघत्साम्-खानेकी इच्छा (भूख) को भी। अपहाय=छोड़कर। शस्यं घासको। न अभ्येति=नहीं लेता।

हिन्दी—मोरोंकी ध्वनिसे भी उत्कृष्ट; कलकण्ठी गोपाङ्गनाओं द्वारा गाये गये गीतों में ध्यान लगायी हुई मृगियोंका समूह, अत्यन्त भूखी होने पर भी घासको नहीं खा रहा है।

अभिप्राय—मृगोंका संगीत-प्रेम प्रसिद्ध है, "कुरङ्ग-मातङ्ग-पतङ्ग-भृङ्ग-मीना हताः पञ्चभिरेव पञ्च" यह भागवतकारका कथन भी इसे पुष्ट करता है ॥३३॥

असावनास्थापरयाऽवधीरितः सरोरुहिण्या शिरसा नमन्नपि।
उपैति शुष्यन् कलमः सहाम्भसा मनोभुवा तप्त इवाऽभिपाण्डुताम् ॥

अन्वयः—शिरसा नमन् अपि अनास्थापरया सरोरुहिण्या अवधीरितः अम्भसा सह शुष्यन् असौ कलमः मनोभुवा तप्तः इव अभिपाण्डुताम् उपैति।

व्याख्या—शिरसा मूर्ध्ना, अग्रभागेण, नमन् अपि प्रणमन्नपि, अनास्थापरया अनादरपरया, सरोरुहिण्या कमलिन्या, अवधीरितः अवज्ञातः, अम्भसा सह नीरेण सार्धं, शुष्यन् शोषं लभमानः, असौ अयं कलमः शालिविशेषः, मनोभुवा मनसिजेन तप्तः इव सन्तप्तः इव, कामपीडितः इति भावः। अभिपाण्डुतां समन्तात् पीताऽऽभताम्, उपैति प्राप्नोति। अत्र समासोक्त्यलङ्कारस्य उत्प्रेक्षालङ्कारेण सह अङ्गाङ्गिभावसङ्करः।

भावार्थः—यथा शिरसा प्रणमन्नपि कामुको नायकः कठिनहृदयया नायिकया तिरस्कृतः सन् मित्रैः सह क्षीणो भूत्वा म्लानतया पाण्डुतामुपैति तथैव नमिताग्रभागमपि शालिधान्यं नलिन्या तिरस्कृतमिव जलेन सह शुष्यन् धूसरतां गच्छति।

समासः—अनास्थापरया—न आस्था (नञ्०); अनास्थायां परा तया (स० तत्पु०)। सरोरुहिण्या—सरोरुहाणि सन्ति यस्यां सा तया (बहुव्रीहिः)।

कोशः—'उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्'। 'आस्थानीयत्नयोरास्था'। उभयत्राऽप्यमरः। 'आस्था त्वालम्बनास्थानयत्नापेक्षासु योषिति'। इति मेदिनी। 'अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम्'। 'शालयः कलमाद्याश्च'। 'इच्छामनोभवो कामो'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—नमन्—णम्+शतृ । सरोरुहिण्या–सरोरुह+इनि+ङीप्+टा । अम्भसा सह–'सहयुक्तेऽप्रधाने'–इति सहयोगे तृतीया ।

पदार्थ—शिरसा=शिरसे (धान्यके पक्षमें-अग्रभागसे, नमन् अपि=प्रणाम करता हुआ ( झुकता हुआ ) । अनास्थापरया=अनादरवाली । सरोरुहिण्या=कमलिनीसे । अवधीरितः=तिरस्कृत । अम्भसा सह=जलके साथ । शुष्यन्=सूखता हुआ । असौ कलमः=यह धानका पौधा । मनोभुवा=कामसे । तप्त=सताया हुआ सा । विपाण्डुताम्=अत्यन्त पीलेपनको । उपैति=प्राप्त हो रहा है ।

हिन्दी—जैसे शिर झुकाकर क्षमा माँगता हुआ भी कामुक नायक कठोरहृदया नायिकासे तिरस्कृत होने पर मित्रों सहित फीका पड़ जाता है ऐसे ही झुकी वालोंवाले धान मानो कमलिनीसे तिरस्कृत होकर जलके साथ सूखते हुए पीले पड़ते जा रहे हैं ।

विशेष—पकनेपर धानकी बालें नीचे की ओर झुक जाती हैं और उनका रंग पीला पड़ जाता है । धान के सम्बन्ध में ये दोनों ही 'स्वभावोक्ति' हैं ।

अमी समुद्धूतसरोजरेणुना हृता हृताऽऽसारकणेन वायुना ।
उपागमे दुश्चरिता इवाऽऽपदां गतिं न निश्चेतुमलं शिलीमुखाः ॥३५॥

अन्वयः—समुद्धूतसरोजरेणुना हृताऽऽसारकणेन वायुना हृता अमी शिलीमुखाः आपदाम् उपागमे दुश्चरिताः इव गतिं निश्चेतुं न अलम् ।

व्याख्या—समुद्धूतसरोजरेणुना समुद्धतकमलपरागेण, हृताऽऽसारकणेन आगृहीतजलविन्दुना, इति शैत्योक्तिः । वायुना पवनेन, हृताः आकृष्टाः, अमी एते, शिलीमुखाः भ्रमराः, आपदां विपत्तीनाम्, उपागमे सम्प्राप्ते नृपाऽऽदिभयप्राप्ते आशयः । दुश्चरिताः इव, दुराचारिणः इव चौरादय इवेति भावः । गतिं स्वव्यस्थानं, निश्चेतुं निर्णेतुं, न अलं न समर्थाः उपमाऽलङ्कारः ।

भावार्थः—पङ्कजपरागमुत्थापयता, वर्षाकणयुतेन वायुवेगेन इतस्ततः आहिण्ड्यमाना एते भ्रमराः तथैव स्वां गतिं निश्चेतुं न शक्नुवन्ति यथा दुष्कर्माणः पुरुषा आपदागमे सति क्व गन्तव्यमिति न निश्चिन्वन्ति ।

समासः—समुद्धूतरजोरेणुना–सरोजानां रेणवः (ष० तत्पु०) समुद्धूताः सरोजरेणवः येन सः तेन ( बहुव्रीहिः )। हृताऽऽसारकणेन–आसारस्य कणः

( ष० तत्पु० ), हृतः आसारकणः येन तेन ( बहुव्रीहिः ) । दुश्चरितः-दु
येषां ते ( बहुव्रीहिः ) ।

कोशः—'रेणुर्द्वयो स्त्रियां धूलिः पांशुर्ना न द्वयो रजः' । 'धारा सम्पा
आसारः' । 'अलिबाणौ शिलीमुखौ' । सर्वत्राऽप्यमरकोशः । 'देशोपाय
गतिः' । इति वैजयन्ती ।

व्याकरणम्—गतिम्–गम्यते इति, ताम् । 'स्त्रियां क्तिन्' इति क्ति
प्रत्ययः । गम्+क्तिन्+अम् । निश्चेतुम्–निस् + चिञ् + तुमुन् । 'समानकर्तृके
तुमुन्'–इति तुमुन् प्रत्ययः । हृताः–हृञ्+क्तः+जस् ।

पदार्थः—समुद्धूतसरोजरेणुना=उड़ाया है कमलोंका पराग जिससे ऐसे
(तथा) हृतासारकणेन=लिए हैं वर्षाके कण जिसने ऐसे । वायुना=वायुसे
हृता = उड़ाए हुए । अमी शिलीमुखाः = ये भौंरे । आपदाम् = आपत्तियोंके
उपागमे=प्राप्त होनेपर । दुश्चरित इव = कुकर्मी पुरुषोंकी तरह । गतिं=
गमनको । निश्चेतुं=निश्चय करनेमें । न अलम् = नहीं समर्थ होते ।

हिन्दी—उड़ाये हुए कमल परागसे युक्त तथा वर्षाके कण जिसने हर लि
हैं ऐसे वायु के झोकोंसे प्रताड़ित ये भौंरे अपनी गतिको उसी प्रकार निश्चि
नहीं कर पाते जैसे दुष्कर्मी व्यक्ति आपत्ति आनेपर कहाँ जायँ, क्या करें,
नहीं तय कर पाते ।

अभिप्राय—कमल परागको उड़ानेसे वायुका सुगन्धियुक्त होना
उसके भारसे मन्द होना, और वर्षाकणों का अपहरण करनेसे शीतल होन
व्यक्त होता है । इस प्रकार शीतल, मन्द और सुगन्धित वायुके झोकोंसे भौं
एक स्थान पर बैठ नहीं पा रहे हैं । उनकी स्थिति उन लम्पटोंकी तरह हो
हैं जो दुष्कर्म तो करते हैं पर आपत्ति आनेपर घबड़ाकर इधर-उधर भटक
हैं । कहाँ जायँ, क्या करें, यह निश्चित नहीं कर पाते ॥ ३५ ॥

**मुखैरसौ विद्रुमभङ्गलोहितैः शिखाः पिशङ्गीः कमलस्य बिभ्रती ।**
**शुकाऽऽवलिर्व्यक्तशिरीषकोमला धनुःश्रियं गोत्रभिदोऽनुगच्छति ॥३६**

अन्वयः—विद्रुमभङ्गलोहितैः मुखैः पिशङ्गीः कमलस्य शिखाः बिभ्रती
व्यक्तशिरीषकोमला असौ शुकाऽऽवलिः गोत्रभिदः धनुः श्रियम् अनुगच्छति ।

व्याख्या—विद्रुमभङ्गलोहितैः प्रवालखण्डरक्तैः, मुखैः अदनैः पिशङ्गीः पीताभाः, कलमस्य उत्खातप्रतिरोपितशालिविशेषस्य, शिखाः अग्रभागान्, बिभ्रती सन्दधती, व्यक्तशिरीषकोमला विकसितशिरीषकुसुममृदुला, शिरीषपुष्पमार्दवं सुप्रसिद्धं, यथाऽऽह कालिदासः—अभिज्ञानशाकुन्तले—'शिरीषपुष्पाधिकसौकुमार्यम्'। असौ एषा, शुकाऽऽवलिः कीरपङ्क्तिः, गोत्रभिदः इन्द्रस्य, धनुःश्रियं कार्मुकशोभाम्, अनुगच्छति अनुकरोति। नानावर्णत्वादिन्द्रधनुरिवाऽऽभातीति। उपमाऽलङ्कारः।

भावार्थः—प्रवालखण्डैरिवातिरक्तैः चञ्चुभिः पिङ्गलवर्णाः शालिशिखाः धारयन्ती स्वयं च शिरीष इव हरिद्वर्णा इयं शुकपङ्क्तिः व्यक्तमेव बहुरङ्गतयेन्द्रधनुरिव विभाति।

समासः—विद्रुमभङ्गलोहितैः—विद्रुमाणां भङ्गाः (ष० तत्पु०) ते इव लोहितानि तैः (उपमानकर्म०)। व्यक्तशिरीषकोमला—व्यक्तं च तत् शिरीष (कर्मधारयः)। तत् इव कोमला (उपमानकर्म०)। शुकावलिः—शुकानाम् आवलिः (ष० तत्पु०)। गोत्रभिदः—गोत्रान् भिनत्तीति तस्य (उपपद०)। धनुःश्रियम्—धनुषः श्रीः (ष० तत्पु०)।

कोशः—'पिशङ्गस्त्वसितावेशात् पिङ्गो दीपशिखादिषु। पिङ्गल तु परच्छायः पिङ्गः शुक्लाङ्गखण्डवत्'। इति शब्दार्णवः। 'कीरशुकौ समौ'। 'सुत्रामा गोत्रभिद् वज्री वासवो वृत्रहा वृषा'। 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—गोत्रभिदः गां (पृथिवीं) त्रायन्ते इति गोत्राः। 'आतोऽनुपसर्गे कः'—इति कः। गोत्र+भिद्+क्विप्+ङस्।

पदार्थ—विद्रुमभङ्गलोहितैः=प्रवालके टुकड़ों की तरह लाल वर्णवाले। मुखैः=मुखों से। पिशङ्गीः=पीली। कमलस्य शिखाः=धनकी बालोंको। बिभ्रती=धारण करती हुई। व्यक्तशिरीषकोमला=खिले हुए शिरीष पुष्पके समान कोमल। असौ शुकावलिः=यह शुकोंकी पंक्ति। गोत्रभिदः=इन्द्रके। धनुःश्रियं=धणुष की शोभाको। अनुगच्छति=प्राप्त होती है।

हिन्दी—मूँगोंके टुकड़ों की तरह लाल-लाल चोचोंमें पीली धान बालियोंको ली हुई और स्वयं शिरीषके समान कोमल हरे वर्णकी यह शुकों पंक्ति प्रत्यक्ष ही इन्द्रधनुषकी शोभाको धारण कर रही है।

अभिप्राय:—मुख्य रंग तीन ही है, लाल, पीला और हरा। शेष रंगो निर्माण इनके परस्पर विभिन्न मात्रामें संमिश्रणसे ही होता है। इन्द्रधनु बहुरंगी होता है ऐसे ही शुकपक्ति लाल चोंचमें पीली धानकी बालियों हरी शरीर-क्रान्तिके समिश्रणसे बनते हुए बहुरंगी इंद्र धनुष जैसी ही लग है। उपमा अलंकार है ॥ ३६ ॥

इति कथयति तत्र नाऽतिदूरा—
दथ ददृशे पिहितोष्णरश्मिबिम्बः।
विगलितजलभारशुक्लभासां
निचय इवाम्बुमुचां नगाधिराजः ॥ ३७ ॥

अन्वय:—तत्र इति कथयति नाऽतिदूरात् पिहितोष्णरश्मिबिम्बः नगा राजः विगलितजलभारशुक्लभासाम् अम्बुमुचां निचय इव ददृशे।

व्याख्या—तत्र तस्मिन् कुवेराऽचरे यक्षे, इति इत्थं, कथयति भाषम सति, नाऽतिदूरात् ईषद्दूरादित्यर्थः। पिहितोष्णरश्मिबिम्बः आच्छादित मण्डलः, नगाधिराजः गिरिजः विगलितजलभारशुक्लभासाम् अपगततो ज्ज्वलशोभाम्, अम्बुमुचां जलधराणाम् निचयः इव समूहः इव, ददृशे वि कितः। पुष्पिताग्रावृत्तम्। लल्लक्षण यथा—'अयुजि नयुगरेफतो यकारो, यु नगौ जरगाश्च पुष्पिताग्रा'। उपमाऽलङ्कारः।

भावार्थ:—यक्षे एवं कथयत्येव समीपे मार्तण्डमण्डलं तिरोदधानः प राजो हिमालयः वर्षतोविरतं जलस्त्रणात् श्वेतत्वं गतानां मेघानां निचय दृष्टिपथमागतः।

समासः—नातिदूरात्—न अतिदूरं तस्मात् 'सुप्सुपा' इति समा विहितोष्णरश्मिविम्वः—उष्णाः रश्मयः यस्य तत् ( बहुव्रीहीः ) पिहितम् उ रश्मिबिम्बं येन सः ( बहुव्रीहीः )। नगाऽधिराजः—न गच्छन्तीति नगाः (

पद० ) अधिकः राजा अधिराजः 'कुगतिप्रादयः'—इति समासः। विगलितजल भारशुक्लभासाम्जलस्य भारः ( ष० तत्पु० ) विगलितः जलभारः येषां ते (वहुव्रीहिः) शुक्ला भाः येषां ते ( वहुव्रीहिः) विगलितजलभाराः च ते शुक्ल-भासः तेषाम् ( कर्मधारयः )। अम्बुमुचाम्—अम्बु मुञ्चन्ति इति तेषाम् ( उपपद० )।

कोशः—'किरणोऽस्रमयूखांशुगभस्तिघृणिरश्मयः'। 'त्विड्भा भाश्छविद्युतिदीप्तः'। 'शैलवृक्षौ नगावगौ'। घनजीमूतमुदिरजलमुग्धूमयोनयः'। 'न वा यथा तथैवैवम्' सर्वत्राऽप्यमरकोशः।

व्याकरणम्—तत्र—तस्मिन् इति, 'सप्तम्यास्त्रल्—इति त्रल् प्रत्ययः। कथयति—कथ+शतृ+ङि। पिहितम्—'वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः'—इत्यादिना अलोपः। नगाऽधिराजः—न गच्छन्तीति, 'न गोऽप्राणिष्वन्यतरस्याम्—इति नञः प्रकृतिभावः। अधि+राज्+टच्+सु। 'राजाहः सखिभ्यष्टच्'—इति टच् प्रत्ययः। अम्बुमुचाम्—अम्बु+मुच्+क्विप्+आम्। ददृशे—दृश्+मर्मणि लिट्+त+एत्व।

हिन्दी—तब यक्षके इतना कहनेपर समीपमें ही सूर्यमण्डलको ढकनेवाला पर्वतराज हिमालय ऐसा दीख पड़ा जैसे वर्षामें सम्पूर्ण जल बरसा देनेसे सफेद हुए बादलोंका ढेर लगाया गया हो।

अभिप्राय—पिहितोष्णः०—इस विशेषणसे पर्वतराजका अवनति अभिव्यक्त होती है, अर्थात् वह इतना ऊँचा है कि सूर्यमण्डल उससे ढक जाता है।

विगलित० जबतक बादलोंमें जल था वे साँवले वर्णके थे, वर्षामें जल सब वरस गया अतः वे सफ़ेद हो गये हैं। बरफ़ भी सफेद ही होती है। सफेद बरफ़ से ढका हुआ पहाड़ ऐसा प्रतीत होता है मानों इन्हीं बादलों का ढेर लगा है। यह पुष्पताग्रा छन्द है। इसका लक्षण है—अयुजि नयुगरेफतो नकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ॥ ३७ ॥

तमतनुवनराजिश्यामितोपत्यकान्तं
नगमुपरि हिमानीगौरमासाद्य जिष्णुः।
व्यपगतमदरागस्याऽनुसस्मार लक्ष्मी-
मसितमधरवासो बिभ्रतः सीरपाणेः ॥३८॥

इति महाकविभारविकृतौ किराताऽर्जुनीये महाकाव्ये चतुर्थः सर्गः ॥

अन्वयः—जिष्णु अतनुवनराजिश्यामितोपत्यकान्तम् उपरि हिमानी नगम् आसाद्य व्यपगतमदरागस्य असितम् अधरवासो बिभ्रतः सीरप लक्ष्मीम् अनुसस्मार ।

व्याख्या—जिष्णुः जयशीलोऽर्जुनः, अतनुवनराजिश्यामितोपत्यका अरण्यानीपङ्क्तिश्यामलाऽऽसन्नभूप्रदेशम्, उपरि ऊर्ध्वभागे, हिमानीगौरं हि सघातशुभ्रं, नगं पर्वतम्, आसाद्य प्राप्य, व्यपगतमदरागस्य निवृत्तमदरा असितं नीलम्, अधरवासः अधरीयं, बिभ्रतः दधानस्य, सीरपाणेः बलरा लक्ष्मीं शोभाम्, अनुसस्मार स्मृतवान् । महाकविना भारविणा स्वपरम् निर्वहता ग्रन्थान्तेऽस्मिन् पद्ये 'लक्ष्मीः' शब्दस्य प्रयोगो विहितः । मालिनीवृत्त तल्लक्षणं यथा—'ननमयययुतेयं मालिनी भोगिलोकैः'। मालिनीवृत्तस्य 'सुवृत्ततिलके' क्षेमेन्द्रः—कुर्यात्सर्गस्य पर्यन्ते मालिनीं द्रुत तालवत् । स्म लङ्कारः ।

भावार्थः—अर्जुनः सघनवनश्रेणीभिर्नीलप्रायान् समीपस्थाधःप्रदे उपरि च हिमाच्छादितं शुभ्रं गिरिं मदजनितलालिमारहितस्य नीलाधोव तस्य हलायुधस्य शोभां सस्मार ।

समासः—अतनुवनराजिश्यामितोपत्यकाऽन्तम्—वनानां राजय (ष० तत् अतनवः च ता वनराजयः (कर्मधारयः) ताभिः श्यामिता (तृ० तत्पु०) उ कायाः अन्ताः ( ष० तत्पु० ) अतनुवनराजिश्यामिता उपत्यकान्ता यस्य (बहुव्रीहिः) । हिमानीगौरम्—हिमान्या गौरः तम् (तृ० तत्पु०) । व्यपगत गस्य—व्यपगतः मदरागः यस्य तस्य (बहुव्रीहिः) । अधरवासः—अधरं वासः तत् ( कर्मधारयः ) । सीरपाणेः—सीरं पाणौ यस्य, तस्य ( बहुव्रीहि

व्याकरणम्—उपत्यका—उप+त्यकन्+टाप् । 'उपाधिभ्यां त्यकन्ना ऽऽरूढयोः' इति त्यकन् प्रत्ययः । हिमानी—हिम+आनुक्+ङीप् । सीर —अत्र 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ'—इति सीरशब्दस्य पूर्वप्रयोगः ।

कोशः—'लेखाऽस्तु राजयः' इत्यमरः । 'राजी रेखायां पङ्क्तौ च' हैमः । 'उपत्यकाऽद्रेरासन्ना भूमिरूर्ध्वमधित्यका' । 'हिमानी हिमसंहति 'रेवतीरमणो रामः कामपालो हलाऽऽयुधः' । सर्वत्राप्यमरकोशः ।

इति श्री डॉ० बदरीनारायण पाण्डेय विरचितायां राजविवर्धिनी टीकायां किरातार्जुनीयमहाकाव्यस्य चतुर्थः सर्गः ।

पदार्थ—जिष्णुः=अर्जुनः : अतनुः—घनी । वनराजि=वनपंक्ति ( से ) श्यामति=सांवले (हैं) उपत्यकान्त=समीपवर्ती निचले प्रदेश जिसके ऐसे। हिमानीगौरम्=बरफके समूहसे ( ढका होनेसे ) सफेद। नग=पर्वतको। प्रसाद्य=प्राप्त होकर । व्यपगतमदरागस्य=समाप्त हो गई है मद्यजनित लालिमा जिसकी ऐसे । असितं=नीले । अधरवासो=अधोवस्त्र ( धोती ) को । विभ्रतः =धारण करते हुए । सीरपाणे=हलायुध ( बलदेवजी ) की । लक्ष्मीम्=शोभाकी अनुसस्मार=स्मरण करता था ।

हिन्दी—अर्जुनको, घनी वनपंक्तियोंसे आच्छादित नीले नीले समीपवर्ती निचले प्रदेशों और उनके ऊपर हिमसे ढके सफेद हिमालयके शिखरोंको देखकर नीली धोती पहिने हुए और मदजन्य लालिमा शान्त हो जानेपर शुभ्रवर्णवाले बलदेवजीका स्मरण हो आया ।

अभिप्रायः—उपत्यकानां—पहाड़ों के समीपकी निचली भूमि उपत्यका कहलाती है और ऊँचे प्रदेश अधित्यका ( पठार ) कहलाते हैं। मदरागस्य—बलदेवजी कादम्बिनी नामके एक विशेष प्रकारके मद्य का सेवन करते थे। इनके इस मदाघूर्णनका वर्णन कवियोंने प्रायः किया है यहाँ व्यपगतमदरागस्य का तात्पर्य है कि जिस समय मद्यके नशेमें उनका शरीर तमतमाया रहता है। जब नशा शान्त हो जाता है उस समयके उनके शुभ्रवर्ण जैसे ऊँचे हिमालयके शिखर हैं। समीपवर्ती निचले प्रदेशोंमें घने जङ्गलोंकी नीलिमा उनके नीले वस्त्र जैसी दीखती है। इसलिए अर्जुन को हिमालय देखते ही बलदेवजीका स्मरण हो आता है। यहाँ मल्लिनाथने अधरवास का अर्थ उत्तरीय नहीं किया है जो हमें ठीक नहीं जँचता। क्योंकि अधरवासः अधोवस्त्रका ही पर्याय है। हिमालय गौर ऊँचे शिखरोंसे बलदेवजीके धवल शरीरकी और निचले प्रदेशोंकी श्यामल वनराजिसे उनके अधोवस्त्रकी ही उपमा ठीक बैठती है। हिमालयके दर्शनसे तत्सदृश बलदेवजी का स्मरण हो आनेसे यहां स्मरणालंकार हैं। यह मालिनी छन्द है—" न न म य य युतेयं मालिनी भोगिलोकैः।"

डॉ० कु० रामेश्वरीकुमारी रासेश्वरी कृत राजेश्वरी हिन्दी टीका का चौथा अंक समाप्त ।

卐

# पञ्चमः सर्गः

अथ पञ्चदशभिः पद्यैः हिमालयवर्णनमारभते—

अथ जयाय नु मेरुमहीभृतो रभसया नु दिगन्तदिदृक्षया।
अभिययौ स हिमाचलमुच्छ्रितं समुदितं नु विलङ्घयितुं नभः।

श्रीराधाकृष्णाभ्यां नमः

## राजविवर्द्धिनी संस्कृत टीका

अन्वयः—अथ सः मेरुमहीभृतः जयाय नु? रभसया दिगन्तदिदृक्षया नभः विलङ्घयितुं नु ? समुदितम् उच्छ्रितं हिमाचलम् अभिययौ।

व्याख्या—अथ अनन्तरं, सः अर्जुनः, मेरुमहीभृतः सुमेरोः जय विजयप्राप्त्यर्थं वा, नु शब्दोऽत्र वितर्के। रभसयावेगवत्या, दिगन्तदि नु ककुभान्तदर्शनेच्छया वा, नभः आकाशं, विलङ्घयितुं नु अतिक्रमणाय समुदितं समुत्पादितम् इव स्थितम्, उच्छ्रितम्समुन्नतं, हिमाचलं हिमा अभिययौ अभिजगाम।

द्रुतविलम्बितवृत्तम्। तल्लक्षणं यथा—'द्रुतविलम्बितमाह नभौ भ श्लोकेस्मिन्नुत्प्रेक्षाऽलङ्कारः।

भावार्थः—अनन्तरमर्जुनः तमुन्नतं हिमालयमारुरोह यः सुमेरुपर्व वा अतिवेगवत्या दिक्प्रान्तभागावलोकनेच्छया वा नभो विलङ्घयितुं वा अ स्थितः दृश्यते स्म।

समासः—मेरुमहीभृतः—महीं बिभर्तीति महीभृत् (उपपद०) मेरुः महीभृत् तस्य (कर्मधारयः)। दिगन्तदिदृक्षया—दिशाम् अन्ताः (ष० त तान् द्रष्टुम् इच्छा दिदृक्षा तया। हिमाचलम्—हिमस्य अचलः तम् (ष० त

कोशः—'मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः'। 'नु पृच्छायां वितर्के' उभयत्राऽप्यमरः। 'रभसो हर्षवेगयोः'। इति विश्वः। 'दिशस्तु ककुभः आशाश्च हरितश्च ताः'। 'अद्रिगोत्रगिरिग्रावाऽचलशैलशिलोच्चयाः'। त्राऽप्यमरकोशः।

व्याकरणम्—महीभृतः–मही+भृ+क्विप्+तुक्+ङस् । 'क्विप् च'–इति क्विप् । 'ह्रस्वस्य पिति कृति तुक्'–इति तुक् आगमः । रभसा–रभस्+अच् । 'अर्श आदिभ्योऽच्'–इति अच् प्रत्ययः । दिदृक्षा—सन्नन्त–दृशिर्+अ+टाप् । अभिययौ—अभि+या+लिट्+तिप्+णल् ।

श्रीराधामुकुन्दाभ्यां नमः

## राजेश्वरी हिन्दीव्याख्या

पदार्थ—अथ=( हिमालय दीखनेके ) बाद । स=वह ( अर्जुन ) मेरुमहीभृतः=मेरुपर्वतको । जयाय नु=जीतनेके लिए अथवा । रभसया=वेगवाली, दिगन्तदिदृक्षया=दिशाओंके छोरोंको देखनेकी इच्छासे । नु=अथवा । नभः—आकाशको । विलङ्घयितुं=लांघनेके लिए । समुदितं=उठे हुए जैसे । उच्छ्रितं=ऊँचे । हिमालयं=हिमालय पर्वतको । अभिययौ=प्रस्थान किया (चढ़ने लगा) ।

हिन्दी—इसके बाद अर्जुन उस ऊँचे हिमालयपर चढ़ने लगा जो सुमेरु पर्वतको जीतनेके लिये या दिशाओंके अन्तिम भागोंको देखनेकी वेगवती उत्कण्ठासे या आकाशको लांघनेके लिये, ऊँचा हो रहा था ।

अभिप्राय—शरदमें राजा दूसरे राजाओंपर चढ़ाई करनेके लिये प्रस्थान करते हैं । पूर्व सर्गमें शरदका वर्णन करनेके बाद "अभिययौ=अभियान (चढ़ाई ) किया" इस क्रियापदसे व्यक्त होता है कि अर्जुनने हिमालयपर चढ़ाई कर दी । हिमालयके ऊँचे होनेमें कारण रूपसे मेरुपर्वतको जीतना, दिशाओंके छोर देखनेकी तीव्र उत्कण्ठा होना या आकाशको लांघना इन क्रियाओंकी सम्भावना की गई हैं व्यञ्जकका प्रयोग न होनेसे यह प्रतीयमानोत्प्रेक्षा अलंकार हुआ । इस पद्यमें द्रुतविलम्बित छन्द है । यहाँसे १५ पद्योंमें हिमालयका ही वर्णन किया गया है, जिसका एक ही क्रियामें अन्वय हैं अतः यह कुलक है—"द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकं । कलापकं चतुर्भिः स्यात् तदूर्ध्वं कुलकं स्मृतम्" ॥ १ ॥

तपनमण्डलदीपितमेकतः सततनैशतमोवृतमन्यतः ।
हसितभिन्नतमिस्रचयं पुरः शिवमिवाऽनुगतं गजचर्मणा ॥ २ ॥

अन्वयः—एकतःतपनमण्डलदीपितम् अन्यतः सततनैशतमोवृतं पुरः हसितभिन्नतमिस्रचयं गजचर्मणा अनुगतं शिवम् इव (हिमाऽचलम् अभिययौ) ।

**व्याख्या**—( सः अर्जुनः इति प्रथमपद्यादनुवृत्तः ) एकतः एकस्मि
तपनमण्डलदीपितं भास्करमण्डलाऽऽलोकितम्, अन्यतः अन्यस्मिन्,
पूर्ववत्तसिः । सततनैशतमोवृतं विततरोत्र्यन्धकाराऽऽच्छन्नम्, पुर
हसिताभिन्नतमिस्रचयम् अट्टहासनिदीर्णाऽन्धकारसमूहं, गजचर्मणा ह
जिनेन, अनुगतं पश्चाद् व्याप्तं, शिवम् इव हरम् इव, ( स्थितं हि
अभिययौ )। द्रुतविलम्बितवृत्तम् । उपमालंकारः ।

**भावार्थः**—अर्जुनः एकतः भास्कर मण्डलेन प्रकाशितम् अन्यतः
रात्र्यन्धकारेणाच्छादितम्, अर्थात् एकतः दिवसाऽऽवृतम् अपरतः रा
मासीत् अतएव अट्टहासेन तिमिरविदारकं गजाजिनधारिणं शिव
( हिमाऽचलमुद्दिश्य चचाल ) ।

**समासः**—तपनमण्डलदीपितम्—तपनस्य मण्डलम् ( ष० तत्पु
दीपितः तम् ( तृ० तत्पु० ) । सततनैशतमोवृतम्—नैशं च तत् त
धारयः ) सततं च तत् नैशतमः ( कर्मधारयः ) तेन वृतः तम् ( तृ०
हसितभिन्नतमिस्रचयम्हसितेन भिन्नः ( त० तत्पु० ) तमिस्राणां च
तत्पु० ) हसित भिन्नः तमिस्रचयः येन तम् ( बहुव्रीहिः ) गजचर्म
चर्म तेन ( ष० तत्पु० ) ।

**कोशः**—'भानुहंसः सहस्रांशुस्तपनः सविता रविः ।' 'पुरो
ग्राणि' । 'सतताऽनारताऽश्रान्तसन्तताविरताऽनिशम्' । 'अन्धका
ध्वान्तं तमिस्रं तिमिरं तमः' । 'पश्चात्साऽश्ययोरनु' । सर्वत्राऽप्यमरः

**व्याकरणम्**—एकतः 'आद्यादिभ्य उपसङ्ख्यानम्' । इति सार्व
तसिः । अन्यतः—अन्यास्मिन इति, पूर्ववत्तसिः । नैशम्—निशि
'तत्र भवः' इति अण् । निशा + अण + सु—अम् । हसितम् 'नपुं
क्तः' इति क्त प्रत्ययः । हस् + क्त + इट् + अ = म् ।

**पदार्थः**—एकतः=एक ओर । तपनमण्डलदीपितम् = सूर्य
प्रकाशित । अन्यतः—दूसरी ओर । सततनैशतमोवृतं = फैले हुए
ढका हुआ । पुरः = आगे । हसितभिन्नतमिस्रचयं = अट्टहास से
दिया है जिसने अन्धकार को । गजचर्मणा=हस्तिचर्म से । अनुगतं=
शिवम्=शंकर को । हिमाचलं=हिमालय की ओर । अभिययौ=चले

हिन्दी—एक ओर अर्जुन भास्कर मण्डल से आलोकित दूसरी ओर गहन ...ा के अन्धकार से आक्रान्त अतएव अपने अट्टहास से अन्धकार समूह का ...श करने वाले तथा गजचर्म को धारण किये हुए शंकर जी के सदृश ...व ( हिमालय पर्वत की ओर चल पड़े )।

अभिप्राय—यहाँ हिमालय के एक ओर प्रकाश और दूसरी तरफ ...कार का वर्णन है. अतएव इसको ऊपरी भाग में अट्टहास से प्रकाशित ... अधोभाग में गजचर्म ( कृष्णवर्ण ) से आच्छादित शिव की उपमा से ...ञ्जित किया गया है ॥ २ ॥

...तिनभःसुरलोकनिवासिभिः कृतनिकेतमदृष्टपरम्परैः ।
...यितुं विभुतामभिनिर्मितं प्रतिनिधिं जगतामिव शम्भुना ॥ ३ ॥

अन्वयः—अदृष्टपरस्परैः क्षितिनभः सुरलोकनिवासिभिः कृतनिकेतं ...ना विभुताम् प्रथयितुम् अभिनिर्मितं जगतां प्रतिनिधिम् इव ( हिमाचलम् ...ययौ )।

व्याख्या—अदृष्टपरस्परैः अदिश्याऽन्योऽन्यैः, क्षितिनभःसुरलोकनिवासिभिः ...काशस्वर्गस्थैः, कृतनिकेतं कल्पाऽऽवासं, शम्भुना शंकरेण विभूतां स्वकीय- ...र्यम्, प्रथयितुं बिस्तारयितुम्, अभिनिर्मितम् अभिरचितं, जगतां लोका- ... प्रतिनिधिम् इव प्रतिकृतिम् इव स्थितम् ( हिमाऽचलम् अभिययौ )। ...लङ्कारः।

भावार्थः—तस्यौन्नत्यस्य त्रिभुवनव्यापित्वात् तस्याधोभागे भूलोकवासिनः ...न्तरिक्षचारिणः शिखरेषु च स्वर्गवासिनः गृहाणि कृत्वा न्यवात्सुः, किन्तु ...नततया ते लोकाः परस्परं न दृश्यन्तेस्म,

समासः—अदृष्टपरस्परैः—न दृष्टः (नञ्०) अदृष्टः परस्परः यैः तैः ...व्रीहिः)। क्षितिनभःसुरलोकनिवासिभिः—सुराणां लोकः ( ष० तत्पु० ) ...ः च नभः च सुरलोकः च ( द्वन्द्वः ) तान् निवसन्तीति तच्छीलाः तैः। ...निकेतम्—कृतं निकेतं यस्मिन् तम् (बहुव्रीहिः)।

कोशः—'धरा धरित्री धरणिः क्षोणिर्ज्या काश्यपी क्षितिः'। 'नभऽन्तरिक्षं ...म्'। 'सुरलोको द्यौ दिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम्'। 'गृहं गेहोद-

गगनम्'। 'सुरलोको द्यो दिवौ द्वे स्त्रियां क्लीवे त्रिविष्टपम्'। 'गृहं गेहो- वसितं वेश्म सद्म निकेतनम्'। 'प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात्'। सर्वत्राऽप्यमरः कोशः।

व्याकरणम्—अदृष्टपरस्परैः–न+दृश्+क्तः। परस्परैः–अत्र 'कर्मव्यति- हारे सर्वनाम्नो द्वे वाच्ये'—इति परमशब्दस्य द्वित्वम्। 'समासवच्च बहुलम्'- इति समासवद्भावः। निवासिभिः—निवसन्तीति तच्छीलाः तैः, नि+वस+ णिनि+भिस्। विभुताम्—विभु+तल्+टाप्+अम्। प्रथयितुम्—प्रथ+ णिच्+तुमुन्।

पदार्थः—अदृष्टपरस्परैः=परस्पर एक दूसरेको न देखते हुए। क्षिति- नभःसुरलोकनिवासिभिः=भूमि, अन्तरिक्ष और स्वर्ग के निवासियोंसे। कृत- निकेतम्=बनाये गये हैं घर जिसमें ऐसे। शम्भुना=शिवजी के द्वारा। विभुतां= ( अपनी ) व्यापकताको। प्रथयितुं=फैलानेके लिए। जगतां=संसारका प्रतिनिधिमिव=प्रतिनिधि जैसे। अभिनिर्मितं=बनाये हुए, ( हिमालय पर चढ़ा )।

हिन्दी—उसपर भूलोक, अन्तरिक्ष लोक एवं स्वर्गलोकके प्राणी अपने घर बनाकर रहते थे किन्तु ऊँचाईके कारण एक लोकवासी दूसरे लोकके प्राणि- को देख नहीं पाते थे। ऐसा प्रतीत होता था कि शिवजीने अपनी कीर्ति फैलाने के लिए इन तीनों लोकोंका एक चित्र जैसा बना दिया है। ऐसे हिमालय पर चढ़ा।

अभिप्राय—अर्थात् वह हिमाचल स्वर्गतक ऊँचा था इसलिए भू, भुवः (अन्तरिक्ष) एवं स्वर्लोकके प्राणी आसानीसे उसमें अपने आवास बनाकर रहते थे, चूँकि ये लोक एक दूसरेसे अत्यन्त दूरीपर हैं इसलिए एक लोकवाले दूसरे लोकवालोंको देख नहीं सकते थे। शिवजी हिमालयपर ही रहते हैं अतः प्रतीत होता है कि उन्होंने अपनी ख्याति फैलानेके लिए इन तीनों लोकोंका चित्र बनाकर खड़ाकर दिया है। यह भी अतिशयोक्ति अलङ्कार है। कवि यह दिखना चाहता है कि हिमालय तीनों लोकोंमें विख्यात एवं विस्तृत है॥ ३॥

भुजगराजसितेन नभः श्रिता कनकराजिविराजितसानुना।
समुदितं निचयेन तडित्त्वतीं लघयता शरदम्बुदसंहतिम् ॥ ४ ॥

अन्वयः--भुजगराजसितेन नभःश्रिता कनकराजिविराजितसानुना तडित्त्वतीं शरदम्बुदसंहतिं लघयता निचयेन समुदितम् (हिमाचलम् अभिययौ)।

व्याख्या--भुजगराजसितेन सर्पराजधवलेन, नभःश्रिता गगनस्पृशा, कनकराजिविराजितसानुना स्वर्णरेखाशोभितप्रस्थेन; तडित्त्वतीं विद्युद्युक्तां, शरदम्बुदसंहतिं शरन्मेघसमूहं, लघयता लघूकुर्वता, निचयेन समूहेन, शिखराणीति शेषः। अत्र निचयशब्दस्य शिखरार्थे लक्षणाऽऽश्रयणीया। समुदितं समुन्नतं (हिमाचलम् अभिययौ)। उपमाऽलङ्कारः।

भावार्थः—शेषाहिधवलेन गगनस्पृशा सुवर्णरेखाभिः शोभितशिखरेण विद्युद्युक्तं शरन्मेघनिचयं लघूकुर्वता शिखरसमूहेन समुन्नतं हिमाचलमभिययौ।

समासः—भुजगराजसितेन–भुजगानां राजा (ष० तत्पु०) भुजगराज एव सितः तेन (उपमान०)। कनकराजिविराजितसानुना–कनकस्य राजयः (ष० तत्पु०) विराजिताः सानवः यस्य सः (बहुव्रीहिः) कनकराजिभिः विराजितसानुः तेन (तृ० तत्पु०) शरदम्बुदसंहतिम्–शरदि अम्बुदाः (स० तत्पु०) तेषां संहतिः ताम् (ष० तत्पु०)।

कोशः--'अवदातः सितो गौरोऽवलक्षो धवलोऽर्जुनः'। 'स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्'। 'तडित् सौदामिनी विद्युत्'। 'स्त्रियान्तु संहतिर्वृन्दं निकुरम्ब कदम्बकम्'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—भुजगराजः–अत्र 'राजाहः सखिभ्यष्टच्–इति टच् प्रत्ययः। श्रिता– नभः + श्रिञ् + क्विप्+टा। तडित्वतीम्—तडित् + मतुप्+ङीप् +अम्।

पदार्थः--भुजगराजसितेन शेषनागके समान श्वेत। नभः श्रिता= आकाशको छूते हुए। कनकराजि=सुवर्ण रेखाओंसे, विराजित = शोभित है, सानुना = शिखर जिसके ऐसे। तड़ित्वती=बिजलियोंवाली। शरदम्बुदसंहति = शरत्कालके मेघ-समूहको। लघयता=नीचा दिखाते हुए। निचयेन=(शिखरों-के) समूहसे। समुदितम् = ऊँचे उठते हुए।

हिन्दी—शेषनाग जैसे सफेद, आकाशको छूते हुए, सुवर्ण रेखाओं शोभित शिखरोंवाले तथा बिजलीयुक्त शरत्कालीन मेघ समूहको तिरस्कार करते हुए शिखरसमूहोंसे ऊँचे उठते हुए हिमालय पर, चढ़ा।

अभिप्राय—हिमालयके शिखर हिमसे ढके हैं इसीलिए उनकी उपमा श्वेत शेषनागसे दी गई है उनमें सुवर्णकी खानें हैं। बीच-बीचमें जहाँ बरफ नहीं जम पाया है या गिर गया है वहाँ पीला सुवर्ण चमक रहा है। इसलिए शरद्के सफेद मेघमें चमकती बिजली की शोभा उसके सामने फीकी है क्योंकि मेघमें बिजली थोड़ी देर चमकती हैं किन्तु इसपर सुवर्ण रेखा देर तक स्पष्ट दीखती है इसलिये यह उससे बढ़कर है।

मणिमयूखचयांऽशुकभासुराः सुरवधूपरिभुक्तलतागृहाः :
दधतमुच्चशिलाऽन्तरगोपुराः पुर इवोदितपुष्पवना भुवः ॥ ५ ॥

अन्वयः—मणिमयूखचयांऽशुकभासुराः सुरवधूपरिभुक्तलतागृहाः दधतमु च्चशिलाऽन्तरगोपुराः उदितपुष्पवनाः पुरः इव ( स्थिताः ) भुवः दधतं ( उच्छ्रितं हिमाऽचलम् अभिययौ।

व्याख्या—मणिमयूखचयांशुकभासुराः रत्नमयूखपुञ्जसदृशाभावन्तः सुर वधूपरिभुक्तलतागृहाः देवाऽङ्गनापभुक्तलताहर्म्याः उच्चशिलाऽन्तरगोपुराः नगरद्वारोपमोच्चपाषाणमध्याः, उदितपुष्पवनाः शोभितकुसुमाऽऽरामाः, एव पुरः इव नगर्यः इव, स्थिताः भुवः पृथिवीः, दधतं धारयन्तम् ( उच्छ्रितं हिमाऽचलम् अभिययौ ) उपमालङ्कारः।

भावार्थः—मणिकिरणसमूहैरंशुकैरिव भासमानः, देवाङ्गनाभिः परिभुक्त लतागृहाः उच्चशिलातलैः पुरद्वारैरिव शोभिता उदितकुसुमकानना पुर इव भूभागान् दधत हिमालयमभिययौ।

समासः—मणिमयूखचयांऽशुकभासुराः—मणिमयूखचयाः अंशुकानि इव ( उपमान कर्म० ) मणिमयूखांऽशुचयैः भासुराः ताः (तृ० तत्पु०)। सुरवधू परिभुक्तलतागृहाः—सुरवधूभिः परिभुक्ताः (तृ० तत्पु०) लताः गृहाः इव (उप मानक०) सुवरधूपरिभुक्ताः लतागृहाः यासु; ताः (बहुव्रीहिः)। उच्चशिला ऽन्तरगोपुराः—उच्चशिलाऽन्तराणि गोपुराणि इव ( उपमान कर्म० ) उच्च

शिलाऽन्तरगोपुराणि यासु ताः । (बहुव्रीहिः) । उदितपुष्पवनाः—पुष्पाणां वनानि (ष० तत्पु०) उदितानि पुष्पवनानि यासु ताः (बहुव्रीहिः) ।

कोशः—'किरणोऽस्रमयूखांशुगभस्तिघृणिरश्मयः' 'गृहं गेहोदवसितं वेश्म सद्म निकेतनम्' । 'पुरद्वारन्तु गोपुरम् । 'पूः स्त्री पुरीनगर्यौ वा' । सर्वत्रामरः । कोशः ।

व्याकरणम्—परिभुक्ताः—परि+भुज्+क्त+जस् । गोपुरम्—गुपू रक्षणे इति धातोः बाहुलकात् उरच् । यद्वा—पुल महत्वे 'इगुपधात्कः'—इति क प्रत्ययः, । रलयोरभेदः । भवः—भवति । कर्तरि क्विप् । यद्वा—भवति अस्यां सर्वम् इति भूः+ताः । दधतम्—धा+शतृ+अम् ।

पदार्थ—मणिमयूखचयांशुकभासुराः = मणियोंकी किरणसमूहोंसे वस्त्रकी तरह चमकते हुए । सुरवधूपरिभुक्तलतागृहाः = देवाङ्गनाओंसे भोगे गये हैं लताओंके निकुंज जिसमें ऐसे । उच्चशिलान्तरगोपुराः = ऊँचे-ऊँचे चट्टान ही हैं गोपुर ( =पुरद्वार ) जिनमें ऐसे । उदितपुष्पवनाः = विकसित फूलोंवाले हैं वन जिनमें ( पुरके पक्षमें—उदित=प्रसिद्ध हैं,, पुष्पवन=बगीचे जिनमें ऐसे ) । पुर इव=नगरोंकी तरह । भुवः = भू भागोंको । दधतम् = धारण करते हुए ।

हिन्दी—मणियोंके किरण-समूहोंसे वस्त्रों जैसे चमकते हुए, देवाङ्गनाओंसे भोगी जा रही है झाड़ियाँ जिनको ऐसे, फाटकों जैसे ऊँचे चट्टानोंवाले तथा ऊर्जित पुष्पवनोंवाले नगरोंकी तरह भूखण्डोंको धारण करते हुए हिमालय पर चढ़ा ।

अभिप्राय—हिमालयके भूभागोंकी नगरसे उपमा दी गयी है—नगरमें विविध प्रकारके वस्त्रोंकी सजावट रहती है इन भूभागोंमें मणियोंके किर० समूह एकत्र होकर वस्त्रोंकी तरह चमक रहे हैं । नागरिक स्त्रियाँ वहाँके लतागृहोंमें विहार करती है, यहाँ देवाङ्गनायें लतागृहोंका उपभोग करती हैं । नगरमें स्थान-स्थान पर फाटक बने रहते हैं यहाँ भी चट्टानोंके बड़े-बड़े पत्थरोंसे फाटक जैसे बने हैं । नगरमें बगीचोंमें फूल खिले रहते हैं यहाँ वनोंमें फूल खिले हैं । गोपुर—नगरमें बाहरसे प्रवेश करनेके लिए जो बड़ा द्वारा होता है उसे तोरण कहते हैं और नगर के भीतर बने हुए फाटक गोपुर कहलाते हैं । "तोरणस्त्री बहिर्द्वारं पुरद्वारं तु गोपुरम्" अमरकोषः ॥ ५ ॥

अविरतोज्झितवारिविपाण्डुभिर्विरहितैरचिरद्युतितेजसा ।
उदितपक्षमिवाऽऽरतनिःस्वनैः पृथुनितम्बविलम्बिभिरम्बुदैः ॥६॥

अन्वयः—अविरतोज्झितवारिविपाण्डुभिः अचिरद्युतितेजसा विरहितैः आरतनिःस्वनैः पृथुनितम्बविलम्बिभिः अम्बुदैः उदितपक्षम् इव ( स्थितम् उच्छ्रितम् हिमाऽचलम् अभिययौ , ।

व्याख्या—अविरतोज्झितवारिविपाण्डुभिः सततत्यक्तजलपाण्डुरैः, अत एव हिमवतः पक्षत्वं सम्भवतीति भावेरभिप्रायः । अचिरद्युतितेजसा क्षणप्रभाकान्त्या, विद्युत्तेजसेति भावः । विरहितैः वीतैः, आरतनिः स्वनैः प्रशान्तगर्जितैः पृथुनितम्बविलम्बिभिः महाकटकसङ्गिभिः, अम्बुदैः, पयोदैः, उदितपक्षम् इव सञ्जातपक्षम् इव ( स्थितम् उच्छ्रितं हिमालयम् अभिययौ ) ।

समासः—अविरतोज्झितवारिविपाण्डुभिः—उज्झितं वारि यैः ते (बहुव्रीहिः) अविरतं यथा स्यात् तथा उज्झितवारयः ( सुप्सुपा० ) अविरतोज्झितवारयः च ते विपाण्डवः तैः ( कर्मधारयः )—अचिरद्युतेः तेजः तेन ( ष० तत्पु० ) पृथुनितम्बविलम्बिभिः—पृथवः च ते नितम्बाः (कर्मधारयः) पृथु नितम्बेषु विलम्बन्ते तच्छीलाः तैः ( उपपद० ) । उदितपक्षम्-उदिताः पक्षाः यस्य तम् ( बहुव्रीहिः ) ।

कोशः—'सततानारताऽश्रान्तसन्तताऽविरताऽविरताऽनिशम्' । 'शम्पा शतह्रदाह्रादिन्यैरावत्यः क्षणप्रभा' । 'स्वाननिर्घोषनिर्ह्रादनादनिः स्वानिःस्वनाः' । 'विशङ्कटं पृथुबृहद् विशालं पृथुलं महत्' । 'कटकोऽस्त्री नितम्बोऽद्रेः' । सर्वत्रामरकोशः ।

व्याकरणम्—अविरतम्—नास्ति विरतम् अस्य । पाण्डुः—पडि गतौ । मृगय्वादित्वात् 'कु' प्रत्ययः, पृषोदरादित्वाद् दीर्घः । निः स्वनैः—'स्वनहसोर्वा'-इति अप्—घञौ, तृतीयान्तोऽयं रूपः । पक्षः—पक्षपरिग्रहे, कर्मणि घञ् ।

पदार्थ—अविरत = निरन्तर. उज्झित = बरसाये हुए, वारि = जलसे, विपाण्डुभिः=पाण्डुर (सफेद) वर्णवाले । अचिरद्युतितेजसा =बिजलीकी चमकसे। विरहितैः=रहित हुए । आरतनिस्वनैः=शान्त हो गयी है गर्जना जिनकी ऐसे। पृथुनितम्बविलम्बिभिः=विशाल मध्य भागमें लटकते हुए । अम्बुदैः=मेघोंसे। उदितपक्षम् इव = उग आये हैं पंख जिसको ऐसे जैसे ।

भावार्थः—निरन्तरवर्णन जलहीनत्वात् पाण्डुरवर्णैः विद्युद्विहीनैः शान्तगर्जनैश्च मध्ये विलम्बमानैः मेघैः जातपक्षमिव हिमालयमभिययौ ।

हिन्दी—वर्षा ऋतुमें निरन्तर जल बरस जानेसे श्वेतवर्णके, बिजलीसे विहीन, शान्त गर्जनवाले और मध्यभागमें लटकते हुए मेघोंसे उगे हुए पंखोंवाले जैसे हिमालयपर चढ़ा ।

अभिप्राय—पहिले पर्वतोंके पंख होते थे। वे पक्षियोंकी तरह जहाँ-चाहें वहाँ उड़ जाते थे और जहाँ बैठते थे वहाँ अपार धन-जनका नाश हो जाता था। इसलिए इन्द्रने पर्वतोंके पंख काट डाले। यहाँ कविका अभिप्राय है कि यद्यपि हिमालयके पंख नहीं रह गये हैं तथापि मध्य भागमें लटकते हुए बादल उसके पंख जैसे प्रतीत होते हैं। इसमें भी हिमालयकी उन्नतता अभिव्यक्त होती है। क्योंकि आकाश में इतनी ऊँचाई पर उड़नेवाले बादल उसके कमर तक ही होते हैं। उत्प्रेक्षालंकार है ॥ ६ ॥

दधतमाकरिभिः करिभिः क्षतैः समवतारसमैरसमैस्तटैः ।
विविधकामहिता महिताऽम्भसः स्फुटसरोजवना जवना नदी ॥ ७ ॥

व्याख्या—आकरिभिः करिभिः क्षतैः समवतारसमैः असमैः तटैः महिताऽम्भसः विविधकामहिताः स्फूटसरोजवनाः जवनाः नदीः दधतम् ( उच्छ्रितं हिमाऽचलम् अभिययौ) ।

व्याख्या आकरिभिः खनिजातैः करिभिः गजैः, कर्तृभिः इत्याऽऽशयः। क्षतैः त्रोटितैः, समवतारसमैः तीर्थ सुरभः, असमैः अतुल्यैः, अनुपमैरिति, तादृशैः तटैः तीरः, उपलक्षिता इत्यर्थः। महिताम्भसः पूतजलाः; विविधकामहिताः अनेकोपभोगाऽभिलाषाऽनुकूलाः, स्फुटसरोजवनाः विकसितकमलवनसनाथाः, जवनाः, जवनाः वेगवतीः, नदीः सरितः, दधत धारयन्तम् (उच्छितं हिमालयम् अभिययौ) ।

भावार्थः— रत्नादिखनिमद्भिः, गजादिविक्षतैः, तीर्थादितुल्यैरणुपमैः तटैरुपलक्षितास्तथा प्रशंसनीयजला उपयोगवतीः विकसितपद्मसमूहयुताः वेगवतीः नदीर्धारयन्तं तमभिययौ ।

समासः—समवतारसमैः–समवतारेषु समानि तैः (स० तत्पु०)। असमैः–न समानि तैः ( नञ् )। महिताऽम्भसः–महितम् अम्भः यासां ताः (बहु-

ब्रीहिः)। विविधकामहिताः विविधाः च ते कामा (कर्मधारयः) विविधकामेभ्यः हिताः ताः (च० तत्पु०)। स्फुटसरोजवनाः—सरोजानां वनानि (ष० तत्पु०)। स्फुटानि सरोजवनानि यासु ताः (बहुव्रीहिः)।

कोशः—खनिः स्त्रियामाकरः स्यात्'। 'मतङ्गजो गजो नागः कुञ्जरो वारणः करी'। 'कलं रोधश्च तीरञ्च प्रतीरञ्च तटं त्रिषु'। अम्भोऽर्णस्तोय पानीयनीरक्षीराम्बुशम्बरम्' प्रफुल्लोत्फुल्लसंफुल्लव्याकोमविकचस्फुटाः'। सर्वत्रायमरकोशः।

व्याकरणम्—आकरिभिः—आ+कृ+इनि+भिस्। करिभिः-करः अस्य अस्ति, इति, कृ+इनि+भिस्। जवनाः-'जु' इति सौत्रो धातुः ततः युच् प्रत्यये शसि रूपम्।

पदार्थ—आकरिभिः=आकरों (=खानों) वाले। करिभिःक्षतैः=हाथियोंसे तोड़े-फोड़े गये। समवतारसमैः=सीढ़ियोंके समान। असमैः=अनुपम। तटैः तटोंसे (युक्त, तथा) महिताम्भसः=प्रशंसनीय है जल जिनका ऐसी। विविधकामहिताः=अनेक कार्योंमें उपयोगी। स्फुटसरोजवनाः=खिल रहे है कमल जिनमें ऐसी। जवनाः=वेगवती। नदीः=नदियोंको। दधतम्=धारण करते हुए।

हिन्दी—रत्नादिकी खानोंवाले, तथा हाथियोंसे छत-विछत होनेसे सीढ़ियों जैसे बने हुए अनुपम तटोंसे युक्त, प्रशंसनीय जलोंवाली, कई कार्योंके लिए उपयोगिनी, कमल समूह जिनमें खिले हैं ऐसी तथा वेगवाली नदियोंको धारण करते हुए हिमालयपर चढ़ा।

अभिप्राय—श्री मल्लिनाथने अकरिभिः का अर्थ किया है "आकराः खनिरेषामस्ति योनित्वेनेत्याकरिभिः=आकारजैः" इस के अनुसार यह किसका विशेषण है हम समझ नहीं पाते। जब कि "आकरः खनिरेषामस्तीति तैः" यह सीधा विग्रह है और इसका अर्थ है खानोंवाले तट। आज भी हिमालयकी कई नदियाँ ऐसी है जिनके किनारोंमें सोनेकी खानें है। उन नदियोंके जलमें निरन्तर सुवर्णके कण बहते है। लोग किनारेके बालूको एक विशेष प्रक्रियासे छान-छानकर सुवर्ण इकट्ठा करते है॥ ७॥

नवविनिद्रजपाकुसुमत्विषां द्युतिमतां निकरेण महाऽश्मनाम् ।
विहितसान्ध्यमयूखमिव क्वचिन्निचितकाञ्चनभित्तिषु सानुषु ॥ ८ ॥

अन्वयः—नवविनिद्रजपाकुसुमत्विषां द्युतिमतां महाऽश्मनां निकरेण क्वचित् निचितकाञ्चनभित्तिषु सानुषु विहितसान्ध्यमयूखम् इव ( उच्छ्रितं हिमाऽचलम् अभिययौ ) ॥ ८ ॥

व्याख्या—नवविनिद्रजपाकुसुमत्विषां नवीनविकसितजपापुष्पशोभया द्युतिमतां तेजवतां, महाऽश्मनां पद्मरागमणीनां, निकरेण समूहेन, हेतुना क्वचित् कुत्रचित् निचितकाञ्चनभित्तिषु सङ्घटितस्वर्णमयकुड्येषु, सानुषु प्रस्थेषु विहितसान्ध्यमयूखम् इव कृतसन्ध्याकिरणम् इव ( उच्छ्रितं हिमाचलम् अभि-ययौ ) । उत्प्रेक्षाऽलङ्कारः ।

भावार्थः—क्वचित् सद्योविकसितौण्ड्रपुष्पत्विषां दीप्तिमतां पद्मरागाणां स्वर्णभित्तिषु प्रभाप्रसरादुदितसन्ध्यारागमिव परिदृश्यमानं हिमालयमभियदौ ।

समासः—नवविनिद्रजपाकुसुमत्विषाम्—विनिद्राणि च तानि जपाकुसुमानि (कर्मधारयः) नवविनिद्रजपाकुसुमानाम् इव त्विषः येषां ते, तेषाम् (कर्मधारयः) । निचितकाञ्चनभित्तिषु—काञ्चनस्य भित्तयः (ष० तत्पु ) निचिताः काञ्चन-भित्तयः येषु ते, तेषु (बहुव्रीहिः) । विहितसान्ध्यमयूखम्—विहिताः सान्ध्याः मयूखाः यस्मिन् तम् बहुव्रीहिः) ।

कोशः—'ओड्रपुष्पं जपापुष्पम्' । 'स्युः प्रभारुग्रुचिस्त्विड्भा भाश्छवि-द्युद्दीप्तयः' । 'समूहनिवहव्यूहसन्दोहविसरव्रजाः' । 'स्तोमौघनिकरव्रातवार-सङ्घातसञ्चयाः' । 'भित्तिः स्त्रीः कुड्यम्' 'किरणोऽस्रमयूखांशुगभस्तिघृणि-रश्मयः' । सर्वत्रामरकोशः ।

व्याकरणम्—द्युतिमताम्-द्युति+मतुप्+आम् । महाऽश्मनाम्—महत्+आत्व । 'आन्महतः समानाऽधिकरणजातीयोः' । सान्ध्याः सन्ध्यायां भवाः सान्ध्याः, सन्ध्या+अण् । 'तत्र भवः' इति अण् ।

पदार्थ - नवविनिद्र = ताते खिले हुए, जपाकुसुमत्विषां=अड़हुलके फूल जैसी कान्तिवाले । द्युतिमतां=चमकते हुए । महाश्मनां=मणियोंके । निक-रेण=समूहसे । कचित्=कहीपर । निचितकंचनभित्तिषु संघटित सुवर्णमय

दीवालोंवाले। सानुषु=शिखरोंपर। विहितसान्ध्यमयूखम् इव=की है सायं-कालीन-सी किरणें जितने ऐसे (हिमालयपर चढ़ा)।

हिन्दी—कहीं कहीं पर तत्काल खिले हुए अडहुलके फूलों जैसी लाल-लाल किरणों वाले चमकते हुए पद्मरागमणियोंकी कान्तिके, सुनहरी भीतोंसे टकराने से सन्ध्याकालकी अरुणिमाका जैसा दृश्य जिसमें हो रहा है, ऐसे हिमालपर चढ़ा।

अभिप्राय—महाऽश्मनां का अर्थ है—महान् अर्थात् कीमती पत्थर। यह प्रायः सभी मणियों के लिये प्रयुक्त हो सकता है, प्रकरणके अनुसार यहाँ पद्म-रागकी लाल किरणें सोनेकी भीतोंकी पीली किरणोंसे टकरा रही है जिससे सन्ध्याकालका सा दृश्य दीख रहा है। सन्ध्याकालमें भी लाल और पीली मिश्रित किरणें आकाशमें दीखती हैं॥ ८॥

पृथुकदम्बकदम्बकराजितं ग्रथितमालतमालवनाऽऽकुलम्।
लघुतुषारतुषारजलश्च्युतं धृतसदानसदाननदन्तिनम्॥ ९॥

अन्वयः—पृथुकदम्बकदम्बकराजितं ग्रथितमालतमालवनाऽऽकुलं लघु-तुषारतुषारजलश्च्युतं धृतसदानसदाननदन्तिनम् (उच्छ्रितं हिमाऽचलम् अभि-ययौ)।

व्याख्या—पृथुकदम्बकदम्बकराजितं बृहत्तनीपपुष्पसन्दोहशोभितं, ग्रथित-मालतमालवनाऽऽकुलं निबद्धपङ्क्तितापिच्छकाननाऽऽकीर्णं, लघुतुषारतुषारजल-श्च्युतं स्वल्पशीकरहिमोदकनिष्ठ्युतं, धृतसदानसदाननदन्तिनं धृतसमसुन्दरमुख-हस्तिनं (उच्छ्रितं हिमाऽचलम् अभिययौ)। यमकालङ्कारः।

भावार्थः—स्थूलनीपकुसुमसमूहैः शोभितं बद्धपंक्तिभिस्तमालवृक्षैर्व्याप्तं लघुकणायुतं हिमजलं वर्षन्तं, सद्दन्तिनः धारयन्तं हिमालयमभिययौ।

समासः—पृथुकदम्बकदम्बकराजितम्—कदम्बानां कदम्बकानि (ष० तत्पु०) पृथूनि च तानि कदम्बकानि (कर्मधारयः) पृथुकदम्बकदम्बकैः राजितः तम् (तृ० तत्पु०)। ग्रथितमालतमालवनाऽऽकुलम्—ग्रथिता माला येषां तानि (बहुव्रीहिः) तमालानां वनानि (ष० तत्पु०) ग्रथितमालानि च तानि तमाल-वनानि (कर्मधारयः) तैः आकुलः तम् (तृ० तत्पु०)। लघुतुषारतुषारज-

श्च्युतम्–लघवः तुषाराः यस्य तत् ( बहुव्रीहिः ) लघुतुषारं च तत् तुषारजलं (कर्मधारयः ) तत् श्च्योतति इति तम्। धृतसदानसदाननदन्तिनम्–दानेन सहिताः सदानाः ( तुल्ययोगबहु० ) सत् आननं येषां ते ( बहुव्रीहिः ) धृताः सदानाः सदाननाः दन्तिनः येन, तम् ( बहुव्रीहिः )।

कोशः—'नीपप्रियकदम्बास्तु हलिप्रिये'। 'स्त्रियान्तु संहतिवृन्द निकुरम्बं कदम्बकम्'। 'कालस्कन्धस्तमालः स्यात्तापिच्छः'। सर्वत्राऽप्यमरः। 'तुषारौकोशः हिमसीकरौ'–इति शाश्वतकोशः।

व्याकरणम्—लघुतुषारतुषारजलश्चुतम्–श्च्योततीति श्च्युत् 'अन्येभ्योऽपि दृश्यते'–इति क्विप्, 'ह्रस्वस्य पिति कृति तुक् प्रत्ययः।

पदार्थ—पृथु=बड़े-बड़े, कदम्ब = नीपके, कदम्बक=समूहोंसे, राजितं= शोभित। प्रथितमालः = गुंथी हुई मालाकी तरह ( पंक्ति बद्ध ) तमालवना-कुलं=तमालके वनोंसे व्याप्त। लघुतुषार = छोटे-छोटे बूंदोंवाले, तुषारजलश्च्युतं =हिमजलको बरसानेवाले। धृत=धारण किया है, सदान=मजदल सहित, सदानन=सुन्दरमुखवाले, दन्तिनं=हाथियोंको जिसने, ऐसे (हिमालयपर चढ़ा)।

हिन्दी—मोटे-मोटे नीपके फूलोंसे शोभित, गुंथीमालाकी तरह पंक्तिवद्ध तमालवृक्षोंसे व्याप्त, छोटी-छोटी बूंदोंमें हिमजलको वर्षाते हुए तथा मदोन्मत्त हाथियोंको धारण करते हुए हिमालयपर चढ़ा।

रहितरत्नचयान्न शिलोच्चयानपलताभवना न दरीभुवः।
विपुलिनाऽम्बुरुहा न सरिद्वधूरकुसुमाद् दधतं न महीरुहः ।।१०।।

अन्वयः—रहितरत्नचयान् शिलोच्चयान् न दधतम् अपलताभवनाः दरी-भुवः न ( दधतम् ) विपुलिनाऽम्बुरुहाः सरिद्वधूः न ( दधतम् ) अकुसुमान् महीरुहः न ( दधतम् ) ( उच्छ्रितं हिमाऽचलम् अभिययौ )।

व्याख्या—रहितरत्नचयान् रत्नसमूहहीनान्, शिलोच्चयान् अद्रीन्, न दधतं नो धारयन्तम्, अपलताभवनाः लताहीनगृहः, दरीभुवः गुहाप्रदेशान्, न दधतं नो धारयन्तम्, विपुलिनाम्बुरुहाः पुलिनकमलहीनाः, सरिद्वधूः वधूपम-नदीः, न दधतं नो धारयन्तम् ( उच्छ्रितं हिमाऽचलम् अभिययौ )। उपमा-लङ्कारः।

एवं कमलोंसे पूर्ण थीं, एवं सभी वृक्ष फूलोंसे लदे रहते थे। इनमें कोई भी रिक्त नहीं था। यहाँ नदियोंको वहू कहा है अतः पुलिनसे जघनस्थल तथा कमलोंसे मुखकी अभिव्यक्ति होती है ॥ १० ॥

**व्यथितसिन्धुमनीरशनैः नैः शनैरमरलोकवधूजघनैर्घनैः।**
**फणभृतामभितो विततं ततं दयितरम्यलताबकुलैः कुलैः॥ ११ ॥**

**अन्वयः**—अनीरशनैः घनैः अमरलोकवधूजघनैः शनैः व्यथितसिन्धु दयितरम्यलताबकुलैः फणभृतां कुलैः अभितः ततं विततम् (उच्छ्रितं, हिमाऽच-लम् अभिययौ)।

**व्याख्या**—अनीरशनैः समेखलैः, घनैः निविडैः, अमरलोकवधूजघनैः सुराऽङ्गनाकटिदेशैः शनैः मन्दं, व्यथितसिन्धु क्षोभितसरितं, दयितरम्यलताब-कुलैः प्रियरमणीयवल्लीके विशारदैः तादृशैः फणभृतां सर्पाणां, कुलैः समूहैः. अभितः सर्वतः, ततं व्याप्तं, विततं विस्तृतम् (उच्छ्रितं हिमाचलम् अभिययौ)। यमकालङ्कारः।

**भावार्थ**—समेखलैः देवाङ्गनानां निविडजघनैः मन्दं विलोडितनदीकं तथा रम्यलताबकुलाश्च प्रियंमन्यमानैः सर्पकुलैः व्याप्तं विस्तृतं हिमाचलमभिययौ।

**समासः**—अनीरशनैः—निर्गता रशना येभ्यः तानि ( बहुव्रीहिः ); न नीरशनानि तैः (नञ्०)। अमरलोकवधुजनैः—अमरलोकस्य वध्वः (ष० तत्पु०) तासा जघनानि तैः (ष० तत्पु०)। व्यथितसिन्धुम्—व्यथिताः सिन्धवः यस्मिन् तम् (बहुव्रीहिः)। दयितरम्यलताबकुलैः—लताः च बकुलाः च (द्वन्द्वः, रम्याः च ताः लताबकुलाः (कर्मधारयः), दयिताः रम्यलताबकुला येषां तानि तै बहुव्रीहिः। फणभृताम्—फणं बिभ्रतीति तेषाम् (उपपद०)।

**कोशः**—'स्त्रीकट्यां मेखला कांची सप्तकी रशना तथा'। इत्यमरः। घनं सान्द्रं घनं वाद्यं घनो मुस्तो धनोऽम्बुदः। घनः काठिन्यसङ्घातो निस्तारो लोहमुद्गरो'। इति धरणिः। 'क्लीवे तु जघनं पुरः'। इत्यमरः। 'विशारदो मद्यगन्धो बकुलः स च केसरः'। इति वैद्यकनिघण्टौ। 'ततं व्याप्ते विस्तृते च त्रिलिङ्गकम्। क्लीबं वीणादिवाद्ये स्यात् पुल्लिङ्गस्तु सदागतौ'। इति मेदिनी। 'स्फटायान्तु फणा द्वयोः'। इत्यमरकोशः।

व्याकरणम्—अनीरशनैः-न नीरशानि तैः, न+निर्+रस+युच्+भिस्। रशना तालव्यमध्या दन्त्यमध्यापि च पठ्यते। अभितः-अभि+तसिल्। 'पर्यभिभ्याञ्च'-इति तसिल्। ततम्-तनु विस्तारे धातोः क्त प्रत्यये रूपम्।

पदार्थ—अनीरशनैः=जो मेखलाओंसे रहित नहीं है ऐसे। घनैः=घने। अमरलोकवधूजघनैः=देवलोककी स्त्रियोंके जघनस्थलोंसे। शनैः=धीरे-धीरे। व्यथितसिन्धु=विलोडित किया है। नदियोंको जिसकी ऐसे। दयितरम्यलतावकुलैः=प्रिय हैं रमणीय लतायें तथा वकुल (केसर) के वृक्ष जिनको ऐसे। फणभृतां कुलैः=सर्पोंके समूहोंसे। ततं=व्याप्त, (तथा) विततं=विस्तृत (हिमालयपर चढ़ा)।

हिन्दी—करधनियों सहित स्नान करती हुई देवाङ्गनाओंके घने जघनों जिसकी नदियोंका जल धीरे-धीरे हिलाया जा रहा है, तथा रमणीय लताओं एवं केसर वृक्षोंको चाहनेवाले सर्पोंसे जो व्याप्त है ऐसे, एवं अत्यन्त विस्तार-वाले हिमालयपर चढ़ा।

अभिप्राय—देवाङ्गनाएँ हिमालय की नदियोंमें आकर जलक्रीडा करती थी, इस लिए उनके करधनी पहिने हुए स्थूल नितम्बोंसे जल चंचल हो इधर उधर हिलने लगता था। जहाँ सुगन्ध होती है वहाँ प्रायः सर्प रहा करते हैं जैसे मलयाचलमें चन्दनकी सुगन्धके कारण सर्पोंका वास है। हिमालयके रमणीय लताओं तथा केसरकी सुगन्धके कारण वह भी पर्याप्त फणधरोंसे व्याप्त है। इस श्लोकसे हिमालयका उत्तुङ्गता और महत्ता व्यक्त होती है। नागलोक पातालमें है और देवाङ्गनाएँ स्वर्गमें रहती हैं, तात्पर्य यह है कि हिमालय पातालसे स्वर्गतक व्याप्त है ॥ ११ ॥

ससुरचापमनेकमणिप्रभैरपपयोविशदं हिमपाण्डुभिः।
अविचलं शिखरैरुपबिभ्रतं ध्वनितसूचितमम्बुमुचां चयम् ॥ १२॥

अन्वयः—अनेकमणिप्रभैः हिमपाण्डुभिः शिखरैः ससुरचापम् अपपयोविशदम् अविचलं ध्वनितसूचितम् अम्बुमुचां चयम् उपबिभ्रतम् (उच्छ्रितं हिमाचलम् अभिययौ) :

व्याख्या—अनेकमणिप्रभैः विचित्ररत्नकान्तिभिः, हिमपाण्डुभिः तुषारशुभ्रैः शिखरैः कूटैः, ससुरचापम् इन्द्रायुधसहितम् अपपयोविशदं निर्जलशुभ्रम्, अवि-

चलं दैवान्निश्चलम्, अतएववाऽस्य शिखरशङ्काऽभूदित्याशयः। किन्तु ध्वनिसूचितं गर्जितनिर्दिष्टम्, अम्बुमुचाम् मेघानां, चयं समूहम्, उपविभ्रतं धारयन्तम्, (उच्छ्रितं हिमाऽचलम् अभिययौ)। सन्देहालङ्कारः।

भावार्थः—विभिन्नवर्णानां मणिकिरणानां संमिश्रणात् इन्द्रधनुः हिमवते शुभ्रत्वाच्च शारदो मेघचयः सादृश्यात् पृथक् न ज्ञायेते, मेघस्य पृथक् प्रतीतिस्तु सदैव भवति यदा स गर्जति।

समासः—अनेकमणिप्रभैः–अनेकाः मणिप्रभाः येषां तानि, तैः (बहुव्रीहिः)। हिमपाण्डुभिः–हिमेन पाण्डूनि तैः (तृ० तत्पु०)। ससुरचापम्—सुरचापेन सहितः तम् (तुल्ययोगबहु०)। 'अपपयोविशदम्– अपगतं पयः—यस्मात् सः (बहुव्रीहिः)। अपपयाः च असौ विशदः तम् (कर्मधारयः)। ध्वनितसूचितम्—ध्वसितेन सूचितः तम् (०० तत्पु०)।

कोशः—'तुषारस्तुहिनं हिमम्। 'कूटोऽस्त्री शिखरं शृङ्गम्'। 'विशदश्येतपाण्डुराः' 'स्तोमौघनिकरव्रातावारसङ्घातसञ्चयाः' सर्वत्राऽप्यमरकोशः।

व्याकरणम्—प्रभा प्रभाति इति 'आतश्चोपसर्गे' इति कः। शिखरम्–शिखां राति, रा दाने. कः। अम्बुमुचाम्–अम्बुमुचाम्+क्विप्+आम्। चयः–चिञ् चयने; 'एरच्' इति अच् प्रत्ययः।

पदार्थ—अनेकमणिप्रभैः=अनेक मणियोंकी प्रभाओं वाले। हिमपाण्डुभिः=बरफसे सफेद, शिखरैः=शिखरोंसे। ससुरचापं=इन्द्रधनुपके सहित। अपयोविशं=जलरहित होनेसे शुभ्र। अविचलं=निश्चल। ध्वन्तिसचितं=शब्दसे प्रतीत होनेवाले। अम्बुमुचां चयं=बादलोंके समूहको, उपविभ्रतं=धारण करते हुए।

हिन्दी—अनेक वर्णवाली मणिकिरणोंके संमिश्रणसे इन्द्रधनुषका सा रङ्ग हो गया है तथा जलरहित होनेसे बरफ जैसा श्वेत बादल हैं। अतः ऊँचे शिखरोंपर बादलका होना तभी प्रतीत होता है जब वह गरजता है, ऐसे मेघको शिखरोंपर धारण करते हुए 'हिमालयपर, चढ़ा।

अभिप्राय—तात्पर्य यह है कि श्वेत होनेसे बरफसे ढके शिखरोंपर बादलका पृथक् न प्रतीत न होना तो स्वाभाविक ही है किन्तु इन्द्रधनुषसे युक्त होने पर भी वह नहीं पहचाना जाता। क्योंकि अनेक रंगोंवाली मणियोंकी

किरणें परस्पर मिलकर इन्द्रधनुष जैसी ही बनी रहती है। यहाँ तक
स्थितिमें तो यह भ्रान्तिमान् अलंकार होता किन्तु गरजनेपर बादलका निश्
हो जाता है अतः सन्देह अलंकार है ॥ १२ ॥

विकचवारिरुहं दधतं सरः सकलहंसगणं शुचिमानसम्।
शिवमगाऽऽत्मजया च कृतेर्ष्यया सकलहंसगणं शुचिमानसम् ॥१३॥

अन्वयः—विकचवारिरुहं सकलहंसगणं शुचि मानसं सरः दधतं, कृतेर्ष्यया अगाऽऽत्मजया सकलहंसगणं शुचिमानसं शिवं च दधतम् ( उच्छ्रितं हिमाऽचलम् अभिययौ )।

व्याख्या—विकचवारिरुहं पुष्पितकमलं, सकलहंसगणं हंससमूहं, शुचि निर्मलं, मानसं सरः सुप्रसिद्धं सरोविशेषम्, मानसरोवरमिति भावः धारयन्तं, किञ्च कृतेर्ष्यया केनाऽप्यज्ञातकारणविशेषेण कुपितया, अगात्मजया पार्वत्या, सकलहं सविवादं, सगणं प्रमथयुतम्, शुचिमानसं पवित्रचित्तं शिवं शम्भुं, दधतं धारयन्तम्, एतेन अन्यशैलाऽपेक्षया एतस्य वैलक्षण्यं सूचितम् ( उच्छ्रितं हिमाऽचलम् अभिययौ )।

भावार्थः—प्रफुल्लकमलैर्मनोहरं कादम्बवृन्दापूरितं शुचि मानसाख्यं सरः तथा प्रणयकुपितया पार्वत्या कलहायमानं सानुचरमविद्याविनिर्मुक्तचित्तं शिवं च धारयन्तं हिमालयमभिययौ।

समासः—विकचवारिरुहम्-विकचानि वारिरुहाणि यस्मिन् तत् ( बहुव्रीहिः )। सकलहंसगणम्-कलहंसगणैः सहितं तत् (तुल्ययोगबहु०)। कृतेर्ष्यया-कृता ईर्ष्या यया, तया (बहुव्रीहिः)। अगात्मजया-अगस्य आत्मजा तया (ष० तत्पु० )। सकलहम्-कलहेन सहितः तम् ( तुल्ययोगबहु० )। शुचिमानसम्-शुचि मानसं यस्य तम् ( बहुव्रीहिः )।

कोशः—कादम्बः कलहंसः स्यात्'। हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः'। उभयत्राऽप्यमरकोशः। 'शुचिर्ग्रीष्माऽग्निशृङ्गारेष्वाषाढे शुद्धमन्त्रिणि। ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु'। इति मेदिनी। 'कासारः सरसी सरः'। 'प्रमथाः स्युः पारिषदाः'। 'शम्भुरीशः पशुपतिः शिवः'। सर्वत्राऽप्यमरःकोशः।

व्याकरणम्—वारिरुहम्—वारि+रुह्+क+सु=अम् । मानसम्—मन एव मानसम्—अत्र स्वार्थे अण् । मनस्+अण्+सु=अम् ।

पदार्थ—विकचवारिरुहं=खिले हुए कमलोंवाले । सकलहंसगणं=कलहंसोंके समूहसे युक्त । शुचि = पवित्र । मानसं = मानसरोवरको । ( तथा ) कृतेर्ष्यया= प्रणयकुपिता । अगात्मजया = पार्वतीसे । सकलहं = प्रणयकलह करते हुए । सगणं=( प्रमथादि ) गणोंके सहित । शुचिमानसं=निर्विकार चित्तवाले । शिवं= महादेवजीको, दधतं = धारण करते हुए ।

हिन्दी—खिले हुए कमलोंवाले तथा कदम्बसमूहसे पूर्ण, पवित्र मानस सरोवरको, तथा प्रणयकुपिता पार्वतीजीसे प्रणयकलह करते हुए, प्रथमादि गणोंसे युक्त एवं निर्विकार चित्तवाले महादेवजीको धारण करते हुए हिमालय पर, चढ़ा ।

अभिप्राय—साक्षात् शिवजीको अपने में धारण करता है, इससे अन्य पर्वतोंकी अपेक्षा हिमालयकी विशेषता अभिव्यक्त होती है । इस श्लोक में भी भिन्नार्थक स्वरव्यंजन समूहकी आवृत्ति हुई है अतः यमक अलंकार है, और कुपितया अर्थात् किसी कारणसे क्रुद्ध हुई, इसमें पार्वतीका ससत्न्यादि सन्ताप व्यङ्ग्य है । अतः यह अलंकारसे वस्तुध्वनि है ॥ १३ ॥

ग्रहविमानगणानभितो दिवं ज्वलयतौषधिजेन कृशानुना ।
मुहुरनुस्मरयन्तमनुक्षपं त्रिपुरदाहमुमापतिसेविनः ॥ १४ ॥

अन्वयः—दिवम् अभितः ग्रहविमानगणान् ज्वलयता ओषधिजेन कृशानुना अनुक्षपम् उमापतिसेविनः त्रिपुरदाहं मुहुः अनुस्मरयन्तम् (उच्छ्रितं हियाऽचलम् अभिययौ) ।

व्याख्या—दिवम् अभितः खम्परितः ग्रहणविमानगणान् चन्द्रादिग्रहव्योमयानसमूहान्, ज्वलयता प्रदीपतेन, ओषधिजेन तृणविशेषजातेन, कृशानुना वह्निना, अनुक्षपम् प्रतिक्षपम्, उमापतिसेविनः शिवसेवकान्, त्रिपुरदाहं त्रिपुरदहनम्, मुहुः वारं वारम्, अनुस्मरयन्तम् अनुस्मृतं कुर्वन्तम् ( उच्छ्रितं हिमाचलऽचलम् अभिययौ ) ।

भावार्थः—अयं हिमाचलः आकाशे चतुर्दिक् प्रसृतान् ग्रहगणान् देवयानानि च स्वकीयवस्पतिभिर्निर्गतेन वह्निना प्रकाशयति । येन प्रतिरात्रौ

प्रज्वलितं तं वह्निं दृष्ट्वा शिवगणाः शिवेन कृतं त्रिपुरदाहं स्मरन्ति । तादृशं हिमाचलमभिययौ ।

समासः—ग्रहविमानगणान्—ग्रहाः च विमानानि च (द्वन्द्वः)तेषां गणाः तान् (ष० तत्पु०) । अनुक्षपम्—अत्र वीप्सार्थेऽव्ययीभावः । उमापतिसेविनः—उमापतिं सेवन्ते तच्छीलाः तान् (उपपद०) त्रिपुरदाहम्—त्रयाणां पुराणां समाहारः त्रिपुरं (द्विगुः) त्रिपुरस्य दाहः तम् (ष० तत्पु०) ।

कोशः—'द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम्' । 'व्योमयानं विमानोऽस्त्री' । 'कृशानुः पावकोऽनलः' । 'निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा' । 'मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत् समाः' । सर्वत्राप्यमरःकोशः ।

व्याकरणम्—दिवम् अभितः-अत्र 'अभितः परितः समया निकषा हा प्रतियोगेऽपि' । द्वितीया विभक्तिः । ज्वलयता—ज्वल्+णिच्+शतृ+टा । 'मितां ह्रस्वः'-इति ह्रस्वः । ओषधिजेन—ओषधि + जन्+ड+टा । 'पञ्चम्यामजातौ'—इति ड प्रत्ययः । उमापतिसेविनः—उमापति+सेव+णिनि=शस् । अनुस्मरयन्तम्-अनु + स्मृ + णिच्+शतृ + अम् ।

पदार्थ—दिवम् अभितः=स्वर्गके चारों ओर । ग्रहविमानगणान्=नक्षत्रों देवताओंके विमानोंको । ज्वलयता=प्रकाशित करते हुए । ओषधिजेन=वनस्पतियोंसे निकले हुए । कृशानुना=अग्निसे, अनुक्षपं=प्रत्येकरात्रिमें । उमापतिसेविनः=शिवके सेवकों ( प्रमथादि ) को । त्रिपुरदाहं=त्रिपुरदाहका । मुहुः=बारबार । अनुस्मरयन्तं=स्मरण कराते हुए ।

हिन्दी—यह हिमालय आकाशमें चारों ओरके नक्षत्रों एवं विमानोंको अपनी वनस्पतियोंसे निकलती हुई अग्नियों द्वारा प्रकाशित करता हुआ यह हिमाचल प्रतिदिन रात्रमें उस अग्निसे शिवजीके गणोंको त्रिपुरदाहका स्मरण कराता है । उस हिमालय पर चढ़ा ।

अभिप्राय—हिमालयमें ऐसी ओषधियाँ और वनस्पति होते हैं जो रात्रिमें दीपककी तरह प्रकाश करते हैं ( तु०—भास्वन्ति रत्नानि महोषधीश्च ) । उन वनस्पतियोंके अधिक संख्यामें होनेसे वह प्रकाश इतना तीव्र होता है कि उससे आकाशके तारे तथा विमान आदि साफ-साफ दिखाई देते हैं और उससे

शिवजी के गणों को वह दृश्य स्मरण हो आता है जबकि शिवजीने त्रिपुरदाह किया था। त्रिपुरदाह—तारकाक्ष, कमलाक्ष और विद्युन्माली नामके तीन दानवों ने मय नामके अत्यन्त कुशल दैत्यशिल्पीसे अपने लिये स्वर्ग, मृत्यु और पाताल लोकमें क्रमसे सुवर्ण, चांदी और लोहेका एक-एक पुर (नगर) बनवाया था और ब्रह्मासे यह वरदान प्राप्त किया था कि जो व्यक्ति एक ही बाणसे इन तीनों पुरोंको नष्ट करे, उसके ही हाथसे हमारी मृत्यु हो। देवताओंकी प्रार्थनापर भगवान् शंकरने एक ही बाणसे इन तीन पुरोंको जलाकर उसे नष्ट किया था। इसीलिये वे त्रिपुरारि कहे जाते हैं॥ १४॥

विततशीकरराशिभिरुच्छ्रितैरुपलरोधविवर्तिभिरम्बुभिः।
दधतमुन्नतसानुसमुद्धतां धृतसितव्यजनामिव जाह्नवीम्॥ १५॥

अन्वयः—विततशीकरराशिभिः उच्छ्रितैः उपलरोधविवर्तिभिः अम्बुभिः धृतसितव्यजनाम् इव उन्नतसानुसमुद्धतां जाह्नवीं दधतम् (उच्छ्रितं हिमाऽचलम् अपिययौ)।

व्याख्या—विततशीकरराशिभिः विस्तीर्णजलकणग्रामैः। उच्छ्रितैः उद्गतैः, उपलरोधविवर्तिभिः प्रस्तररोधविवर्तनशीलैः, अम्बुभिः जलैः हेतुभिः, धरणे इव गृहीतश्वेतचामराम् इव, उन्नतसानुसमुद्धताम् उच्चप्रस्थप्रदेशेषु वहन्तीं जाह्नवीं जह्नुपुत्रीं गङ्गां, दधतं धारयन्तम् (उच्छ्रितं हिमाचलम् अपिययौ)। धृतसितव्यजनामिवेत्युत्प्रेक्षाऽलङ्कारः।

भावार्थः—विस्तृतशीकरपुञ्जैरुच्छलद्भिः शिलावरोधेन विवर्तमानैर्जलैः धृतधवलचामरामिव स्थितामुन्नतशिखरेषु प्रवहन्तीं जाह्नवीं दधतं हिमालयमपिययौ।

समास—विततशीकरराशिभिः—वितताः च ते शीकराः (कर्मधारयः) विततशीकराणां राशयः तैः (ष० तत्पु०)। उपलरोधविवर्तिभिः—उपलानां रोधः (ष० तत्पु०) तेन विवर्तन्ते तच्छीलानि तैः। धृतसितव्यजनाम्—सितं च तत् व्यजनम् (कर्मधारयः) धृतं सितव्यजन यया ताम् (बहुव्रीहिः)। उन्नतसानुसमुद्धताम्—उन्नताः च ते सानवः (कर्मधारयः) तेषु समुद्धताः ताम् (स० तत्पु०)।

कोश:—'शीकरोऽम्बुकणा: स्मृता:'। 'पाषाणप्रस्तरग्रावोपलाऽश्मान: शिला दृषत्'। 'स्नु: प्रस्थ: सानुरस्त्रियाम्'। सर्वत्राऽप्यमर: कोश:।

व्याकरणम्—उपलरोधविवर्तिभि:—उपलानां रोधेन विवर्तन्ते तच्छीलानि तै:, अत्र 'ताच्छील्ये णिनि:'—इति णिनिप्रत्यय:। दधतम्—धा+शत्रम्। शीकरशब्द: तालव्यादि: दन्त्यादिश्च भवति।

पदार्थ—विततसिकरराशिभि:—विस्तृत जल कण समूहों से। उच्छितै:=उड़ाई गई। उपलरोधविवर्तिभि:=पत्थर को अवरोध फैलने वाली। अम्बुभि:=जलकणों से। धृतसितव्यजनां=श्वेत चमर धारित की तरह। उन्नतसानुसमुद्धतां=ऊँची पहाड़ियों से युक्त टकरा वाली। जाह्नवीं=गङ्गाको। दधतम्=धारण करती हुई। उच्छ्रितं=उन्नत। हिमाचलम्=हिमालय को। अभिययौ=गये।

हिन्दी—ऊँचे शिखरों परसे प्रवाहित तथा बीचमें बड़े-बड़े पत्थरोंसे टकराकर घूमते हुए एवं फौव्वारेकी तरह ऊपर उछलते हुए जलोंसे श्वेत चँवर धारण की हुई-सी गंगाको धारण करते हुए हिमालयपर चढ़ा।

अभिप्राय—पहाड़पर बहनेवाली नदियोंमें यों ही वेग तीव्र होता है, बीचमें बड़े-बड़े चट्टान् आनेपर वह वेगसे आता हुआ जल सहसा उनसे टकराता है तो पानीकी असंख्य बूँदें ऊपरको उछलती है जिन्हें कविने चँवरकी उपमा दी है। इस श्लोकमें सर्गसे प्रारम्भ किया हुआ १५ श्लोकोंका कुलक तथा कविकृत हिमालय वर्णन समाप्त हो जाता है। इसके बाद यक्ष द्वारा हिमालय वर्णन प्रारम्भ होता है ॥१५॥

अनुचरेण धनाऽधिपतेरथो नगविलोकनविस्मितमानस:।
स जगदे वचनं प्रियमादरान् मुखरताऽवसरे हि विराजते ॥ १६ ॥

अन्वय:—अथो धनाऽधिपते: अनुचरेण नगविलोकनविस्मितमानस: आदरात् प्रियं वचनं जगदे, हि मुखरता अवसरे विराजते।

व्याख्या—अथ अनन्तरं, धनाधिपते: सुरकोषाऽध्यक्षस्य कुबेरस्य, अनुचरेण सेवकेन यक्षेण, नगविलोकनविस्मितमानस: हिमालयपर्वतदर्शनसा[illegible]

यतः। अत्र कालिदासमनुकरोति भारविः, यथा—'इत्यद्रिशोभाप्रहितेक्षणेन।' द्रष्टव्य रघुवंशे २यसर्गे। सः अर्जुनः, आदरात् सम्मानात्,प्रियं मनोहारि, वचनं यतः, जगदे उक्तवान्, 'नाऽपृष्टः कस्यचिद् ब्रूयात्'—इति नीतिवचनमुल्लङ्घ्यापि यं स उक्तवानिति दोषं परिहरन् कथयति—हि यतः, मुखरता वाचालता, अपृष्टपरिभाषितेति भावः। अवसरे समुचिते प्रसङ्गे, विराजते संशोभते। अर्थान्तरन्यासाऽलङ्कारः।

भावार्थः—तदनन्तरमर्जुन पर्वतीयशोभादर्शनेन चकितचित्तं विलोक्य स सहचरो यक्षः सादरं तं जगाद। यतो हि अपृष्टेनापि समये आकांक्षातिमुक्तं वचो शोभते।

समासः—धनाऽधिपतेः—धनस्य अधिपतिः, (ष० तत्पु०)। नगविलोकनविस्मितमानसः—विस्मितं मानसं यस्य सः (बहुव्रीहिः), नगविलोकनेन विस्मितमानसः (तृ० तत्पु०)।

कोशः—'मङ्गलाऽनन्तराऽऽरम्भप्रश्नकार्त्स्न्येष्वथो अथ'। 'मनुष्यधर्मा धनदो राजराजो धनाऽधिपः'। 'अनुप्लवः सहायश्चानुचरोऽभिसरः समाः'। 'विस्मयोद्भुतमाश्चर्यम्'। 'हि हेताववधारणे'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—जगदे—गद व्यक्तायां वाचि, धातोः कर्मणि लिट्। मुखरता—मुखम् अस्ति यस्य सः मुखरः, तस्य भावः तत्तथा, मुखरता। 'रप्रकरणे खमुखकुञ्जेभ्य उपसङ्ख्यानम्'—इति मुखशब्दाद् 'र' प्रत्ययः, मुख+र+सु=मुखरः।

पदार्थ—अथ=इसके बाद। धनाधिपतेः=कुबेरके। अनुचरेण=सेवक (यक्ष) ने। नगविलोकनविस्मितमानसः=पहाड़को देखनेसे चकितचित्तवाले। तम्=उस (अर्जुन) को। आदरात्=सम्मानपूर्वक। प्रियं वचनं=मधुर शब्दों में। जगदे=कहा। हि=क्योंकि। मुखरता=वाचालता। अवसरे=समयपर ही। विराजते=अच्छी लगती हैं।

हिन्दी—तब कुबेरके सेवक यक्षने हिमालयकी शोभा देखनेसे चकितचित्तवाले अर्जुनसे आदरपूर्वक कहा। क्योंकि समयपर बिना पूछें कही हुई बात भी अच्छी लगती है।

अभिप्राय—मुखरताका अर्थ है वावदूकता अर्थात् बहुत या निष्प्रयोजन बोलना। नीतिका वाक्य है—'नापृष्टः कस्यचित् ब्रूयात्' अर्थात् बिना पूछे किसीको उत्तर नहीं देना चाहिये। किन्तु अवसरके अनुसार कही हुई वाणी चाहे बिना किसीके पूछे ही क्यों न कही जाय, अच्छी ही लगती है ॥ १६ ॥

अलमेष विलोकितः प्रजानां सहसा संहतिमंहसां विहन्तुम्।
घनवर्त्म सहस्रधेव कुर्वन् हिमगौरैरचलाऽधिपः शिरोभिः ॥ १७ ॥

अन्वयः—हिमगौरैः शिरोभिः घनवर्त्म सहस्रधा कुर्वन् इव एषः अचलाऽधिपः विलोकितः, प्रजानाम् अंहसां सहसा विहन्तुम् अलम्।

व्याख्या—हिमगौरैः तुहिनज्वलैः, शिरोभिः मूर्ध्नी, पर्वतशिखरैरिति, घनवर्त्म मेघमार्गं, सहस्रधा बहुभिः, कुर्वन् इव विदधत् इव, एषः अयम्, अचलाधिपः हिमालयः, विलोकितः इष्टमात्र एव, प्रजानां लोकानाम्, अंहसां पापानां, संहतिं सङ्घातं, सहसा अतर्कित एव, विहन्तुं विनाशयितुम्, अलं समर्थः। श्लोकेऽस्मिन्नुत्प्रेक्षालङ्कारः।

औपच्छन्दसिकं वृत्तं, तल्लक्षणं यथा—'पर्यन्ते यौ तथैव मेषं चौपच्छन्दसिकं सुधीभिरुक्तम्'।

भावार्थः—हिमधवलैः स्वशिखरैराकाशमसंख्यभागेषु विभाजयन् एष पर्वतराजः दृष्टमात्र एव जनानां पापपुञ्जं निवारयितुं समर्थः।

समासः—हिमगौरैः—हिमेन गौराणि तैः (तृ० तत्पु०)। घनवर्त्म-घनानां वर्त्म तत् (ष० तत्पु०)। अचलाऽधिपः—अचलानाम् अधिपः (ष० तत्पु०)।

कोषः—'उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्'। अयनं वर्त्म मार्गाऽध्वपन्थानः पदवी सृतिः'। 'प्रजा स्यात्सन्ततौ जने'। 'कलुषं वृजिनं नोऽघमहो दुरितदुष्कृतम्' 'अतर्किते तु सहसा' सर्वत्राऽप्यमरकोशः।

व्याकरणम्—सहस्रधा—सहस्र+धा। 'सङ्ख्याया विधाऽर्थे धा'—इति धा प्रत्ययः। प्रजानाम्—प्रजायन्ते इति प्रजाः, 'उपसर्गे च संज्ञायाम्—इति ड प्रत्ययः। प्र+जनी+ड+आम्। विहन्तुम्—वि+हन्+तुमुन्।

पदार्थ—हिमगौरैः=बरफसे श्वेत हुई। शिखरैः=चोटियोंसे। घनवर्त्म=
मेघोंके मार्ग (आकाश) को। सहस्रधा कुर्वन् इव=हजारों टुकड़े करता हुआ
सा। एषः अचलाधिपः=यह पर्वतराज। विलोकितः=दर्शनमात्रसे। प्रजानां=
लोगोंके। अंहसां संहतिं=पापोंके समूहको। सहसा विहन्तुम्=एकाएक नष्ट
करनेमें। अलं=पर्याप्त है।

हिन्दी—बरफसे श्वेत अपनी चोटियों द्वारा आकाशको हजारों भागोंमें
विभक्त करता हुआ सा यह पर्वतराज देखने मात्रसे लोगोंके पापसमूहोंको सहसा
नष्ट करनेमें समर्थ हैं॥ १७॥

इह दुरधिगमैः किञ्चिदेवाऽगमैः सततमसुतरं वर्णयन्त्यन्तरम्।
अमुमतिविपिनं वेद दिग्व्यापिनं पुरुषमिव परं पद्मयोनिः परम्॥१८॥

अन्वयः—इह असुतरम् अन्तरं दुरधिगमैः आगमैः किञ्चिदेव सततं वर्ण-
यन्ति, अतिविपिनं दिग्व्यापिनम् अमुं परं पुरुषम् इव परं पद्मयोनिः वेद।

व्याख्या—इह अत्र हिमालये, असुतरं दुस्तरम्, अन्तरम् मध्यभागं, पुरुष-
पक्षे तत्त्वम्। दुरधिगमैः दुरारोहैः, अन्यत्र दुर्ग्रहैः, आगमैः, वृक्षैः, अन्यत्र पुरा-
णादिभिः। किञ्चिदेव स्वल्पमेव, सततं प्रतिक्षणं, वर्णयन्ति प्रतिपादयन्ति,
सर्वथा तु काचित् प्रत्यक्षेणाऽपि निःशेषैः ज्ञातुमशक्यत्वादित्याऽऽशयः। किन्तु
अतिविपिनं काननमतिक्रामन्तम्, अन्यत्र अतिगहनम्। दिग्व्यापिनं दिशाव्याप-
कं, अमुम् पर्वतं हिमालयमिति शेषः। परम्पुरुषम् इव परम्पुरुषम् इव, परं
केवलम्, पद्मयोनिः कमलजन्मा ब्रह्मेति भावः, वेद जानाति।

श्लोकेऽस्मिन् समाभिक्षं वृत्तं, तल्लक्षणं—यथा 'तुरगसयतिर्नौ भरौ गः क्षमा'। श्लोकेऽ-
स्मिन् उपमायमकाऽलङ्कारयोः संसृष्टिः।

भावार्थः—दुरारुढैर्वृक्षैर्दुस्तरमेतस्य गिरेर्मध्यं जनाः स्वल्पांशेनैव वर्ण-
यितुं शक्नुवन्ति, अतिगभीरैर्वनैः दिक्पर्यन्तं प्रसृतमेव परं पुरुषमिव वर्णयितुं तु
केवलं ब्रह्मैव जानाति।

समासः—असुरतम्—न सुरतम् (नञ्०)। अतिविपिनम्—विपिनम् अति-
क्रान्तः, तम् 'अत्यादयः क्रान्ताद्यर्थे द्वितीया'—इति समासः। पद्मयोनिः—पद्मं
योनिः यस्य सः (बहुव्रीहिः)।

कोष:—'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्यमरः। 'पुराणे-ष्वागमे वृक्षे'—इति रुद्रः। 'सततानारताश्रान्तसन्तताविरतानिशम्'। 'अटव्यरण्यं विपिनं गहनं काननं वनम्'। 'परमव्ययमिच्छन्ति केवले'—इति विश्वः। 'पद्मयोनिः प्रजापतिः'—इत्यमरकोशः।

व्याकरणम्—सुतरम्—सु+तॄ+खल्+अम्। 'ईषद्दुःसुषु कृच्छ्राऽकृच्छ्रार्थेषु खल्' सति खल् प्रत्ययः। दुरधिगमैः—दुर्+अधि+गम्+खल्+भिस्। दिग्व्यापिनम्—दिक्+व्याप्लृ+णिनि+अम्। वेद—विद्+लट्+तिप् = णल्। विदो लटो वा'—इति णलाऽऽदेशः।

पदार्थ—इह=इस पर्वतके। असुतरं=जो सुखसे पार करने योग्य नहीं (अर्थात् दुस्तर)। अन्तरं=मध्य भागको। दुरधिगमैः=जिनपर चढ़नेमें कठिनता होती है ऐसे। आगमैः=वृक्षोंसे। किञ्चित् एव=थोड़ा ही (कुछ ही अंशोंमें) वर्णयन्ति=वर्णन करते हैं। अतिविपिनं=अत्यन्त वनोंवाले। दिग्व्यापिनं=दिशाओं में व्याप्त। अमुं=इस पर्वतको, [अतिविपिनं=अतिगहन तथा दिग्व्यापी] परं पुरुषमिव=परब्रह्म परमात्माकी तरह। पर=केवल। पद्मयोनिः एव=ब्रह्मा की। वेद=जानते हैं।

हिन्दी—दुरारूढ़ वृक्षोंसे दुस्तर इस पर्वतके मध्यभागका थोड़ा ही अंश लोग निरन्तर वर्णन करते हैं। अत्यन्त वनोंवाले तथा दिशाओंके छोर तक फैले हुए इसको अतिगम्भीर तथा सर्वव्यापी परमपुरुषकी तरह विधाता ही जानते हैं।

अभिप्राय—इसमें हिमालयकी उपमा परम पुरुष परमात्मासे दी गयी है। जैसे परमात्माके दुस्तर एवं रहस्यमय स्वरूपके केवल सगुण अंशका ही लोग पुराणादि ग्रन्थों द्वारा निरन्तर वर्णन करते हैं, पूरेको तो केवल ब्रह्मा ही जान सकते हैं। क्योंकि वे ही वेदके ज्ञाता है और वेद ही परमात्माके स्वरूपका निरूपण करता है। उसी प्रकार इस हिमालयके भी दुरूह वृक्षोंसे घिरे मध्यभागका ही लोग वर्णन कर पाते। अत्यन्त घने जंगलोंसे घिरा यह दिशाओंके छोरों तक फैला है, अतः सम्पूर्ण रूपसे इसका वर्णन विधाता ही कर सकते

क्योंकि वे जगत्‌के निर्माण कर्त्ता हैं। मल्लिनाथने इस पद्यको क्षमा छन्द कहकर लक्षण दिया है--"नौ भरौ गः क्षमा" जो इस पद्यमें घटना नहीं। वास्तवमें यह चन्द्रिका छन्द है, जिसका लक्षण है--"न न त त चन्द्रिकाऽश्वर्तुभिः"—(छन्दोमंजरी)। इसीको कुछ लोगोंने उत्पलिनी नामसे भी कहा है॥ १८॥

**रुचिरपल्लवपुष्पलतागृहैरुपलसज्जलजैर्जलराशिभिः ।**
**नयति सन्ततमुत्सुकतामयं धृतिमतीरुपकान्तमपि स्त्रियः॥ १९॥**

**अन्वयः**—अयं रुचिरपल्लपुष्पलतागृहैः उपलसज्जलजैः जलराशिभिः उपकान्तं धृतिमतीः अपि स्त्रियः सन्ततम् उत्सुकतां नयति।

**व्याख्या**—अयं पर्वतः, रुचिरपल्लवपुष्पलतागृहैः मनोहरकिसलयकुसुमवल्लियुतभवनैः, उपलसज्जलजैः शोभमानकमलैः, जलराशिभिः सरोवरैः किरणैः। उपकान्तं पत्युः समीपे, धृतिमतीः अपि धैर्यशालिन्यः अपि, समीपस्थानपि प्रियान् न गणयन्तीः मानिनिरिति भावः। अथवा धृतिमतीः अपि संभोगतृप्ता अपि स्त्रियः सुवासिन्यः, सन्ततं निरंतरम्, उत्सुकताम् उत्कण्ठितां, नयति प्रापयति। अतिशयोक्तिरलङ्कारः।

**भावार्थः**—कोमलकिसलयसुमनयुतैर्लता निकुञ्जैः विकचारविन्दशोभितैः सरोभिश्चायं पर्वतः पूर्णतृप्तसुरता अपि प्रियतमपार्श्वस्थिताः स्त्रियः पुनः सुरतसेवनाय उत्साहयति।

**कोशः**—'सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्'। 'वल्ली तु व्रततिर्लता'। 'स्त्री योषिदबला योषा नारी सीमंतिनी वधूः'। 'सततानारताश्रान्तसन्तताविरताऽनिशम्'। सर्वत्राऽप्यमरकोशः।

**व्याकरणम्**—उपलसज्जलजैः-उप+लस्+शतृ+जल+जन्+ड+भिस्। धृतिमतीः—धृति+मतुप्+ङीप्। 'तदस्याऽस्त्यस्मिन्निति मतुप्'-इति मतुप्। 'उगितश्च'—इति ङीप्। उत्सुकताम्—उत्सुक+तल्+टाप्+अम्। नयति—अत्र नयतेः द्विकर्मकत्वात् लटि रूपम्।

**समासः**—रुचिरपल्लवपुष्पलतागृहैः—रुचिराणि पल्लवानि पुष्पाणि येषां तैः (बहुव्रीहिः)। लतानां गृहाः (ष० तत्पु०) रुचिरपल्लवपुष्पाः लतागृहाः येषां

ते तैः (बहुव्रीहिः)। उपलसज्जलजैः—उपलसन्ति जलजानि येषु ते, तैः (बहु-व्रीहिः)। उपकान्तम्—कांतस्य समीपे (अव्ययीभावः)। धृतिमतीः—धृतिः अस्ति यासां ताः धृतिमत्यः, ताः (बहुव्रीहिः)।

**पदार्थ**—अयं=यह (पर्वत)। रुचिरपल्लवपुष्पलतागृहैः=मनोहर किसलय तथा फूलों से युक्त लतागृहोंसे। उपसज्जलजैः=कमलोंसे शोभायमान। जलराशिभिः=सरोवरोंसे। उपकान्तं=प्रियतमोंके समीप। घृतिमतीः अपि=धृतिवाली भी। स्त्रियः=स्त्रियोंको। सन्ततं=निरन्तर। उत्सुकतां=उत्कण्ठा। नयति=प्राप्त करा देता है।

**हिन्दी**—कोमल पल्लवों एवं पुष्पोंसे युक्त लताभवनों तथा खिले कमलपूर्ण सरोवरों द्वारा यह पर्वत सुरतमें पूर्ण तृप्त हुई स्त्रियोंको भी पतिके समीप होनेपर पुनः सुरतके लिए उत्कण्ठित करता है।

**अभिप्राय**—धृतमतीः का अर्थ मल्लिनाथने जो मानिनीः किया है हमें उचित प्रतीत नहीं होता। धृतिमतीः यही अर्थ उचित है। धृति-एक व्यभिचारी भाव है। इसका लक्षण साहित्यदर्पणकारने यों किया है—

ज्ञानाभीष्टागमाद्यैस्तु संपूर्णस्पृहता धृतिः
सौहित्यवचनोल्लाससहासप्रतिभादिकृत्।

अर्थात् तत्त्वज्ञान, इष्टप्राप्ति आदिके कारण इच्छाओंका पूर्ण हो जाना धृति कहलाता है। संतृप्तता, आनंदपूर्ण वचनावली, मधुरस्मित तथा बुद्धि-विकास ये इसके लक्षण होते हैं। इस परिभाषाके अनुसार मानिनीको धृतिमती नहीं कहा जा सकता। मानिनियों को उत्कण्ठित कराना पर्वतप्रशंसामें उतना महत्त्वपूर्ण भी नहीं है जितना कि पूर्णतृप्ताको पुनः उत्सुक कराना। यह द्रुत-विलम्बित छन्द है जिससे सर्गका प्रारम्भ हुआ था ॥१९॥

सुलभैः सदा नयवताऽयवता निधिगुह्यकाऽधिपरमैः परमैः।
अमुना धनैः क्षितिभृता समतीत्य भाति जगती जगती ॥२०॥

**अन्वयः**—नयवता अयवता सदा सुलभैः निधिगुह्यकाऽधिपरमैः परमैः धनैः अमुना क्षितिभृता अतिभृता जगती जगती समतीत्य भाति।

व्याख्या—नयवता नीतविदा, अयवता सौभाग्येन, सदा सर्वदा, सुलभैः प्राप्यैः, स्थाय्यैरित्याशयः। निधिगुह्यकाऽधिपरमैः महापद्माऽऽदियक्षेश्वररमैः, परमैः सर्वोत्कृष्टैः, धनैः द्रव्यैः, करणैः अमुना एतेन, क्षितिभृता हिमालयपर्वतेन पतिभृता पूर्णा सती, जगती पृथ्वी, जगती लोकौ, स्वर्गपातालेत्याऽऽशयः, समतीत्य अतिक्रम्य भाति शोभते। इह देवदुर्लभा अपि सम्पत्तयः सम्भवन्तीति पुच्यते।

प्रमिताक्षरावृत्तम्। तल्लण यथा—'प्रमिताक्षरा सजससैरुदिता'। श्लोकेऽस्मिन् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। एतस्य यमकेन सह संसृष्टिः।

भावार्थः—नीतिमद्भिर्भाग्यवद्भिश्च सदालभ्यैः निधीनां गुह्यकानां चाधिपं कुबेरमप्याह्लादद्भिरुत्कृष्टैः धनैः एतद्द्वारापूरिता मही इतरलोकावतीत्य शोभते।

समासः—निधिगुह्यकाऽधिपरमैः—निधयः च गुह्यकाः च (द्वन्द्वः) निधिगुह्यकानाम् अधिपः (ष० तत्पु०) तं रमयन्तीति तैः। क्षितिभृता–क्षितिं बिभर्तीति; क्षीतिभृत् तेन (उपपद०)।

कोशः—'अयः शुभवाहो विधिः'। निधिभेदाः–'महापद्मश्च पद्मश्चो शङ्खो मकरकच्छपो। मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव'। 'भूतधात्री रत्नगर्भा जगती सागराऽम्बरा'। 'त्रिष्वथो जगती लोको विष्टपं भुवनं जगत्'। सर्वत्रामरः कोशः।

व्याकरणम्—नयवता–नय+मतुप् + टा। अयवता—अय + मतुप्+टा। सुलभैः—सु+लभ्+अच्+भिस्। क्षितिभृता–क्षिति + भृ+क्विप्+टा। समतीत्य–सम्+अति+इण्+ल्यप्। भाति–भा दीप्तौ+लट्=तिप्।

पदार्थ—नयवता = नीतिमान्। (और) अयवता = भाग्यवान्से। सदा सुलभैः = नित्य आसानीसे पाये जाते हुए। निधिगुह्यकाधिपरमैः=निधियाँ = पद्मादि, गुह्यकों = यक्षोंके, अधिप = स्वामी कुबेरको, रमैः = आनन्द देनेवाले। परमैः = उत्कृष्ठ। धनैः=रत्नादिसे। अमुना=इस। क्षितिभृता=पर्वतके द्वारा। भृता = अत्यन्त भरी हुई। जगती = पृथ्वी। जगती=अन्य दो लोकों (स्वर्ग

और पाताल ) को। समतीत्य=अतिक्रमण करके। भाति=शोभित रही है।

हिन्दी—नीतिमानों तथा भाग्यवानों को सदा सुलभ तथा निधियोंके स्वामी कुबेरको आनन्दित करनेवाले श्रेष्ठ रत्नादिसे इस पर्वतने पृथ्वीको पूर्ण रूपसे भर दिया है अतः यह शेष दो लोकों ( स्वर्ग और पाताल ) से बढ़कर शोभित हो रही है।

अभिप्राय—धनके स्वामी कुबेर हैं वह या तो उन्हींके पास रहता है जो नीतिमान् हैं और अच्छे भाग्यवाले हैं उनके पास जाता है। प्रस्तुत श्लोक में ये दोनों धनके विशेषण दिये हैं। निधियां नौ है—पद्म, महापद्म, शङ्ख, मकर, कच्छप, मुकुन्द, कुन्द, नील और खर्ब। कुबेरको भी यह सारी सम्पत्ति हिमालयसे ही प्राप्त हुई हैं यह भाव है। चूंकि हिमालय इस पृथ्वी पर है अतः यह जगती ( प्रथमा एकवचन=भूमि ) शेष जगती। जगत् (नपुं०) ( द्वितीया द्विवचन ) अर्थात् दो भूमियों ( स्वर्ग और पाताल लोक ) से बढ़कर है। जगतीका धनोंसे अत्यन्त भर जाना, उसके द्वारा शेष लोकोंका अतिक्रमण करनेमें हेतु दिखाया गया है अतः काव्यलिङ्ग अलङ्कार है। प्रमिताक्षरा छन्द हैं ॥ २० ॥

अखिलमदिममुष्य गौरीगुरोस्त्रिभुवनमपि नैति मन्ये तुलाम्।
अधिवसति सदा यदेनं जनैरविदितविभवो भवानीपतिः ॥ २१ ॥

अन्वयः—अमुष्य गौरीगुरोः इदम् अखिलम् त्रिभुवनम् अपि तुलां न एति मन्ये, यत् जनैः अविदितविभवः भवानीपतिः सदा एनम् अधिवसति।

व्याख्या—अमुष्य अस्य, गौरीगुरोः हिमालयस्य। इदम् एतत्, सम्पूर्णंत्रिभुवनम् अपि लोकत्रयम् अपि, तुलां समता, न एति न लभते, विचारयामि। अत्र कारणं निर्दिशति यत्—यस्मात् कारणात् जनैः लोकैः अविदितविभवः अविज्ञातैश्वर्यः भवानीपतिः शिवः सदा अहर्निशम्, एनम् हिमालयपर्वतम्, अधिवसति आवसति। शिवस्य निवासाद् हिमालयोऽयं श्रेष्ठमित्यभिप्रायः।

प्रभावृत्तम् । तल्लक्षणं यथा-'स्वरशरविरतिर्ननौ ररौ प्रभा' । श्लोकेऽस्मि-न्नुत्प्रेक्षाऽलङ्कारः ।

अत्र भवानीपतिशब्दः 'विरुद्धमतिकृतत्' दोषम् उद्भावयति, पत्यन्तर-प्रतीतेः कारणात् । यथाऽऽह जयदेवः चन्द्रालोके—'अपराधीन इत्यादिर्विरुद्ध-मतिकृन्मतम्' ।

भावार्थः—इदं सम्पूर्णमपि त्रिभुवनस्य हिमालयस्य समतां कर्त्तुं नार्हति यतो जनैरज्ञातमहिमा भगवान् शंकरः सदैवात्र वसति ।

समासः—गौरीगुरोः—गौर्याः गुरुः तस्य (ष० तत्पु) । त्रिभुवनम्-त्रयाणां भुवनानां समाहारः (द्विगुः) । अविदितविभवः-न विपितः (नञ्०) । अविदितः विभवः यस्य सः (बहुव्रीहिः) । भवानीपतिः-भवान्याः पतिः (ष० तत्पु०) ।

कोशः—'विश्वमशेष कृत्स्नं समस्तनिखिलाखिलानि निःशेषम्' । त्रिष्वथो जगती लोको विष्टपं भुवनं जगत्' । हिरण्यं द्रविणं द्युम्नमर्थरै विभवा अपि' । सर्वदा सदा' । सर्वत्राऽप्यमरकोशः ।

व्याकरणम् —भवानी-भवस्य पत्नी भवानी, भव+आनुक्+ङीष् । एनम् अधिवसति—अत्र 'उपान्वध्याङ् वसः'-पाणिनीयशासनाद् अधिवसति क्रियायाः योगे आधारस्य कर्मसंज्ञा । 'कर्मणि द्वितीया'—इति द्वितीया ।

पदार्थ—अमुष्य = इस । गौरीगुरोः = पार्वतीके पिता (हिमालय) की । इदं = यह । अखिलमपि = सम्पूर्ण भी । त्रिभुवनं = त्रिभुवन । तुलां = समानता को । न एति = नहीं प्राप्त होता । (इति) मन्ये = ऐसा मैं समझता हूँ । यत् = क्योंकि जनैः = लोगोंसे । अविदितविभवः = नहीं जाना गया है वैभव जिनका ऐसे । भवानीपतिः = शिवजी । सदा = नित्य ही । एनम् = इसमें । अधिवसति = वास करते हैं ।

हिन्दी यह सारा त्रिभुवन भी इस हिमाचलकी बराबरी नहीं कर सकता । क्योंकि लोग जिसके ऐश्वर्यकी कल्पना नहीं कर सकते । ऐसे भगवान् शंकर सदा ही इसमें रहते हैं ।

अभिप्राय—भगवान् शंकर सदाशिव और जगत्के आदि कारण हैं अतः उनका ऐश्वर्य ही संसार की उत्पत्ति, रक्षा और प्रलय करनेवाला है । इसीलिए

पुष्पदन्तने महिम्नस्तोत्रमें कहा है--तवैश्वर्यं यत्तज्जयरक्षाजगदुदप्रलयकृत्--आदि। ऐसे, ऐश्वर्यके निधान शंकर इसी हिमालयके एक शिखर कैलाशपर रहते हैं अर्थात् ऐश्वर्य की जड़ ही जहाँ रहती है, उसके ऐश्वर्य की क्या कल्पना की जा सकती है। वास्तवमें यह मन्दाकिनी छन्द है। इसका लक्षण है--"न र र घटिता तु मन्दाकिनी" और इसका उदाहरण छन्दोमंजरी में दिया है--

बलिदमनविधौ बभौ संगता पदजलरुहि यस्य मन्दाकिनी।
सुरनिहितसिताम्बुजसन्निभा हरतु जगदघं स पीताम्बरः ॥२१॥

**वीतजन्मजरसं वरं शुचि ब्रह्मणः पदमुपैतुमिच्छताम्।**
**आगमादिव तमोपहादितः सम्भवन्ति मतयो भवच्छिदः॥ २२॥**

अन्वयः—वीतजन्मजरसं ब्रह्मणः परं शुचि पदम् उपैतुम् इच्छताम् आगमात् इव तमोपहात् इतः भवच्छिदः मतयः सम्भवन्ति।

व्याख्या—वीतजन्मजरसं निवृत्तजननवार्द्धकं, ब्रह्मणः परब्रह्मणः, परं सर्वोत्कृष्टं, शुचि पवित्रम् अतएव निष्कलङ्कम्, पदं स्थानं, कैवल्यमित्याशयः। उपैतुं, लब्धुम्, इच्छतां काङ्क्षताम्, मुमुक्षूणाम्, आगमात् इव शास्त्रात् इव, तमोपहात् ध्वान्तध्वंसकात्, अविद्यानिवर्तकादिति भावः। इतः अस्मात् हिमालयात्, भवच्छिदः संसारनिवर्तकाः, मतयः बुद्धयः, तत्त्वज्ञानरूपा इत्याऽऽशयः। संभवन्ति समुत्पद्यन्ते। अत्र हिमालये भुक्तिमुक्तिकरत्वम् इति भावः। रथोद्धतावृत्तं, तल्लक्षणं यथा—'रान्नराविह रथोद्धता लगौ' श्लोकेऽस्मिन् उपमाऽलङ्कारः।

भावार्थः—जरामृत्युविवर्जितं परं पवित्रं मुक्त्याख्यं पदमभिलषतां जनानां कृते शास्त्रादिवदस्मात्पर्वतादज्ञातनिवारकाज्जन्ममरणोन्मूलिन्यो मतय उद्भवन्ति।

समासः—वीतजन्मजरसम्—जन्म च जरा च जन्मजरसौ (द्वन्द्वः), वीते जन्मजरसौ यस्य तत् (बहुव्रीहिः)। तमोपहात्—तमः अपहन्तीति तमोपहः तस्मात् (उपपद०)। भवच्छिदः–भवं छिन्दन्तीति ते (उपपद०)।

कोशः—'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः'। 'प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि'। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु'। 'बुद्धि

मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः'। सर्वत्राऽप्यमरकोशः। शुचिर्ग्रीष्माग्नि-शृङ्गारेष्वाषाढ़े शुद्धमन्त्रिणि। ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु'-इति मेदिनी।

व्याकरणम्—जरसम्—'जराया जरसन्यतरस्याम्'—इति जरा शब्दस्य जरस् आदेशः। पदम्—पद्यते इति, पद्+अच्+सु=अम्, 'पचाद्यच्'—इति अच् प्रत्ययः। तमोपहात्—यमस्+अप+हन्+ड+ङसि। 'अपेः क्लेशतमसोः'—इति ड प्रत्ययः। इतः-इदम्+इश्+तसिल्, 'पञ्चम्यास्तसिल्'—इति तसिल् प्रत्ययः। भवच्छिदः—भवं छिन्दन्तीति, भव+ छिद्+क्विप्+जस् 'सत्सूद्विद्रुहुः'—इति क्विप्।

पदार्थ—वीतजन्मजरसं, (=वीत=) निवृत्त हो गये हैं (जन्मजरसं=) जन्म और जरा (बुढ़ापा) जिससे ऐसे। परं शुचि=अत्यन्त पवित्र। ब्रह्मणः पदं=ब्रह्मके स्थान (अर्थात् मुक्ति) को। उपैतुं=पानेके लिए। आगमात् इव=शास्त्रसे जैसे। तमोपहात्=अविद्याके निवर्तक। इतः=इस (हिमालय) से। भवच्छिदः=संसार (=जन्ममरण) का उन्मूलन करनेवाली। मतयः=बुद्धियाँ। सम्भवन्ति=उत्पन्न होती हैं।

हिन्दी—जन्म और वार्द्धक्य से रहित, अत्यन्त पवित्र ब्रह्मपद (मोक्ष) को प्राप्त करनेकी इच्छावाले लोग अज्ञाननिवारक शास्त्रोंसे जैसे, अन्धकारनाशक इस पर्वतसे भी जन्ममरणसे रहित करनेवाली बुद्धियोंको प्राप्त करते है।

अभिप्राय—मुमुक्षुओंके ध्येय योगिराज शिव हिमालय पर रहते हैं, हिमालयका ध्यान आते ही शिवका स्मरण हो आता है और पापोंका नाश होकर मन एवं बुद्धिका कालुष्य दूर होने लगता है। जैसे शास्त्रोंसे अज्ञान नाशक उपदेश प्राप्त होते हैं और उनसे मनुष्य सन्मार्गमें प्रवृत्त होकर मोक्षको प्राप्त करता है, ऐसे ही हिमालय भी मुमुक्षुओंको मोक्षकी ओर प्रवृत्त करता है। दूसरी बात यह है कि शुद्ध जलवायु, शान्त वातावरण, एकान्तका प्राचुर्य, ...सिल देवताओं के पीठस्थल आदि ऐसी विशेषताएं हिमालयकी हैं जिनसे ...भी अपनी तपोभूमि वहीं बनाते हैं। अतः इसका मोक्षप्रवर्तक होना स्वाभाविक है॥ २२॥

दिव्यस्त्रीणां सचरणलाक्षारागा
रागायाते निपतितपुष्पाऽऽपीडाः।
पीडाभाजः कुसुमचिताः साशंसं
शंसन्त्यस्मिन् सुरतविशेषं शय्याः॥ २३॥

अन्वयः—अस्मिन् सचरणलाक्षारागाः निपतितपुष्पाऽऽपीडाः पीडाभाजः कुसुमचिताः दिव्यस्त्रीणां शय्याः रागायाते साशंसं सुरतविशेषं शंसन्ति।

व्याख्या—अस्मिन् हिमालये, सचरणलाक्षारागाः पादलाक्षारागसोहिताः, निपतितपुष्पाऽऽपीडाः च्युतपुष्पशेखराः, पीडाभाजः विमर्दयुक्ताः कुसुमचिताः पुष्पसमूहच्युतः, दिव्यस्त्रीणां स्वाङ्गनानां, शय्याः तल्पानि, रागायाते रागोद्रेके सति, साशंसं सतृष्णं, सुरतविशेषं निधुवनप्रकारविशेषं, सुरतबन्धविशेषलक्षणानि रतिरहस्ये द्रष्टव्यानि। शंसन्ति सूचयन्ति। जलधरमाला वृत्तम्, तल्लक्षणम्—'भ्मौ स्मौ चेत्स्याज्जलधरमाला'। केषांश्चिन्मते—कान्तोत्पीडा वृत्तम्, तद्यथा—'कान्तोत्पीडा भ्थौ स्मौ'। श्लोकेऽस्मिन् काव्यलिङ्गयमकालङ्कारयोरङ्गाङ्गिभावसङ्करः।

भावार्थः—अस्मिन् पर्वते चरणालक्तकरञ्जितानि निपतितकुसुमशेखराणि विमर्दितकुसुमानि दिव्याङ्गनानां पुष्पास्तरणानि रागोद्रेके साशंसम् सुरतप्रकाराः सूचयन्ति।

समासः—सचरणलाक्षारागाः—लाक्षायाः रागाः (ष. तत्पु) चरणलाक्षारागाः (सं. तत्पु. चरणलाक्षारागैः सहिताः (तुल्ययोगबहु.)। निपतितपुष्पाऽऽपीडाः—पुष्पाणाम् आपीडाः (ष. तत्पु) निपतिताः पुष्पाऽऽपीडाः याभ्यः ताः (बहुव्रीहिः)। पीडाभाजः—पीडां भजन्तीति ताः (उपपद०)। कुसुमचिताः—कुसुमैः चिताः (तृ. तत्पु.)। दिव्यस्त्रीणाम्—दिव्याः च ताः स्त्रियः तासाम् (कर्मधारयः)। साऽऽशंसम्—आशंसया सहितः तत् (तुल्ययोगबहु.)। सुरतविशेषम्—सुरतानां विशेषः तम् (ष० तत्पु०)।

कोशः—'शिखास्वापीडशेखरौ'। 'शय्यायां शयनीयवत्'। उभयत्रामरकोशः। सम्बन्धे सुरते युग्मराशौ मिथुनमिष्यते'—इति व्याडिः।

व्याकरणम्—पीडाभाजः—पीडा+भज०ण्वि=जस् । 'भजो ण्विः'—इति प्रत्ययः । दिव्याः—दिव्+यत्=जस् । 'द्युप्रागुदक्प्रतीचो यत्'—इति यत् प्रत्ययः । शय्याः—शीङ्+क्यप्=जस् । रागायते—राग+आङ्+या+क्त हि । सुरतविशेषम्—'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्'—इति एकवचनत्वम् ।

पदार्थ—अस्मिन्=इस ( हिमालय ) में । सचरणलाक्षारागाः=पैरों में के महावर से चिह्नित । निपतितपुष्पापीडाः=गिरे हैं फूलों के शिखर जिनमें ऐसी । पीडाभाजः=मसली हुई । कुसुमचिताः=फूलों से बनी । दिव्यस्त्रीणां=देवांगनाओं की । शय्याः=शय्याएँ । रागायाते=प्रेमोद्रेक होने पर । साशंसं=इच्छा सहित ( किये हुये ) । सुरतविशेषं=रतिक्रीड़ा के विशेष प्रकारों को । कथयन्ति=कहती हैं ।

हिन्दी—इस पर्वतमें देवाङ्गनाओंको पैरके महावरसे रंगी हुई, गिरे हुए पुष्पशेखरोंवाली, मसली हुई पुष्पशैय्यामें प्रेमके उद्रेकमें किए उनके विशेष प्रकारके रति-बन्धोंको बता रही है ।

अभिप्राय—तात्पर्य यह है कि देवाङ्गनाओंकी इन शैय्याओंसे उनपरकी गई उनकी सुरत क्रीड़ाएँ स्पष्ट ज्ञात हो रही है। जैसे किसीने पुरुषयित (अर्थात् जिसमें स्त्री पुरुषकी भाति ऊपर होकर रतिक्रीड़ा करती है उस) बन्ध का प्रयोग किया तो उसके पैरोंमें लगा हुआ आलता शय्यापर लग गया। किसीने धेनुक (जिसमें स्त्री धेनु=गायके समान चारों हाथ पाँव नीचे टेक लेती और पुरुष सांडकी तरह उसकी पीठपर आरुढ़ होकर रति क्रिया करता है) बन्धका प्रयोग किया तो उसका सिर नीचे की ओर लटकनेसे जूड़ेपर लगी हुई फूलोंकी माला गिर गई है। इस प्रकार और भी बन्धोंके प्रयोगोंसे शय्याओंके फूल मसल गये है। उद्दाम वासना वाले कामियोंके लिए कई प्रकारके इन बन्धोंके स्वरूप रति रहस्य आदि कामशास्त्रके ग्रन्थोंमें उताये गये हैं। यह कान्तोत्पीड़ा छन्द है, इसमें १२ अक्षर और प्रत्येक पादमें मगण, भगण, सगण और मगण होते है, "कान्तोत्पीड़ा स्मौ स्मौ" ॥ २३ ॥

गुणसम्पदा समधिगम्य परं महिमानमत्र महिते जगताम्।
नयशालिनि श्रिय इवाऽधिपतौ विरमन्ति न ज्वलितुमोषधयः ॥२४॥

अन्वयः—जगतां महिते अत्र ओषधयः नयशालिनि अधिपतौ श्रिय इव गुणसम्पदा परं महिमानं समधिगम्य ज्वलितुं न विरमन्ति।

व्याख्या—जगतां लोकानां, महिते पूजिते, पूज्यमाने इव भावः, अत्र हिमालपर्वते, ओषधयः तृणज्योतींति, नयनशालिनि नीतिनिपुणे, अधिपतौ राजनि, श्रियः इव सम्पत्तयः इव गुणसम्पदाक्षेत्रगुणसश्पत्त्या अन्यत्र सन्धि-प्रभृतिगुणसम्पत्त्या, परम् उत्कृष्टम्, महिमानं श्रेष्ठत्वं समधिगम्य सं प्राप्य, ज्वलितुं न विरमन्ति अविरतं ज्वलन्ति। अन्यत्र तु नात्रावेव ज्वलन्तीति भावः। प्रमिताक्षरावृत्तन्। तल्लक्षणं यथा—प्रमितारा सजससैः कथिता। श्लोकेऽस्मिन्नुपमाऽलङ्कारः।

भावार्थः—जगत्पूज्येऽस्मिन् पर्वते परं क्षेत्रगुणसम्दमासाद्य सर्वदा तथा प्रकाशं कुर्वन्ति यथा नीतिसम्पन्ने राशि सन्ध्यादिगुणसम्पदा परं महिमानं लब्ध्वा सम्पदः प्रकाशन्ते।

समासः—अधिपतौ—अधिकः पतिः, तस्मिन्। 'कुगतिप्रादयः' इत्यनेन समासः। गुणसम्पदा–गुणानां सम्पत् तया ( ष० तत्पु० )।

कोशः—'त्रिष्वथो जगती लोको विष्टपं भुवनं जगत्'। 'ओषध्यः फलपाकान्ताः'। सम्पत्तिः श्रीश्च लक्ष्मीश्च'। सर्वत्राऽप्यमरः। प्रतिमाक्षरावृत्तम्। तल्लक्षणं यथा–'प्रतिमाक्षरा सजससैः कथिता'। पद्येऽस्मिन्नुपमाऽलङ्कारः।

व्यकरणम्—जगताम्–गच्छन्तीति जगन्ति, तेषां, वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च' इति निपातनात् शतृवद्रूपम्। महिते–मह+क्त+इट्+ङि। महिमानम्–महतः भावः महिमा, तम्। अत्र 'पृथ्वादिभ्य इमनिज् वा'। इति इमनिच् प्रत्ययः। विरमति–वि+रम्+ ( परस्मैपदे ) =ति। 'व्यांङ्परिभ्यो रमः'। इति परस्मैपदम्।

पदार्थ—जगतां=संसार के। महिते=पूज्य। अत्र=इस ( हिमालय ) पर। ओषधयः=संजीवनी आदि ओषधियाँ। नयशालिनि=नीतिमान्। अधिपतौ=

स्थानों में। श्रियः इव=सम्पत्तियों की तरह। गुणसम्पदा=गुणों (भूमिके) की अधिकता से। परं महिमानं=अत्यन्त उत्कर्ष की। समधिगम्य=प्राप्त कर। ज्वलितुं=जलने से। न विरमन्ति=शान्त नहीं होती है।

हिन्दी—जगत्के माननीय इस हिमालय में औषधियाँ स्थानके उत्कृष्ट गुणोंके कारण अत्यन्त सामर्थ्य को पाकर इस प्रकार निरन्तर चमकती रहती हैं। जैसे नीतिमान् राजा में सन्धि आदि गुणों के उत्कर्ष को पाकर सम्पत्तियाँ निरन्तर चमकती है।

अभिप्रायः—आज भी हिमालय में ऐसी बूटियाँ पाई जाती हैं जो दीपक की तरह प्रकाश करती हैं। दिन में सूर्य के प्रकाश में दूरसे भले ही न दिखाई दें किन्तु रात्रि के समय दूर से स्पष्ट दीखती हैं। यहाँ कवि का अभिप्राय है कि उन औषधियों में वह प्रकाश हिमालय के उन स्थानों का गुण है जहाँ ऐसी औषधियाँ पाई जाती हैं। जैसे नीतिसम्पन्न राजा सन्धिविग्रह: आदि गुणों से युक्त होता है जो सम्पित्तियों से सदा युक्त हुआ उत्कर्ष को प्राप्त होता है, ऐसे ही स्थान के गुणों को प्राप्त कर ये औषधियाँ भी निरन्तर चमकती रहती हैं। यहाँ प्रमिताक्षरा छन्द है ॥२४॥

कुररीगणः कृतरवस्तरवः कुसुमाऽऽनताः सकमलं कमलम्।
इह सिन्धवश्च वरणाऽऽवरणाः करिणां मुदे सनलदाऽनलदाः ॥ २५ ॥

अन्वयः—इह कुररीगणः कृतरवः तरवः कुसुमाऽऽनताः कमलं सकमलं वरणाऽऽवरणाः सनलदाऽनलदाः सिन्धवः च करिणा मुदे भवन्ति।

व्याख्या—इह हिमालयपर्वते, कुररीगणः उत्क्रोशीसंघः, कृतरवः विहिता-रवः, तरवः वृक्षाः, कुसुमाऽऽनताः पुष्पानम्राः, कमलं जलम्, अथवा कं जलम्, तेन अलम् अत्यर्थं, सकमलं पद्मसहितं, वरणाऽऽवरणाः तिक्तशाकाऽऽवृताः, सनलदाऽनलदाः उशीरसहिताः, सन्तापनिवर्तकाः, च, सिन्धवः च सरितः च, करिणां गजानां, मुदे सन्तोषाय, भवन्ति जायन्ते।

भावार्थः—अत्र उत्क्रोशाख्यपक्षिसमूहः कूजति, वृक्षाः पुष्पभारेण नताः, जलं च सकमलं, वरणवृक्षैरावृता उशीरयुक्ता सन्तापहारिण्यश्च नद्यो गजानां सुखकारिण्यः सन्ति।

समासः—कुररीगणः—कुररीणां गणः (ष० तत्पु०)। कृतः रवः येन सः (बहुव्रीहिः)। कुसुमाऽऽनताः—कुसुमैः आनताः (तृ० तत्पु०)। सकमलम्—कमलैः सहितम् (तुल्ययोगबहु०)। वरणाऽऽवरणाः—वरणाः—वरणाः आवरणं यासां ताः (बहुव्रीहिः)। सनलदाऽनलदाः—नलदैः सहिताः सनलदाः (तुल्ययोगबहु०)। अनलं द्यन्ति इति अनलदाः (उपपद०)। सनलदाः च ताः अनलदाः (कर्मधारयः)।

कोशः—'उत्क्रोशकुररौ समौ'। इत्यमरः। 'कमलं जलपद्मयोः'। इति विश्वः। 'मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः। वरणे वरुणः सेतुस्तिक्तशाकः कुमारकः'। मूलेऽस्योशीरमस्त्रियाम्। अभयं नलदं सेव्यम्'। 'कुञ्जरो वारणः करी'। सर्वत्राऽप्यमरः।

व्याकरणम्—इह—अस्मिन्निति, 'इदमो हः' इति ह प्रत्ययः। इदम्+इ+ह। अनलदाः—अनल+दो+क+जस्। अनलोपपदाद् दो अवखण्डने धातोः क प्रत्यये जसि रूपम्।

पदार्थ—इह=इस (हिमालय) में। कुररीगणः=उत्क्रोशों का समूह कृतरवः=शब्द करता है। तरवः=वृक्ष। कुसुमानताः=फूलों से लदे रहते हैं कमलं=जल। सकमलम्=कमलों से युक्त। वरणावरणाः=वरण (एक वृक्ष विशेष) से घिरी हुई। सनलदानलदाः=नलद (उशीर=खश) से युक्त और (अनलदा) सन्तापको नष्ट करनेवाली। सिन्धवश्च=नदियाँ भी। करिणां मुदे हाथियोंको प्रसन्न करती है।

हिन्दी—इस पर्वतमें उत्क्रोश नामक पक्षियों के समूह कूजते रहते हैं, वृक्ष फूलों से लदे रहते हैं, जल में सर्वत्र कमल खिले रहते हैं, वरण के वृक्षों से ढकी नदियाँ खस से युक्त तथा सन्तापहारिणी होकर गजों को प्रसन्न करती हैं।

अभिप्राय—वरण एक वृक्ष होता है जिसे पर्वतीय भाषा में माजन कहते हैं। यह प्रायः जल के ही समीप होता है। दोनों किनारों पर इस वरना के पेड़ होने से नदियाँ इनसे ढकी रहती हैं जिससे उनका जल शीतल बना रहता है। नलद—उशीर से युक्त होने का तात्पर्य है जल का सुगन्धित होना। सनलदा-अनलदा इसमें विरोधाभास अलंकार भी है। गजों को प्रसन्न करती है

का तात्पर्य है नदियाँ इतनी गहरी हैं कि जिनमें हाथी अवगाहन करते हैं। भिन्नार्थक स्वर-व्यञ्जन समूहों की आवृत्ति होने से यह यमक अलंकार है और प्रमिताक्षरा छन्द है ॥२५॥

सादृश्यं गतमपनिद्रचूतगन्धै
रामोदं मदजलसेकजं दधानः ।
एतस्मिन् मदयति कोकिलानकाले
लीनाऽलिः सुरकारिणां कपोलकाषः ॥२६॥

अन्वयः—एतस्मिन् अपनिद्रचूतगन्धैः सादृश्यं गतं मदजलसेकजम् आमोदं दधानः लीनाऽलिः सुरकरिणां कपोलकाषः अकाले कोकिलान् मदयति ।

व्याख्या—एतस्मिन् अस्मिन् पर्वते, अपनिद्रचूतगन्धैः विकसितरसालपुष्पामोदैः, सादृश्यं तुल्यं गतं प्राप्तं, मदजलसेकजं दानवारिसेकसम्भवम्, आमोदं परिमलं, दधानः संधारयन्, लीनाऽलिः सपृक्तभृङ्गः सुरकारिणां देवहस्तीनां, कपोलकाषः गण्डस्थलकषणस्थानं, द्रुमस्कन्धादि, अकाले असमये, वसन्ताऽरिक्तकालेऽपि, कोकिलान् पिकान्, मदयति मदमत्तान् विदधाति ।

प्रहर्षिणीवृत्तम् । तल्लक्षणं यथा—'म्नौज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्' । अत्र वसन्तरूपकारणस्याऽभावेऽपि मदरूपकार्योत्पत्तिवर्णनाद् विभावनाऽलङ्कारः । एवमेव मदगन्धे सहकारगन्धभ्रान्त्या भ्रान्तिमानलङ्कारोऽपि व्यज्यते ।

भावार्थः—अत्र विकसिताम्रपुष्पगन्धसदृश, मदजलसेकजन्येत गन्धेन युक्तं, संसक्तभ्रमरं दिग्गजानां कण्डूयनस्थलैः वसन्तातिरिक्तेऽपि काले कोकिलान् उन्मत्तान् करोति ।

समासः—अपनिद्रचूतगन्धैः—अपगता निद्रा यस्मात् तत् ( बहुव्रीहिः ) । अपनिद्रं च तत् चूतम् ( कर्मधारयः ) तस्य गन्धाः, तैः (ष० तत्पु०) । मदजलसेकजम्—मदजलस्य सेकः ( ष० तत्पु० ) तस्माज्जातस्तम् । लीनाऽलिः— लीनाः अलयः यस्मिन् सः ( बहुव्रीहिः ) । सुरकरिणाम्—सुराणां करिणः, तेषाम् ( ष० तत्पु० ) । कपोलकाषः—कपोलानां काषः ( ष० तत्पु० ) अकाले—न काले ( नञ्० ) ।

कोशः—'आम्रश्चूतो रसालोऽसौ सहकारोऽति सौरभः' । 'हर्षेऽप्यामोदवन्मदः' । 'द्विरेफपुष्पलिङ्भृङ्गषट्पदभ्रमराऽलयः' । 'वनप्रियः परभृतः कोकिलः पिक इत्यपि' । सर्वत्राऽप्यमरकोशः । 'आमोदो गन्धहर्षयोः' । इति मेदिनी ।

व्याकरणम्—सादृश्यम्—सदृशस्य भावः कर्म वा 'गुणवचनब्राह्मणाऽऽदिभ्यः कर्मं वा' इति ष्यञ् प्रत्ययः । सदृश+ष्यञ्+सु=अम् । सेकजम्+सेक+जन्+ड—यम् । कपोकाषः—कषणं काषः, भावे घञ् । मदयति—मदी+णिच्+लट्=तिप् ।

पदार्थ—एतस्मिन्=इस ( पर्वत ) में । अपनिद्रचूतगन्धैः=खिले हुए आम के बौर की गन्धों से, सादृश्यं गतं=समानताको प्राप्त । मदजलसेकजं=मदवारि के अभिषेक से उत्पन्न । आमोदं=सुगन्धको । दधानः=धारण करता हुआ । लीनालिः=चिपके हैं भौंरें जिसमें ऐसा । सुरकरिणां=ऐरावतों का, कपोलःकावः=गाल खुजलाने का स्थान । अकाले=असमय में ही । कोकिलान् मदयति=कोयलों को उन्मत्त बना रहा है ।

हिन्दी—इस पर्वत में खिले आमके बौर की गन्ध के समान, मदवारि लगने से सुगन्धित, तथा भौंरें जिनपर मंडरा रहे हैं ऐसी दिग्गजों के कपोल खुजलाने की जगहें असमय में ही कोयलों को उन्मत्त बना रही है ।

अभिप्राय—अर्थात् इस पर्वत पर इतने प्रचुर हाथी हैं जो स्थान-स्थान पर पेड़ों के तनों से अपने कपोल रगड़ते हैं, कपोलों से बहने वाला मदजल उनमें लगकर इतना महकता है कि भौंरे मडराने लगते है और कोयल उसे आम के बौर की गन्ध समझकर वसन्त ऋतु न होने पर भी कूकने लगती हैं। यहाँ पर वसन्तरूप कारण न होने पर भी कोयलों का उन्मत्त होना रूप कार्य हो जाने से विभावना अलंकार है । जो "आम की गन्ध के समान" इस उपमा और "आमोद को धारण करता हुआ" इस पदार्थ हेतुक काव्यलिङ्ग अलंकार से परस्पर सङ्कर हो जाता है । हाथियों के मदगन्ध में कोयलों को आम्र गन्ध की भ्रान्ति होती है इससे भ्रान्तिमान् अलंकार व्यक्त होता है । यह प्रहर्षिणी छन्द है—इसका लक्षण है "म्नौ, ज्रौ, गाः त्रिदशयतिः प्रहर्षिणी ।"

सनाकवनितं नितम्बरुचिरं चिरं सुनिनदैर्नदैर्वृ तममुम् ।
मता फणवतोऽवतो रसपरा परास्तवसुधा सुधाऽधिवसति ॥२७॥

अन्वयः—सनाकवनितं नितयम्बरुचिरं सुनिनदैः नदैः वृत्तम् अमुम् अवतः फणवतः मता रसपरा परास्तवसुधा सुधा चिरम् अधिवसति ।

व्याख्या—सनाकवनितम् अप्सरा सहितं, नितम्बरुचिरं कटिसुन्दरं, सुनिनदैः मधुर निःस्वनैः, नदैः प्रवाहैः, वृत्तं संयुक्तम्, अमुम्, इमम्, अस्मिन् पर्वते इति भावः। अवतः रक्षतः, फणवतः फणिनो नागराजस्येत्याऽऽशयः। मता इष्टा, रसपरा स्वादोत्कृष्टा, परास्तवसुधा परित्यक्तभूलोका, सुधा पीयूषं चिरं बहुकालं यावत्, अधिवसति आवसति। अतो हिमालयादन्यत्र भूमण्डले कुत्राऽपि सुधा नास्तीति भावः। अतः सुमेरुप्रतिभटोऽयं हिमालयः, इति तात्पर्यम् ।

जलोद्धतगतिवृत्तम् । तल्लक्षणं यथा—'रसैर्जसजसा जलोद्धतगतिः'। पद्येऽस्मिन् समासोक्तिरलङ्कारः, यमकाऽलङ्कारो वा उभयोः संसृष्टिः ।

भावार्थः—अप्सरोभिः सहितं, मध्यप्रान्तेषु रमणीयं, कलनादमनोहरैः प्रवाहैः परिष्कृतममुं गिरिं नागराजस्याभीष्टोत्कृष्टस्वादयुता सुधा चिरमधिवसति, वसुधायां नान्यत्रेति भावः ।

समासः—सनाकवनितम्—नाकस्य वनिताः (ष० तत्पु०) नाकवनिताभिः सहितः तम् (तुल्ययोगबहु०)। नितम्बरुचिरम्—नितम्बैः रुचिरः तम् (तृ० तत्पु०)। सुनिनदैः—शोभनः निनः येषां ते तैः (बहुव्रीहिः)। रसपरा—रसेन परा (तृ० तत्पु०)। परास्तवसुधा यया, सा (बहुव्रीहिः)।

कोशः—स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशाऽऽलयाः'। कटकोऽस्त्री नितम्बोऽद्रेः'। 'कुण्डली गूढपाच्चक्षुःश्रवा काकोदरः फणी'। 'सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा'। 'पीयूषममृतं सुधा'। सर्वत्राऽप्यमरकोशः। सरस्वांस्तु नदे वाब्धौ नान्यवद् रसिके स्त्रियाम् । इति मेदिनी ।

**व्याकरणम्**—असुम् अधिवसति–अत्र 'उपान्वध्याङ्वसः' इति आधारस्य कर्मसंज्ञा। फणवतः–फण+मतुप्+ङस्। मता अत्र 'मतिबुद्धिपूजाऽर्थेभ्यश्च'। इति क्त प्रत्ययः।

**पदार्थः**—सनाकवनितं=(नाक) स्वर्ग की वनिताओं (अप्सराओं) से युक्त। नितम्बरुचिरं=प्रान्त भागों में मनोहर। सुनिनदैः=सुन्दर शब्दों वाले। नदैः=प्रवाहों से। वृतम्=घिरे हुए। अमुम्=इस पर्वतमें। अवतः=पाताल की रक्षा करनेवाले। फणवतः=नागराजकी। मता=प्रिय। रसपरा=उत्कृष्ट स्वाद-वाली। परास्तवसुधा=छोड़ दिया है पृथ्वी को जिसने ऐसी। सुधा=अमृत। चिरम् अधिवसति=स्थायी रूप से रहती है।

**हिन्दी**—अप्सराओं से युक्त, मध्य प्रान्तों में रमणीय, कलनाद करनेवाले बड़े बड़े नदों से घिरे इस हिमालय में ही पाताल लोक के रक्षक नागराज को प्रिय लगने वाला अत्यन्त स्वादिष्ट अमृत स्थायी रूप से मिलता है जो पृथ्वी में अन्यत्र कहीं नहीं है।

**अभिप्राय**—अमृत देवताओं का पेय है। देवता मेरु पर्वत पर रहते हैं, किन्तु हिमालय पर भी सोम आदि औषधियों के रस रूप में अमृत है। जो सदा प्राप्त होता है। अतः यह भी मेरु पर्वत से किसी अंश में कम नहीं है यह तात्पर्य है। यहाँ "नागराज को अत्यन्त प्रिय अमृत" यह केवल भारवि का कल्पना है। इसका केवल यही अर्थ लग सकता है कि कवि हिमालय की प्रशंसा में यह दिखाना चाहता है कि यह तीनों लोकों का उपकारक है। भूलोक में तो यह है ही स्वर्ग से अप्सराएँ तथा पाताल से नागराज भी इसमें अमृत के लोभ से आते हैं। अन्यथा देवताओं का पेय अमृत नागराजको प्रिय होने का कोई पौराणिक आधार नहीं है। यह जलोद्धतमति छन्द है ॥२७॥

श्रीमल्लताभवनमोषधयः प्रदीपाः
शय्या नवानि हरिचन्दनपल्लवानि।
अस्मिन् रतिश्रमनुदश्च सरोजवाताः
स्मर्तुं दिशन्ति न दिवः सुरसुन्दरीभ्यः ॥२८॥

**अन्वयः**—अस्मिन् श्रीमत् लताभवनम् ओषधयः प्रदीपाः नवानि हरिचन्दनपल्लवानि शय्याः रात्रिश्रमनुदः सरोजवाताः च सुरसुन्दरीभ्यः दिवः स्मर्तुं न दिशन्ति ।

**व्याख्या**—अस्मिन् हिमालयपर्वते, श्रीमत् श्रियासम्पन्नं, लताभवनं वल्लीसद्म, ओषधयः तृणज्योतींषि, एव प्रदीपाः दीपाः, नवानि, नूतनानि, हरिचन्दनपल्लवानि देवदारुवृक्षकिसलयानि, तानि एव शय्याः शयनाऽऽसनानि, रतिश्रमनुदः सुरतश्रमहारिणः, सरोजवाताः च कमलानीला च, सुरसुन्दरीभ्यः देवाङ्गनाभ्यः, दिवः स्वर्गस्य, स्मर्तुं, स्मरणं कर्तुं, न दिशन्ति न ददति । अर्थात् स्वर्गमपि विस्मारयन्तीत्याशयः । यतो हि हिमालयोऽयं स्वर्गातिशयीति भावः ।

वसन्ततिलकावृत्तम् । तल्लक्षणं यथा—'उक्ता वसन्ततिलका तभजा जगौ गः' । श्लोकेऽस्मिन् रूपकाऽलङ्कारः ।

**भावार्थः**—समृद्धशालिभिर्लतानिकुञ्जैः ज्वलदौषधिरूपैः दीपैः नूतनदेवतरुकिसलयनिर्मिताभिः शय्याभिः, रतिश्रमापनोदिभिः कमलवायुभिश्चात्राकृष्टाः देवललनाः स्वर्गं न स्मरन्ति ।

**समासः**—हरिचन्दनपल्लवानि-हरिचन्दनस्य पल्लवानि ( ष० तत्पु० ) रतिश्रमनुदः—रतेः श्रमः ( ष० तत्पु० ) रतिश्रमं नुदन्तीति ते ( उपपद० ) । सरोजवातः—सरोजेषु वाताः ( स० तत्पु० ) । सुरसुन्दरीभ्यः—सुराणां सुन्दर्यः, ताभ्यः ( ष० तत्पु० ) ।

**कोशः**—'वल्ली तु व्रततिर्लता' । 'प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः । 'पञ्चैते देवतरवो मन्दारः पारिजातकः । सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्ददम्' । 'नभस्वद्वातपवनपवमानप्रभञ्जनाः' । सर्वत्राऽप्यमरकोशः । 'हरिचन्दनमाख्यातं गोशीर्षे सुरपादपे' । इति विश्वः ।

**व्याकरणम्**—श्रीमत्—श्रीः अस्ति यस्मिन् तत्, श्रीः+मतुप् । रतिश्रमनुदः—रतिश्रमं नुदन्तीति रतिश्रमनुद्, तस्य, रतिश्रम+नुद्+क्विप् । सरोजम्—सरसि जातं सरोजम्, 'सप्तम्यां जनेर्डः' । सरस्+जन्+ड+सु = अम् । दिवः स्मर्तुम्—अत्र 'अधीगर्थदयेषां कर्मणि' । इति कर्मणि षष्ठी ।

पदार्थ—अस्मिन्=इस (हिमालय) में। श्रीमत्=शोभावाले। लताभवनम्=लताओं के निकुञ्ज। औषधयः=चमकती हुई औषधि (जड़ी बूटियां)। प्रदीपाः=दीपक। नवानि=नये-नये (कोमल)। हरिचन्दनपल्लवानि=हरिचन्दन (कल्प वृक्ष) के किसलयों की। शय्याः=सेजें। रतिश्रमनुदः=सुरत क्रीड़ा की थकान को दूर करने वाले। सरोजवाताः=कमलों की वायु (ये सब)। सुरसुन्दरीभ्यः=देवाङ्गनाओं के लिये। दिवः=स्वर्ग का। स्मर्तुं न दिशन्ति=स्मरण नहीं करने देती है।

हिन्दी—इस पर्वत पर अत्यन्त सजे हुए लताभवन, दीपक के समान प्रकाश करती हुई औषधियाँ, नये कोमल कल्पवृक्षों के किसलयों की शय्याएं और कमलों की सुगन्धित वायु, ये सब वस्तुएं यहाँ देवाङ्गनाओं के लिए स्वर्ग को भुलाने वाली है।

अभिप्राय—कामिनियों के लिए सजे-सजाए भवन, प्रकाशमान दीप और कोमल शय्या, इसके बाद सुरतश्रमहारी सुगन्धित वायु, यही स्वर्ग सुख है। ये सब यहाँ लताभवन, चमकती हुई औषधियाँ, कल्पवृक्ष के किसलय और कमलों की वायु के रूप में उपलब्ध हैं तो फिर उन्हें स्वर्ग की याद क्यों आयें। तात्पर्य यह है कि इस हिमालय में स्वर्ग से भी बढ़कर आनन्द है। इस पद्य में स्पष्ट ही रूपक अलंकार एवं वसन्ततिलका छन्द है ॥२८॥

ईशाऽर्थमम्भसि चिराय तपश्चरन्त्या
यादो विलङ्घनविलोलविलोचनाया।
आलम्बताऽग्रकरमत्र भवो भवान्या
श्च्योतान्निदाघसलिलाङ्गुलिना करेण ॥२९॥

अन्वयः—ईशाऽर्थं चिराय अम्भसि तपः चरन्त्याः यादो विलङ्घनविलोलविलोचनायाः भवान्याः अग्रकरं भवः श्च्योतन्निदाघसलिलाङ्गुलिना करेण अत्र आलम्बत।

व्याख्या—ईशाऽर्थं शिवार्थं पतिरूपेण शिवं लब्धुमित्याऽऽशयः। चिराय चिररात्राय, अम्भसि नीरज, तपः नियमविशेषाऽनुष्ठानं, चरन्त्याः कुर्वन्त्याः, यादोविलङ्घनविलोलविलोचनायाः जलजन्तुपरिस्फुरणचञ्चलनयनयाः, भवान्याः

पार्वत्याः, भाविन्याः शिवपत्न्याः इत्यर्थः। अग्रकरं हस्तैकदेशं, भवः शिवः, श्च्योतन्निदाघसलिलाङ्गुलिना स्रवद्घर्मजसलिलाऽङ्गुलिना इति सात्विकभावोदयोक्तिः। करेण हस्तेन, अत्र अस्मिन् एव पर्वते, आलम्बत गृहीतवान्। भाविकं नामाऽलङ्कारः।

भावार्थः—वरत्वेन शिवप्राप्तये दीर्घकालं जले निमज्य तपश्चरन्त्याः जलजन्तूनां परिस्फुरणेन चंचलनेत्रायाः पार्वत्याः पाणिग्रहणं स्रवत्स्वेदाङ्गुलिना करेण शिवोऽत्रैव पर्वते विदधे।

समासः—ईशाऽर्थम्–ईशाय इदम् (च० तत्पु०)। यादो विलङ्घनविलोलविलोचनायाः–यादसां विलङ्घनं ( ष० तत्पु० ), विलोले विलोचने यस्याः सा ( बहुव्रीहिः ) यादोविलङ्घनेन विलोलविलोचना तस्याः ( तृ० तत्पु० )। भवान्याः–भवस्य पत्नी तस्याः ( ष० तत्पु० )। अग्रकरम्–अग्रः च असौ करः (कर्मधारयः)। श्च्योतन्निदाघसलिलाङ्गुलिना–निदाघस्य सलिलं (ष० तत्पु०) श्च्योतत् निदाघसलिलं याभ्यः ताः ( बहुव्रीहिः ), तादृश्यः अङ्गुलयः यस्य सः तेन ( बहुव्रीहिः )।

कोशः—'चिराय चिररात्राय चिरस्याद्याश्चिराऽर्थकाः'। 'यादांसि जलजन्तवः'। 'शिवा भवानी रुद्राणी'। सर्वत्राऽप्यमरः।

व्याकरणम्–ईशाऽर्थम्-ईशाय इदम्, 'चतुर्थी तदर्थाऽर्थबलिहितसुखरक्षितैः। इति चतुर्थीतत्पुरुषः। अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्'। इति विशेष्यलिङ्गता, इदं क्रियाविशेषणम्। भवान्याः–भव + आनुक्+ङीप्=ङस्। अग्रकरम्–अत्राऽऽह वामनः–'हस्ताऽग्राऽग्रहस्तयोर्गुणगुणिनोर्भेदाऽभेदौ'। इति। भवः–भू+अच्+सु। आलम्बत–आङ्+लबि+लङ्+तिप्।

पदार्थः—ईशार्थम्=शिवजी के लिए। चिराय=दीर्घ काल तक। अम्भसि=जल में। तपश्चरन्त्याः=तपस्या करती हुई। यादोविलङ्घन=जल जन्तुओं के उलटते-पुलटने से। विलोलविलोचनायाः=चंचल नेत्रोंवाली। भवान्याः=पार्वती के। अग्रकर=हाथ के अग्रभाग को। भवः=शिव जी ने। श्च्योतन्निदाघसलिलाङ्गुलिना=गिर रहा है पसीना अंगुलियों से जिसके ऐसे। करेण=हाथ से। अत्र=इसी पर्वत पर। आलम्बत=ग्रहण किया।

हिन्दी—शिवजी को वररूप में पाने की इच्छा से चिरकाल तक पानी में रहकर तप करती हुई तथा जलचरों के इधर-उधर घूमने से चंचल नेत्रों वाली पार्वती का पणिग्रहण शिवजी ने पसीने से तर अंगुलियों वाले अपने हाथ से इसी पर्वत पर किया था।

अभिप्राय—यहाँ भाविक अलंकार है। बीती हुई या होने वाली घटनाओं का जहाँ प्रत्यक्षवत् अद्भुत रूप से वर्णन किया जाय वहाँ भाविक अलंकार होता है। यह वसन्ततिलका छन्द है ॥२९॥

येनाऽपविद्धसलिलः स्फुटनागसद्मा
देवाऽसुरैरमृतमम्बुनिधिर्ममन्थे ।
व्यावर्तनैरहिपतेरयमाहिताऽङ्कः
खं व्यालिखन्निव विभाति स मन्दराऽद्रिः ॥३०॥

अन्वयः—देवाऽसुरैः येन अपविद्धसलिलः स्फुटनागसद्मा अम्बुनिधिः अमृतं मन्मथे। अहिपतेः व्यावर्तनैः आहिताऽङ्कः सः अयं मन्दराऽद्रिः ख व्यालिखन् इव विभाति।

व्याख्या—देवाऽसुरैः सुराऽसुरैः, येन मन्दरपर्वतेन, मथदण्डनभूतेन अपविद्धसलिलः प्रक्षिप्तजलः, अत एव स्फुटनागसद्मा सुव्यक्तपातालः अम्बुनिधिः जलनिधिः, अमृतं पीयूषं, ममन्थे मथितः। अहिपतेः वासुकेः, मन्थरज्जुभूतस्येति भावः। व्यावर्तनैः वेष्टनैः, आहिताऽङ्कः चिह्नाकितं, सः तथाभूतः, अयम् पुरः स्थितः, मन्दराद्रिः मन्दराचलपर्वतः, खम् आकाशं, व्यालिखन् इव व्यापाटयन्निव, विभाति राजते। व्यालिखन्निवेति उत्प्रेक्षालंकारः।

भावार्थः—देवाः असुराश्च येन प्रक्षिप्तजलं दृश्यमानपातालतलं समुद्रम् अमृतार्थं ममन्थुः, नागराजस्य वेष्टनैः चिह्नितः सोऽयं मन्दराचलः आकाशं विघटयन्निव शोभते।

समासः—देवाऽसुरैः—देवाः च तैः ( द्वन्द्वः )। अपविद्धसलिलः—अपविद्धं सलिलं यस्य सः ( बहुव्रीहिः )। स्फुटनागसद्मा—नागानां सद्म ( ष० तत्पु० ) स्फुटं नागसद्म यस्मिन् सः ( बहुव्रीहिः )। अम्बुनिधिः—अम्बूनां निधिः ( ष० तत्पु० )। अहिपतेः—अहीनां पतिः तस्य ( ष० तत्पु० )। आहिताऽङ्कः—आहितः अङ्कः यस्य सः ( बहुव्रीहिः )।

कोशः—'अमरा निर्जरा देवाः'। 'असुरा दैत्यदैतेयदनुजेन्द्राऽरिदानवाः'। सलिलं कमलं जलम्'। 'भागलोकोऽथ कुहरं सुषिरं विवरं विलम्'। 'गृहं गेहोदवसितं वेश्म सद्म निकेतनम्'। 'पीयूषममृतं सुधा'। 'नमोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम्'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—देवासुरैः—अत्र देवाऽसुराणां शाश्वतिकविरोधाऽभावे 'येषां च शाश्वतिकः विरोधः'। इति नियमात् समाहारद्वन्द्वाऽभावः। ममन्थे—अत्र लिट् प्रथमपुरुषस्यैकवचने रूपम्। अहिपतेः-पतिशब्दः समासे एव घिसंज्ञः स्यात्, इति नियमानुसारं 'घेर्ङिति' गुणे, 'ङसिङसोश्च', इति पररूपे रूपम्।

पदार्थ—देवासुरैः = देवताओं तथा असुरों ने। येन = जिससे। अपविद्धसलिलः = फैंका जा रहा है जल जिसका ऐसा। स्फुट = प्रत्यक्ष सीख रहा है। नागसद्म = पाताल जिसमें ऐसा। अम्बुनिधिः = समुद्र। अमृतं = अमृत के लिए। ममन्थे = मथा गया। अहिपतेः = नागराज (वासुकि) के। व्यार्वतनैः = बेष्टनों से। आहिताङ्कः = किपे हैं चिह्न जिसमें ऐसा। स अय = वह यह। मन्दराद्रिः = मन्दराचल पर्वत। खम् = आकाशको। व्यालिखन् इव = फाड़ता हुआ सा। विभाति = शोभित हो रहा है।

हिन्दी—देवता और असुरों ने जिससे उछलते जलवाले अथा स्पष्ट दीख रहा है पाताल लोक जिसमें ऐसे समुद्र को अमृत के लिए मथा था वही, नागराज वासुकि की लपेटों से चिह्नित, यह मन्दरा चल। आकाश को चीरता हुआ सा शोभित हो रहा है।

अभिप्राय—देवताओं ने जब अमृत-मन्थन किया तो मन्दराचल की रई तथा वासुकि नाग की रस्सी बनाई थी। वासुकि नाग को इधर-उधर रगड़ने से जिसमें उसके चिह्न वन गये हैं ऐसा यह मन्दरा चल आकाश में लिखता हुआ सा शोभित हो रहा है अर्थात् इतना ऊँचा है कि आकाश को छू रहा है। यहाँ उत्प्रेक्षा अलंङ्कार और वसन्ततिलका छन्द है॥३०॥

नीतोच्छ्रायं मुहुरशिशिररश्मेरुस्रै-
रानीलाभैर्विरचितपरभागा रत्नैः।

ज्योत्स्नाशङ्कामिह वितरति हंसश्येनी
मध्येऽप्यह्नः स्फटिकरजतभित्तिच्छाया ॥३१॥

अन्वयः—इह अशिशिररश्मेः उस्रैः उच्छ्रायं नीता आनीलाऽऽभैः रत्नैः विरचितपरभागा हंसश्येनी स्फटिकरजभित्तिच्छाया अह्नः मध्ये अपि मुहुः ज्योत्स्नाशङ्कां वितरति।

व्याख्या—इह हिमालये, अशिशिररश्मेः, सूर्यस्य; उस्रैः किरणैः, अंशुभिः नीता विस्तारिता तथा आनीलाभैः असितकान्तिभिः, रत्नैः मणिभिः इन्द्रनीलाभिधैरित्याऽऽशयः, । विरचितमरभागा इन्द्रनीलमणिसन्निधानाल्लब्धोत्कर्षा, हंसश्येनी हंसाऽऽभशुक्लवर्णा, स्फटिकरजतभित्तिच्छाया स्फटिकरूप्यकुड्यकान्तिः, अह्नः दिवसस्य, मध्ये अन्तरे अपि मध्यान्हेऽपि, मुहुः वारं वारं, ज्योत्स्नाशङ्कां चन्द्रिकाभ्रान्ति, जनयति कुटिलानाम गाथावृत्तम्। तल्लक्षणं यथा पिङ्गलच्छन्दःसूत्रे—'टिला म्भौ न्यौ गौ वेदरससमुद्राः'।

भावार्थः—मध्याह्नकाले प्रचण्डसूर्यकिरणानामस्य स्फटिकरजतमयशिखरेषु पतिताऽपि कान्तिः इन्द्रनीलमणिमयशिखराणां नीलप्रभया मन्दा सती हंस इव श्वेतवर्णा भूत्वा केवलं ज्योत्स्नेव प्रतीयते।

समासः—अशिशिरश्मेः—न शिशिराः (न ञ्०) अशिराः रश्मयः यस्य सः, तस्य (बहुव्रीहिः)। आनीलाऽऽभैः—आनीला आभा येषां तैः आनीलाभैः (बहुव्रीहिः)। विरचितपरभाषा—परः च असो भागः परभागा (कर्मधारयः) विरचितः परभागः यस्याःसा (बहुव्रीहिः)। हंसश्येनी—हंस इव श्येनी (उपमानक०)। स्फटिकरजतभित्तिच्छाया—स्फटिकाः च रजनानि च (द्वन्द्वः) स्फटिकरजतानां भित्तयः (ष० तत्पु०) तासां छाया (ष० तत्पु०)। ज्योत्स्नाशङ्काम्—ज्योत्स्नायाः शङ्का ताम् (ष० तत्पु०)।

कोशः—'किरणोऽस्त्रमयूखांशुगभस्तिघृणिरश्मयः'। 'विशदश्वेतपाण्डुराः'। 'भित्तिः स्त्री कुड्यम्'। 'छायाकान्द्युतिश्छविः'। 'चन्द्रिका कौमुदी ज्योत्स्ना'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—हंसश्येनी—श्येनशब्दात् 'वर्णादनुदात्तात्तोपधात्तो नः'। इति ङीप् तकारस्य नकारे, श्येनी रूपम्। वितरति—वि + तृ + लट् + तिप्। नीता—नी + क्त + टाप्।

पदार्थ—इह, = इस (हिमालय) में। अशिशिररश्मेः = सूर्यकी। उस्रैः = किरणोंसे। उच्छ्रायं नीता = उन्नत की हुई (तथा) आनीलाभैः = नीली कान्तिवालें। रत्नैः = रत्नों (इन्द्रनीलमणियों) से। विरचितपरभागा = प्राप्त किया है उत्कर्ष जिससे ऐसी। हंसश्येनी = हंसके समान श्वेतवर्णवाली। स्फटिकरजतभित्तिच्छाया = स्फटिक और चाँदीकीं दीवालोंकी क्रांति। अह्नः मध्ये अपि = मध्याह्न (दोपहर) में भी। मुहुः = बार-बार। ज्योत्स्नाशङ्कां = चाँदनी को, वितरति = उत्पन्न करती है।

हिन्दी—इस पर्वतके स्फटिक और रजतमय शिखरों पर पड़ी हुई सूर्य किरणों की बढ़ती हुई प्रभा, मध्याह्नकालमें भी इन्द्रनीलमणिके आधिक्यसे नीली किरणों द्वारा मन्द होनेके कारण बार-बार चाँदनीका भ्रम उत्पन्न कर देती है।

अभिप्राय—एक तो स्फटिक और चाँदी स्वयं ही श्वेत कान्ति की होती है। उसपर जब मध्याह्न के प्रचण्ड सूर्य की किरणें पड़ेंगी तो और भी चकाचौंध हो जानी चाहिए। किन्तु इन्द्रनील मणियों की कान्ति से वह इतनी मन्द पड़ जाती है कि बार-बार चाँदनी का भ्रम होता है। इससे यह व्यक्त होता है कि इस पर्वत पर स्फटिक और चाँदी की खानें हैं ही साथ ही इन्द्रनील मणि इतनी अधिक है कि उसके सामने स्फटिक और चाँदी पर पड़ी सूर्य किरणें भी मन्द हो जाती हैं। यह स्पष्ट ही भ्रान्तिमान् अलंकार है। इस पद्य में मध्यक्षामा छन्द है, इसका लक्षण है—"मध्यक्षामा युगदशविरमा म्भौ न्यौ गौ" अर्थात् इसमें म भ न य गण और दो गुरु होते हैं तथा चार, दश पर विराम होता है ॥३१॥

दधत इव विलासशालि नृत्यं मृदु पतता पवनेन कम्पितानि।
इह ललितविलासिनीजनभ्रूगतिकुटिलेषु पयःसु पङ्कजानि ॥३२॥

अन्वयः—इह मृदु पतता पवनेन कम्पितानि पङ्कजानि ललितविलासिनीजनभ्रूगतिकुटिलेषु पयःसु विलासशालि नृत्यं दधते इव।

व्याख्याः—इह हिमालयपर्वते, मृदुः = सुकोमलं, मन्दमित्याऽऽशयः। पतता प्रकम्पिता, पवनेन वायुना, कम्पितानि ईषद्वेपितानि, पङ्कजानि कमलानि, ललितविलासिनीजनभ्रूगतिकुटिलेषु सुभगसुन्दरीभ्रूगतिवक्रेषु, ईषत्तरङ्गितेष्वितिभावः। पयःसु जलेषु, विलासशालि विलसनशोभि, नृत्यं नर्तनं, दधते इव धारयन्ति इव, सविलासं नृत्यन्तीति भावः।

भावार्थः—इह मन्दं वहता पवनेन कम्पितानि कमलानि रमणीयरमणीजनस्य भ्रूगतिवदोषत्तरङ्गितेषु सविलासं नृत्यन्तीव।

समासः—ललितविलासिनीजनभ्रूगतिकुटिलेषु—विलासिनी च असौ जनः (कर्मधारयः), ललितः च असौ विलासिनीजनः (कर्मधारयः), भ्रुवोः गतया (ष० तत्पु०), ललितविलासिनीजनस्य भ्रूगतयः (ष० तत्पु०), ताः इव कुटिलानि तेषु (उपमानकर्म०)। पङ्कजानि—पङ्के जातानि (स० तत्पु०)।

कोशः—'कोललं मृदुलं मृदु'। 'नभस्वद्वातपवनपवमानप्रभञ्जनाः'। 'पयः क्षीरं पयोऽम्बु च'। 'नाट्यं नृत्यञ्च नर्तने'। सर्वत्राऽप्यमरकोशकोशः। 'ललितं रतिचेष्टितम्'। इति मेदिनी।

व्याकरणम्—विलासिनी—वि + लस + घिनुण् + ङीप्। विलासशालिविलसनं विलासः, वि + लस + घञ्। तेन शालते इति, विलास + णिनिः। नृत्यम्—नृती गात्रविक्षेपे धातोः 'ऋदुपधाच्च'। इति क्यप् प्रत्यये रूपम्।

पदार्थ—इह = इस (हिमालय) में। मृदुपतता = मन्द-मन्द बहते हुए। पवनेन = वायु से। कम्पितानि = हिलाये हुए। पङ्कजानि = कमल। ललितविलासिनीजनभ्रूगतिकुटिलेषु = मनोहर कामिनीजनों की भौंहों की चाल के समान टेढ़े। पयःसु = जलों में। विलासशालि = विलासपूर्वक। नृत्यं = नृत्य को। दधनइव = धारण करते जैसे हैं।

हिन्दी—इस पर्वत पर मन्द-मन्द बहते हुए वायु द्वारा हिलाये गये कमल, मनोहर विलासिनी जनों की भौंहों की चाल के समान टेढ़े-मेढ़े लहराते हुए जलों में हाव-भाव पूर्वक नाचते हुए से लगते हैं।

अभिप्राय—यहाँ ललित का सामान्यतया रमणीय अर्थ है किन्तु उसमें सात्त्विक एक अवस्था विशेष की भी व्यञ्जना होती है—मधुर श्रृङ्गार चेष्टा में

जैसे रमणियाँ थोड़ा-थोड़ा भौंह भटकाया करती हैं ऐसे ही हवा के झोंकों से जल में हल्की-सी लहरे हो रही हैं उनमें हिलते हुए कमल नाचते हुए से प्रतीत हो रहे हैं। यह उत्प्रेक्षा अलंकार और पुष्पिताग्रा छन्द है ॥३२॥

अस्मिन्नगृह्यत पिनाकभृता सलीलमावद्धवेपथुरधीरविलोचनायाः।
विन्यस्तमङ्गलमहौषधिरीश्वरायाः स्रस्तोरगप्रतिसरेण करेण पाणिः ॥३३॥

अन्वयः—अस्मिम् पिनाकभृता अधीरविलोचनायाः ईश्वरायाः आवद्धवेपथुः विन्यस्तमङ्गलमहौषधिः पाणिः स्रस्तोरगप्रतिसरेण करेण सलीलम् अगृह्यत।

व्याख्या—अस्मिन् हिमगिरौ, पिनाकभृता धनुर्भृता शिवेन, अधीरविलोचनायाः सर्पदर्शनत्रासात् कातरनेत्रायाः, ईश्वरायाःशिवायाः, आवद्धवेपथुः सञ्जातकम्पः इति सात्त्विकभावोदयः। विन्यस्तमङ्गलमहौषधिः स्थापितयाङ्कुरादिः, पाणिः करःस्रस्तोरगप्रतिसरेण विगलितसर्परूपकौतुकसूत्रेण, करेण हस्तेन, सलीलं सविलासम्, अगृह्यत गृहीतः। भाविकालङ्कारः।

भावार्थः—अत्रैव भगवान् शङ्करः चञ्चलनेत्रायाः पार्वत्याः मङ्गलकङ्कणयुतं संजातकम्पं पाणि स्रस्तौरगरूपहस्तसूत्रेण स्वकरेणापीडयत्, उभयोरपि सानुरागयोः पाणिग्रहणमत्रैवाभूदित्यर्थः।

समासः—पिनाकभृता—पिनाकं बिभर्तीति पिनाकभृत् तेन (उपपद०)। अधीरविलोचनायाः—अधीरे विलोचने यस्याः सा, तस्याः (बहुव्रीहिः)। आबद्धवेपथुः—आबद्धः वेपथुः यस्य सः (बहुव्रीहिः)। विन्यस्तमङ्गलमहौषधिः—मङ्गलार्था महौषधिः मङ्गलमहौषधिः (मध्यमपललोपी समासः) विन्यस्ता मङ्गलमहौषधिः यस्मिन् सः (बहुव्रीहिः)। स्रस्तोरगप्रतिसरेण—स्रस्तः उरगः एव प्रतिसरः यस्यात् तेन (बहुव्रीहिः)। सलीलम् लीलमा सहितं यथा तथा (बहुव्रीहिः)।

कोशः—'पिनाकोऽजगवं धनुः'। 'अधीरे कातरः'। वेपथुः कम्पः'। सर्वत्राऽप्यमरकोशः। 'आहुः प्रतिसरो हस्तसूत्रे माल्ये च मुण्डने' इति विश्वः।

व्याकरणम्—पिनाकभृता-पिनाक + भृ + क्विप् + तुक् + टा। ईश्वरायाः-ईश + वरच् + टाम् + ङस्। 'स्थेशभासपिकसो वरच्'। इति वरच् प्रत्ययः। 'अजाद्यतष्टाप्'। इति टाप् प्रत्ययः। आवद्धवेपथुः—आ + बन्ध + क्त। वेपृ +

अथुच + सु। सलीलम्-इति क्रियाविशेषणम्। अगृह्यत-गृह उपादाने धातोः कर्मणि लङ्।

पदार्थः—अस्मिन् = इस (हिमालय) पर। पिनाकभृता = शिवजी से। अधीरविलोचनायाः = चञ्चल नेत्रों वाली। ईश्वरायाः = पार्वती का। आबद्धवेपथुः = (सात्विक भाव के कारण) कांपता हुआ। विन्यस्यमङ्गलमहौषधिः = रखी है मंगलसूचक महाऔषधि जिसमें ऐसा। पाणिः = हाथ। स्रस्तोरगप्रतिरेण-स्रस्त = खिसक गया है, उरग = सर्परूप, प्रतिसर = रक्षासूत्र जिससे ऐसे। करेण = (अपने) हाथ से। सलीलं = विशाल पूर्वक। अगृह्यत = ग्रहण किया।

हिन्दी—इसी पर्वतपर पिनाकधारी भगवान् शङ्करने चञ्चलनेत्रोंवाली पार्वतीके मंगल कंकणसे युक्त और सात्विक भावके कारण काँपते हुए हाथको अपने खिसकते हुए सर्परूप सूत्रवाले हाथ से ग्रहण किया था।

अभिप्राय—आबद्धवेपथुः—विभाव, अनुभाव और संचारिभावसे रसकी प्रतीति होती है। विभावके द्वारा होने वाले कार्य या चेष्टाएँ अनुभाव कहलाते हैं। इन्हीं में—स्तम्भ, स्वेद, रोमांच, स्वरभङ्ग, वेपथु, वैवर्ण्य, अश्रु और प्रलय ये ८ सात्त्विक भाव होते हैं। इनमें वेपथु = कांपना भी है। अत्यन्त अनुराग, द्वेष या श्रम आदि के कारण जो शरीर में कम्पन होता है उसे वेपथु कहते हैं। यहाँ शिवजी के प्रति अत्यन्त अनुराग से पार्वती का हाथ काँप रहा था। मंगलमहोषधि-विवाह से पूर्व कन्या और पर के हाथ में एक एक कङ्कण पोटली बाँधी जाती है जिसमें मांगलिक पदार्थ रहते हैं। इसी को कौतुक सूत्र, रक्षा सूत्र या प्रतिसर भी कहते हैं ॥३३॥

क्रामद्‌भिर्घनपदवीमनेकङ्ख्यैस्तेजोभिः शुचमणिजन्मभिर्विभिन्नः।
उस्रणां व्यभिचरतीव सप्तसप्तेः सर्यस्यन्निव निचयः सहस्रसङ्ख्याम् ॥३४॥

अन्वयः—घनपदवीं क्रामद्भिः अनेकसङ्ख्यैः शुचमणिजन्मभिः तेजोभिः विभिन्नः पर्यस्यन् इह सप्तसप्तेः उस्राणां निचया सहस्रसङ्ख्यां व्यभिचरति इव।

व्याख्या—घनपदवीं मेघमार्गम्, आकाशमिति भावः। क्रामद्भिः उद्गच्छद्भिः, अनेकसङ्ख्यैः परःसहस्रैः, शुचिमणिजन्मभिः स्फटकमणिगातैः, तेजोभिः असुभिः,

विभिन्नः, विमतकः, पर्यस्मन् प्रसर्पन्, इह हिमगिरौ, सप्तसप्तेः दिवाकरस्य इव अतिक्रामति इव । उत्प्रेक्षालङ्कारः । प्रहर्षिवीवृत्तम् ।

भावार्थः—मेघमार्गमुल्लङ्घयद्भिर्बहुभिः स्फटिभवैस्तेभिर्मिश्रितः प्रसर्पन् उस्राणां किरणानां समूहः सहस्रसंख्यामतिक्रामतीव ।

समासः—घनपदवीम्-घनानां पदवी ताम् (ष० तत्पु०) । अनेकसङ्ख्यैः-अनेका सङ्ख्या येषां तानि, तैः (बहुव्रीहिः) । शुचिमणिजन्मभिः—शुचयः ते मणयः (कर्मधारयः) शुचिमणिभ्यः जन्मः येषां, तानितैः (व्यधिकरणबहुव्रीहिः) । यथाऽऽह वामनः—'जन्माद्युत्तरपदोर्बहुव्रीहिर्व्यधिकरणोऽपीष्यते' । सप्तसप्तेः-सप्तसप्तयः यस्य सः सप्तसप्तिः तस्य (बहुव्रीहिः) । सहस्रसङ्ख्याम्—सहस्रं च असौ सङ्ख्या, ताम् (कर्मधारयः) ।

कोशः—'पन्थानः पदवी सृतिः' । भास्वद्विवस्वत्सप्ताश्वहरिश्वोष्णरश्मयः' । 'किरणोऽस्रमयूखांशुगभस्तिघृणिरश्मयः' । 'भानुर्हंसः सहस्रांशुस्तपनः सविता रविः' ।

व्याकरणम्—पदवीम्-पद्यतेऽनया 'पद्यदिभ्यामविः' इति अविप्रत्ययः । 'कृदिकारादक्तिनः' इति ङीप् । पद् + अवि + ङीप् + अम् । विभिन्नः—वि + भिद् + क्त + सु । पर्यस्यन्-परि + असु + शतृ । उस्राणाम्-वस + रक् + आम् । वस निवासे धातोः रकि प्रत्यये यजादित्वात् सम्प्रसारणे, आमि रूपम् । व्यभिचरति वि + अभि + चर + तिप् ।

पदार्थः—घनपदवीं = बादलों की । पदवीं—( मार्ग ) को । क्रामद्भिः = लांघते हुए । अनेकसंख्यैः = असंख्य । शुचिमणिजन्मभिः = स्फटिक से पैदा होने वाले । तेजोभिः = तेजों से । विभिन्नः = मिश्रित । पर्यस्यन् = फैलता हुआ । सप्तसप्तेः = सूर्यकी । उस्राणां = किरणों का । निचयः = समूह । सहस्रसंख्यां = हजार की संख्या को । व्यभिचरति इव—लांघ जैसा रहा है ।

हिन्दी—बादलों के मार्ग को लांघते हुए, असंख्य, स्फटिकजन्य किरणों से मिश्रित, फैलता हुआ सूर्य किरणों का समूह, हजार की संख्या को लांघ जैसा रहा है ।

अभिप्राय—सूर्य का नाम सहस्रदीधिति (हजार किरणों वाला) भी है। यहाँ कवि का अभिप्राय यह सै कि इस हिमालय के स्फटिकमणियों की किरणों के मार्ग को लांघ कर सूर्य किरणों से जा मिलती हैं, दोनों की किरणे मिल जाने पर वह प्रकाश इतना फैल जाता है कि फिर सूर्य सहस्रदीधिति न रहकर असंख्य किरणों वाला सा प्रतीत होता है। यह प्रहर्षिणी छन्द है ॥३४॥

व्यधत्त यस्मिन्पुरमुच्चगोपुरं पुरां विजेतुर्धृतये धनाऽधिपः।
स एष कैलाश उपान्तसर्पिणः करोत्यकालाऽस्तमयं विवस्वतः ॥३५॥

अन्वयः—यस्मिन् धनाधिपः पुरां विजेतुः धृतये उच्चगोपुरं पुरं व्यधत्त, सः एषः कैलासः उपान्तसर्पिणः विवस्वतः अकालाऽस्तमयं करोति।

व्याख्या—यस्मिन् कैलासपर्वते, धनाऽधिपः कुबेरः, पुरां विजेतुः त्रिपुर नगरीणां विजयकर्तुः, शिवस्येति भावः। धृतये मनस्तोषाय, उच्चगोपुरम् उन्नत-पुरद्वारम्, पुरं नगरम्, अलकाभिधामित्यर्थः। व्यधत्त निर्मितवान्, सः तादृशः, एषः पुरःस्थितः:, कैलास कैलासाऽऽख्यवता, उपान्तसर्पिणः श्रेणीरप्रान्त-चारिणः, विवस्वतः दिनकरस्य, अकालाऽस्तमयं प्रसिद्धेतरसमयेऽस्तगमनं करोति इव विदधाति इव। वंशस्थवृत्तम्। श्लोकेऽस्मिन् वाचकशब्दप्रयोगाऽभावात्, गूढोत्प्रेक्षाऽ-लङ्कारः। मतान्तरे प्रतीयमानोत्प्रेक्षाऽलङ्कारः। सूर्यस्य कैलासप्रदेशे गतिसम्बन्धाऽ-भावाद् असम्बन्धेऽपि सम्बन्धकथनात्, सम्बन्धाऽतिशयोक्तिः। एतेषां परस्परनिर-पेक्षत्वात् संसृष्टिः।

भावार्थः—यदेकदेशे कैलासे वसतः त्रिपुरजयिनः शिवस्य तुष्टचै कुबेरेणोच्च-पुरद्वारवती अलकाख्या नगरी तत्सविध एव निर्मिता, अत्युच्चतया सोऽयं गिरिः समीपचारिणः सूर्यस्यासमय एवास्तगामितां करोति।

समासः—धनाऽधिपः—धनानाम् अधिपः (ष० तत्पु०)। उच्चगोपुरम्—उच्चं गोपुरं यस्मिस्तत् (बहुव्रीहिः)। अकालाऽस्तमयम्—अकाले अस्तमयम् (स० तत्पु०)।

कोशः—'राजराजो धनाऽधिपः'। 'हरः स्मरहरोभर्गस्त्र्यम्बकस्त्रिपुरान्तकः'। 'धृतिर्धारणधैर्ययोः'। 'पुरद्वारन्तु गोपुरम्' 'अन्यत्तु यन्मूलनगरात् पुरम्'।

भास्वद् विवस्वत् सप्ताश्वहरिदश्वोष्णरश्मयः' । सर्वत्राऽप्यमरकोशः । अस्तं क्षिप्तेऽप्यवसिते त्रिषु ना पश्चिमाऽचले' । इति विश्वः ।

व्याकरणम्—धनाऽधिपः—धन + मधि + पा + क + सु । पुरां विजेतुः—अत्र कृदन्तविक्तृशब्दयोगात् 'कर्तृकर्मणोः कृति' इति । पुरशब्दे षष्ठी प्रयोगः । विजेतुः—वि + जि + तृच् + ङस् । 'ण्वुल् तृचौ' । इति तृच् प्रत्ययः । उपान्तसर्पिणः—उप + अन्त + सृप् + णिनि + ङस् । अस्तमयम्—अस्त + मय ट् ।

पदार्थः—यस्मिम् = जिस ( हिमालय ) में । धनाधिपः = कुबेर ने । पुरां = (त्रिपुरासुर के तीन नगरों) के । विजेतुः = जीतने वाले (शिवजी) के । धृतये = सन्तोष के लिए । उच्चागोरं = ऊँचा है पुरद्वार (नगर के भीतर का फाटक) जिसमें ऐसे । पुरम् = नगर (अलकापुरी) को । व्यधत्त = बनाया । स एषः = वही यह उपान्तसर्पिणः = समीप के भागों में विचरण करते हुए । विवस्वतः = सूर्य को । अकालस्तममं = असमय में ही अस्ताचल को जाने वाला । करोति = कर देता है ।

हिन्दी—जिस हिमालय में कुवेर ने त्रिपुरारि शिवजी को प्रसन्न रखने के लिये ऊँचें-ऊँचे फाटकों वाला नगर बनाया हैं वही पर्वत समीप चारी सूर्य को असमय में ही अस्ताचल को जाने वाला बना दे रहा है ।

अभिप्राय-—शिवजी कुबेर के सखा हैं । हिमालय के एक देश कैलास पर्वत पर रहते हैं । इसलिए कुवेर ने भी उसी के पास अपनी अल्कापुरी बसा ली है । एक तो हिमालय स्वयं इतना ऊँचा है । उस पर कुबेर ने जो नगर बसाया उसके फाटक इतने ऊँचे बनाये हैं कि सूर्य का मार्ग अवरुद्ध हो जाता हैं । जिससे असमय में ही अर्थात् दिन पूरा होने से पूर्व ही वह अस्ताचल को चला जाता है । तात्पर्य यह है कि जिन भागों में उन्न ऊँचे गोपुरों की छाया पड़ती है वहाँ सूर्य अस्त हुआ सा प्रतीत होता है । त्रिभुवन का सर्वाधिक सम्पत्तिशाली कुबेर भी इसी में रहता है यह तात्पर्य हैं । यह वंशस्थ छन्द है । ॥३५॥

नानारत्नज्योतिषां सन्निपातैश्छन्नेष्वन्तःसानु वप्राऽन्तरेषु ।
बद्धां बद्धां भित्तिशङ्कामसुष्मिन्नावानावान्मातरिश्वा निहन्ति ॥३६॥

अन्वयः—अमुष्मिन् अन्तःसानुषु नानारत्नज्योतिषां सन्निपातैः छन्नेषु वप्रान्तरेषु बद्धां बद्धां भित्तिशङ्काम् आवान्-आवान् मातरिश्वा निहन्ति ।

व्याख्या—अमुष्मिन् कैलासपर्वते, अन्तःसानुगूढ प्रस्थेषु नानारत्नज्योतिषां विविधमणितेजसां, सन्निपातैः समूहैः छन्नेषु छादितेषु, वप्राऽन्तरेषु कटकमध्यभागेषु, बद्धां निबद्धाम् अभीक्ष्णबद्धां, दृढोत्पादितामिति भावः। भित्तिशङ्कां कुड्यसन्देहम्, आवान् अभीक्ष्णमापतन्, मातरिश्वा वायुः, निहन्ति निवर्तयति, अर्थाद् वायुसञ्चरणात् भित्तिसन्देहनिवृत्तिर्जातेति। शालिनीवृत्तम्। तल्लक्षणं यथा—'शालिन्युक्ता म्तौ गतौ गोऽब्धिलोकैः'। पद्येऽस्मिन् निश्चयान्तः सन्देहाऽलङ्कारः।

भावार्थः—कैलासशिखरेष्वनेकमणिकान्तीनां व्यतिकरैश्च्छादितेषु कटकान्तरेषु दृढोत्पादितां भित्तिरितिशङ्काम् अभीक्ष्णमापतन् वायुर्निवारयति।

समासः—अन्तःसानुषु—सानुषु इति, विभक्त्यर्थे अव्ययीभावः। नानारत्नज्योतिषाम्—नाना च तानि रत्नानि (कर्मधारयः), नानारत्नानां ज्योतींषि तेषाम् (ष० तत्पु०)। वप्रान्तरेषु वप्राणाम् अन्तराणि तेषु (ष० तत्पु०)। भित्तिशङ्काम्—भित्तिविषये शङ्का ताम् (स० तत्पु०)। मातरिश्वा—मातरि श्वयति, इति (उपद०)।

कोशः—'स्नुः प्रस्थः सानुरस्त्रियाम्'। 'नानाऽनेकोभयार्थयोः'। 'ज्वालाभासोर्न पुंस्यर्चिर्ज्योतिः'। 'श्याच्चयो वप्रमस्त्रियाम्'। भित्तिः स्त्री कुड्यम्'। 'श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—छन्नेषु—'वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः'। इति निपातनात् साधु। पक्षान्तरे छादितेषु इति। बद्धां बद्धाम् एवञ्च आवान्-आवान्, इत्युभयत्र 'नित्य वीप्सयोः'। इति नित्यार्थे, आभीक्ष्ण्ये च द्विरुक्तिः। बद्धाम्—बन्ध + क्त + टाप् + अम्। आवान्—आङ् + वा + शतृ + सु।

पदार्थः—अयुष्मिन् = इस (कैलास) में। अन्तःसानु = शिखरों में। नानारत्नज्योतिषां = विभिन्न रत्नों की किरणों के। सन्निपातैः = पड़ने से। छन्नेषु = ढके हुए। वप्रान्तरेषु = कटकों (ढूहों) के बीच। बद्धां-बद्धां = बार-बार बद्ध होनेवाली। भित्तिशङ्कां = दीवाल की शङ्का को। आवान्-आवान् = बार-बार आता हुआ। मातरिश्वा = वायु। निहन्ति = नष्ट कर रहा है।

हिन्दी—इस कैलासकी चोटियोंके बीचमें विभिन्न रत्नोंकी किरणोंके मिलनेसे

ीवार जैसी बन जाती है। चूँकि बार-बार वायु आरपार आ-जा रहा है इसलिए ीवारकी शङ्काका निवारण हो जा रहा है।

अभिप्राय—तात्पर्य यह है कि कैलास पर्वतके शिखर रत्नमय है। उन त्नोंकी इतनी घनी किरणें निकलती हैं कि दो शिखरोंके बीच एक दीवारसी ीखती है। उसे निश्चय ही लोग दीवार समझते हैं। किन्तु जब वायु बराबर क शिखरसे दूसरेमें आता जाता है तो दीवारकी शङ्का नहीं रह जाती क्योंकि ोग समझते हैं यदि यह दीवार होती तो वायु आर-पार कैसे आता जाता। यहाँ र पहिले दीवारका सन्देह होकर फिर दीवार न होनका निश्चय होने से निश्चयान्त न्देह अलंकार है। यह शालिनी छन्द है। इसका लक्षण है—मात्तौ गौ च्छालिनी वेदलोकैः। अर्थात् मगण दो तगण और दो गुरु तथा ४-७ पर िराम होता है ॥ ३६ ॥

रम्या नवद्युतिरपैति न शाद्वलेभ्यः
श्यामीभवन्त्यनुदिनं नलिनीवनानि।
अस्मिन्विचित्रकुसुमस्तबकाऽऽचितानां
शाखाभृतां परिणमन्ति न पल्लवानि ॥३७॥

अन्वयः—अस्मिन् शाद्वलेभ्यः रम्या नवद्युतिः न अपैति, नलिनीवनानि नुदिनं श्यामीभवन्ति, विचित्रकुसुमस्तवकाऽऽचितानां शाखाभृतां पल्लवानि परिणमन्ति।

व्याख्याः—अस्मिम् हिमगिरौ, शाद्वलेभ्यः तृणहरितप्रदेशेभ्यः, रम्या सुरम्या, नवद्युतिः नूकान्तिः, न अपैति नापगच्छति, अर्थाद् साऽत्र स्थायिनी वर्तते, र्थः। नलिनीवनानि कमलिनीकाननानि, अनुदिनं सर्वदा, श्यामीभवन्ति न ाचित् पाण्डुरताङ्गच्छन्ति, विचित्रकुसुमस्तवकाऽऽचितानां विविधविधपुष्पगुच्छ- ानां, शाखाभृतां वृक्षाणां, पल्लवानि किसलयानि, न परिणमन्ति न परिणतानि न्ति, तत्र सर्वदा सर्वं नूतनमेव वर्तत इत्यर्थः। वसन्ततिलकावृत्तम्। पर्यायोक्तिर- ङ्कारः।

भावार्थः—अस्मिन् शष्पाणि नित्यमेव हरितानि दृश्यन्ते, नीलकमलानि च

दिनावसानेऽपि नीलान्येव भवन्ति तथा विभिन्नवर्णकुसुमगुच्छैः पूर्णानां तरूणां च पल्लवानि कदापि जीर्णानि न भवन्ति।

समासः—नवद्युतिः—नवा च असौ द्युतिः ( कर्मधारयः )। नलिनीवनानि—नलिनीनां वनानि ( ष० तत्पु० )। अनुदिनम्—दिनं दिनम् इति, वीप्सायाम् ( अव्ययीभावः )। विचित्रकुसुमस्तवकाचितानाम्—विचित्राणि च तानि कुसुमानि ( कर्मधारयः ), तेषां स्तवकाः ( ष० तत्पु० ), तैः आचिताः तेषाम् (तृ० तत्पु०)। शाखभृताम्—शाखाः बिभ्रतीति शाखाभृतः, तेषाम् ( उपपद० )।

कोशः—'शाद्वलः शादहरिते'। 'शोभाकान्तिर्द्युतिश्छविः'। 'स्याद्गुच्छकस्तु स्तबकः'। 'वृक्षो महीरुहः शाखी विटपी पादपस्तरुः'। सर्वत्राप्यमरकोशः।

व्याकरणम्—शाद्वलेभ्यः—शाताः सन्ति अस्मिन् देशे इति। शाद + डवलच् + टिलोपः + भ्यस्। 'नडशादाड्ड्वलच्'। इति डवलच् प्रत्ययः। श्यामीभवन्ति—श्याम + च्वि + भू + झि। शाखाभृताम्—शाखा + भृ + क्विप् + तुक् + आम्।

पदार्थः—अस्मिन् = इस ( पर्वत ) में। शाद्वलेभ्यः = घासोंसे। रम्या = रमणीय। नवद्युतिः = कोमल कान्ति। न अपैति = दूर नहीं होती। नलिनी-वनानि = कमलिनी समूह। अनुदिनं = दिन ढलने पर भी। श्यामीभवन्ति = सांवले ही रहते है। विचित्रकुसुमस्तवकाचितानां = रंगविरंगे फूलोंके गुच्छोंसे भरे हुए। शाखाभृतां = वृक्षोंके। पल्लवानि = किसलय। न परिणमन्ति = जीर्ण नहीं होते।

हिन्दी—इस पर्वतपर घासोंकी रमणीय कान्ति कभी दूर नहीं होती। नील कमल दिनके पश्चात् भी नीले ही रहते है और रंगविरंगे फूलोंके गुच्छोंसे भरे वृक्षोंके किसलय कभी जीर्ण नहीं होते।

अभिप्रायः—सामान्य घास सूखने पर पीली पड़ जाती है, कमलिनी दिनके वाद मुरझा जाती है और वृक्षोंके किसलय भी बड़े होनेपर जीर्ण हो जाते हैं या पत्तोंके रूपमें वदल जाते हैं किन्तु इस पर्वतमें घासवर मरकतमणियोंकी हरी किरणें कमलिनियोंपर इन्द्रनीलकी नीली किरणें और किसलयोंपर विद्रुम की लाल-लाल किरणें पड़नेसे वे सदा वैसे ही दिखाई देते हैं। यहाँ घास, कमलिनी और किस-लयोंकी कान्तिकी स्थिरता रूप कार्यका वर्णन किया गया है किन्तु उसके कारण

ं कल्पना करनी पड़ती हैं, जिससे कैलास पर्वतकी अद्भुत महिमा प्रतीत होती है इसलिए पर्यायोक्ति अलंकार है। वसन्ततिलका छन्द है ॥३७॥

परिसरविषयेषु लीढमुक्ता हरिततृणोद्गमशङ्कया मृगीभिः।
इह नवशुककोमला मणीनां रविकरसंवलिताः फलन्ति भासः ॥३८॥

अन्वयः—इह परिसरविषयेषु मृगीभिः हरिततृणोद्गमशङ्कया लीढमुक्ताः नवशुककोमलाः मणीनां भासः रविकरसंवलिताः फलन्ति।

व्याख्याः—इह हिमालये परिसरविषयेषु पर्यन्तदेशेषु, मृगीभिः हरिणीभिः हरिततृणोद्गमशङ्कया हरितशष्पाङ्कुरभ्रान्त्या, लीढमुक्ताः आस्वादितपरित्यक्ताः, नवशुककोमलाः नूतनकीरकोमलाः मणीनां रत्नानां, भासः दीप्तयः, रविकरसंवलिताः सूर्यकिरणमिश्रिताः सत्यः, फलन्ति सम्मूर्च्छन्ति, वर्द्धन्ते, इति भाव। पुष्पिताग्रावृत्तम्। भ्रान्तिमानलङ्कारः।

भावार्थः—अत्र पर्यन्तप्रान्तेषु मृगीभिः हरिततृणभ्रमेणास्वाद्य परित्यक्ताः बालकीरवत्कोमलाः मणिभासः सूर्यकिरणैः सह मिश्रिताः सत्यो वर्द्धन्ते।

समासः—परिसरविषयेषु—परिसराः च ते विषयाः तेषु (कर्मधारयः)। हरिततृणोद्गमशङ्कया—हरितानि च तानि तृणानि (कर्मधारयः)। तेषाम् उद्गमः (ष० तत्पु०), तस्य शङ्का तया (ष० तत्पु०)। लीढमुक्ताः—पूर्वं लीढाः पश्चात् मुक्ताः, ताः (कर्मधारयः)। नवशुककोमलाः—नवाः च ते शुकाः (कर्मधारयः) इव कोमलाः (उपमानकर्म०)। रविकरसंबलिताः—रवेः कराः (ष० तत्पु०) ः संवलिताः (तृ० तत्पु०)।

कोशः—'पर्यन्तभूः परिसरः'। 'हरिणी स्यान्मृगी'। 'कीरशुकौ समो'। 'रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च'। 'स्युः प्रभा रुग्रुचिस्त्विड्भा'। 'भानुः करो मरीचिः स्त्री पुंसयोर्दीधितिः स्त्रियाम्'। सर्वत्राप्यमरकोशः।

व्याकरणम्—लीढमुक्ताः—लिह् + क्त, मुच् + क्त + जस्। भासः—भासदीप्तौ धातोः क्विप्। भास + क्विप् + जस्। फलन्ति—फलनिष्पत्तौ धातोः झि प्रत्यये रूपम्।

पदार्थः—इह = इस (कैलास) के। परिसरविषयेषु = समीपवर्ती भागों में। मृगीभिः = हरिणियों से। हरिततृणोद्गमशङ्कया = हरे भरे घास के उगने की शङ्का

से ( हरी घास समझकर )। लीढमुक्ताः = चाटकर छोड़े हुए। नवशुककोमलाः = नये-नये तोते कीं तरह कोमल। मणीणां = ( मरकत ) मणियों की। भासः = किरणें। रविकरसंवलिताः = सूर्य की किरणों से मिलकर। फलन्ति = बढ़ रही हैं।

हिन्दीः—कैलास के प्रान्त भागों में हरी घास के अंकुर समझकर मृगियों द्वारा चखकर छोड़ी हुइ, छोटे-छोटे तोतों जैसी कोमल, मरकत मणियें की किरणें, सूर्य किरणों से मिलती हुई फैल रही हैं।

अभिप्रायः—पर्वत के प्रान्त भाग में मरकत मणियों की ऊपर उठती हुई किरणों को, मृगियाँ हरी-हरी घास समझकर चरने की चेष्टा करती हैं, किन्तु मुख में कुछ नहीं आता तो छोड़ देती हैं यह भ्रान्तिमान् अलङ्कार है। पुष्पिताग्रा छन्द है ॥३८॥

उत्फुल्लस्थलनलिनीवनादमुष्मादुद्धूतः सरसिजम्भवः परागः।
वात्याभिर्वियतिविर्वतितः समन्तादाधत्ते कनकमयातपत्रलक्ष्मीम् ॥३९॥

अन्वयः—वात्याभिः अमुष्मात् उत्फुल्लस्थलनलनीवनात् उद्धूतः वियति समन्तात् विर्वतितः सरसिजसम्भवः परागः कनकमयातपत्रलक्ष्मीम् आधत्ते।

व्याख्या—( अस्मिन् हिमपर्वते ) वात्याभिः पवनैः, अमुष्मात् पुरो दृश्यमानात्, उत्फुल्लस्थलनलिनीवनात् विकसितस्थलकमलिनीोपिभाया जलपतितपरागस्योत्थानाऽम्भवादत्र स्थलपदप्रयोगः। उद्धूतः उत्थापितः, वियतिरेव, समन्तात् परितः, विर्वतितः परिमण्डलितः, अन्तराले तु दण्डायमान एवेति भावः। सरसिजसम्भवः कमलजातः, परागः सुमनोरजः, कनकमयातपत्रलक्ष्मीं सुवर्णमयच्छत्रशोभाम्, अनुकरोति। प्रहर्षिणीवृत्तम्। श्लोके परागस्य आतपत्रलक्ष्मीसम्वन्धाऽसम्भवात् तत्तुल्यां लक्ष्मीमिति बिम्बप्रतिबिम्बभावेन सिद्ध्यति, यदियम् असम्भवद्धर्मसम्बन्धा निदर्शनेति।

भावार्थः—इहाद्रौ वात्याचक्रेण स्थलपद्मिनीसमूहादुत्थापितो वियति परिभ्रमन् कमलपरागः सुवर्णमयं छत्रमनुकरोति।

समासः—उत्फुल्लस्थलनलिनीवनात्—स्थले नलिन्यः (स० तत्पु०) उत्फुल्लाः च ताः स्थलनलिन्यः ( कर्मधारयः ) तासां वनं तस्मात् ( ष० तत्पु० )। सरसिज-

सम्भवः—सरसिजेभ्यः सम्भवः यस्य सः ( व्यधिकरणबहु० ) । कनकमयाऽऽतपत्रलक्ष्मीम्-कनकमयं च तत् आतपत्रं (कर्मधारयः ) तस्य लक्ष्मीः ताम् (ष० तत्पु०) ।

कोशः—'वातूलः पुंसि वात्यायामपि वातासहे त्रिषु' । 'प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः' । 'वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी' । 'परागः सुमनोरजः' । 'छत्रं त्वातपत्रम्' । सम्पत्तिः श्रीश्च लक्ष्मीश्च' । सर्वत्राऽप्यमरकोशः ।

व्याकरणम्—वात्याभिः—वातानां समूहा वात्याः ताभिः, वात + य + टाप् + भिस् । 'पाशादिभ्यो यः' । इति य प्रत्ययः । उत्फुल्लात्—उत् + फुल्ल + क्त + ङस् । 'उत्फुल्लसम्फुल्लयोरुपसङ्ख्यानम्' । इति निष्ठायाः लत्वम् । सरसिजम्—सरसि जातानि इति विग्रहे 'सप्तम्यां जनेर्डः' । इति ड प्रत्ययः डित्वात् टिलोपः सौ रूपम् कनकमयम्—कनक + मयट् + सु + अम् । आतपत्रम्—आतप + त्रैङ क + सु + अम् ।

पदार्थ—वात्याभिः = बवंडरों द्वारा । उत्फुल्लस्थलनलिनीवनात् = खिली हुई स्थलकमलिनियोंके समूहसे । उद्धृतः = उड़ाया हुआ । वियति = आकाशमें । समन्तात् = चारों ओर । विवर्त्तितः = गोलाकार घूमता हुआ । सरसिजसम्भवः = कमलोंसे उत्पन्न । परागः = केशर । कनकमयातपत्रलक्ष्मीम् = सुवर्णमय छत्रकी शोभाको । आधत्ते = धारण करता है ।

हिन्दी—आँधी द्वारा भूकमलोंके बनोंसे उड़ाया हुआ और आकाशमें चक्कर काटता हुआ जङ्गलोंका पीला-पीला पराग सोनेके छत्र-सा दीखता है ।

अभिप्रायः—यहाँ मल्लिनाथ "स्थलपद्मिनीके बनोंसे उड़ाया हुआ" से यह अभिप्राय लेते हैं कि जलमें खिले कमलोंसे जो पराग झड़ेगा वह तो पानीमें पड़कर भींग जायगा । उसे आंधी उड़ा नहीं सकती । इसलिए भूकमलोंका पराग ही उड़कर आकाशमें मण्डलाकार घूमता है । किन्तु इस कल्पनामें सामान्यतया पराग न कहकर सरसिजसम्भवः कहना खटकता है । क्योंकि जिस अभिप्रायसे स्थलपद्मिनी कहा उसमें व्याघात होता है । यहाँ सरसिज शब्द सामान्यरूपसे कमलका वाचक है । कमलोंका आंधीसे उड़ाया गया पराग इस पर्वतके ऊपर सोनेके छत्र-सा दीखता है, यहाँपर परागका छत्रकी शोभासे कोई सम्बन्ध नहीं होता अतः छत्रकी जैसी

शोभा यह आक्षेप करना पड़ता है। धर्म ( शोभा ) का आक्षेप होनेसे यह असम्भवद्धर्मसंबन्धा निदर्शना अलङ्कार है, प्रहर्षिणी छन्द है ॥३९॥

इह सनियमयोः सुरापगायामुषसि सयावकसव्यपादरेखा ।
कथयति शिवयोः शरीरयोगं विषमपदा पदवी विवर्तनेषु ॥ ४० ॥

अन्वयः—इह उषसि सुरापगायां सयावकसव्यपादरेखा विषमपदा विवर्तनेषु पदवी सनियमयोः शरीरयोगं कथयति ।

व्याख्या—इह अस्मिन् पर्वतविशेषे, उषसि अहर्मुखे सुराऽऽपगायां अमृतगङ्गायां, सयावकसव्यपादरेखा सालक्तकवामचरणलेखा, विषमपदा महदल्पपदा विवर्तनेषु प्रदक्षिणेषु, पदवी सरणिः, शिवयोः प्रदक्षिणपद्धतिरितिभावः । सनिमयोःनियमयुक्तयोः, शिवयोः उमासङ्केउवसोः शरीरयोगम् अर्धाङ्गमुखं कथयति सूचयति । पुष्पिताग्रावृत्तम् । काव्यलिङ्गमलङ्कारः ।

भावार्थः—इह प्रातः स्वर्गङ्गायां परिभ्रमणेषु सालङ्कवामपाद्चिह्नवती महत्यल्पा च पदपंक्तिः स्नानादागतयोः पार्वतीशंकरयोः देहयोगं प्रकटयति, तस्यार्द्धनारीश्वरत्वं व्यञ्जयतीत्यर्थः ।

समासः—सुराऽऽपगायाम्—सुराणाम् अपगा तस्याम् ( ष० तत्पु० ) । सयावकसव्यपादरेखा-यावकेन सहिता सयावका ( तुल्ययोगबहु० ), सव्यः च असौ पादः ( कर्मधारयः ) सव्यपादस्य रेखा ( ष० तत्पु० ), सयावका च असौ सव्यपादरेखा ( कर्मधारयः ) । विषमपदा—विषमाणि पदानि यस्यां सा (बहुव्रीहिः) । सनियमयोः—नियमेन सहितौ सनियमौ तयोः ( तुल्ययोगबहु० ) । शिवयोः-शिवा च शिवः च तयोः ( एकशेषद्वन्द्वः ) ।

कोशः—'प्रत्यूषोऽहर्मुखं कल्यमुषः प्रत्युषसी अपि' । 'वामं शरीरं सव्यं स्यादपसव्यन्तु दक्षिणम्' । 'भावोऽलक्तो द्रुमाऽऽलयः' । पदवी सृतिः सरणिः पद्धतिः पद्या वर्त्मन्येकपदीति च' । सर्वत्राऽप्यमरकोशः ।

व्याकरणम्—इह–'इदमोहः' इति ह प्रप्ययः । 'इदम् इश्' । इति इश् प्रत्ययः । उषसि—उष दाहे धातोः 'उषः किच्च' । इति असिः, सप्तम्येकवचने रूपम् । सव्यम्-षु प्रेरणे धातोः 'अचो यत्' इति यत् प्रत्ययः । पदवी-पद्यते-

तया, 'पादिभ्यामविः' इति अविप्रत्ययः, 'कृदिकारादक्तिनः' इति ङीष्। कथयति–कथ + णिच् + लट् + तिप्।

हिन्दी—इस पर्वतपर प्रातः स्वर्गगङ्गामें स्नान करके लौटते हुए पार्वती और शिवजीकी, महावर लगे बायें पैरवाली तथा छोटे बड़े पैरोंके आकारवाली पदपंक्ति उनके शरीरोंकी एकता ( अर्द्धनारीश्वरत्व ) को कह रही है।

अभिप्राय—शिवजी अर्द्धनारीश्वर हैं अर्थात् उनका आधा शरीर पार्वती और आधा शंकरका है। वे जब प्रातः स्नान करके लौटते हैं तो पैरोंके निशान जो भूमि पर पड़ते हैं उनमें बायां अंग स्त्री ( पार्वती ) रूप होनेसे उस ओरके पैरका महावर भी भूमिपर लगा रहता है। पुरुष का पैर स्त्रीकी अपेक्षा बड़ा होता है अतः दाहिने पैरका निशान बड़ा व बांये पैर का छोटा दीखता है। यहाँ मल्लिनाथने "सनियमयोः" से "सन्ध्यावन्दनादि नियमके समय भी वे दोनों एक दूसरेसे पृथक् नहीं हो सकते" यह भाव लिया है। इसमें ग्राम्यताकी झलक आती है। कविका अभिप्राय तो केवल शिवजीके अर्द्धनारीश्वर रूपको दर्शाना मात्र है। पदपंक्तिके दो विशेष पद सयावक होना और छोटा बड़ा होना इस क्रममें हेतु हैं अतः पदार्थहेतुक काव्यलिङ्ग है तथा पुष्पिताग्रा छन्द है ॥ ४० ॥

सम्मूर्च्छतां रजतभित्तिमयूखजालै-
रालोलपादपलतान्तरनिर्गतानाम्।
धर्मद्युतेरिह मुहुः पटलानि धाम्ना-
मादर्शमण्डलनिभानि समुल्लसन्ति ॥ ४१ ॥

अन्वयः—इह रजतभित्तिमयूखजालैः सम्मूर्च्छताम् आलोलपादपलतान्तरनिर्गतानां धर्मद्युतेः धाम्नाम् आदर्शमण्डलनिभानि पटलानि मुहुः समुल्लसन्ति।

व्याख्या—इह पर्वते, रजतभित्तिमयूखजालैः रूप्यकुड्यगभस्तिभिः सम्मूर्च्छताम् बहुलीभवताम् आलोलपादपलतान्तरनिर्गताना चञ्चलवृक्षवल्लीरन्ध्रप्रसृतानां, धर्मद्युतेः निदाघराजस्य धाम्नां तेजसाम्, आदर्शमण्डलनिभानि दर्पणब्रिम्बसदृशानि, पटलानि मण्डलानि, मुहुः वारं वारं वारं, समुल्लसन्तिस्फुरन्ति पुष्पिताग्रावृत्तम्। काव्यलिङ्गमलङ्कारः।

भावार्थः—इह रौप्यभित्तिकिरणसमूहैर्बहुलीभवतां चलवृक्षलतामध्यान्निर्गतानां सूर्यरश्मीनां दर्पणबिम्बसदृशानि मण्डलानि मुहुः स्फुरन्ति।

समासः—रजतभित्तिमयूखजालैः–रजतस्य भित्तयः ( ष० तत्पु० ), तासां मयूखाः तेषां जालानि तैः ( ष० तत्पु० )। आलोलपादपलतान्तरनिर्गताम्—पादपानां लताः ( ष० तत्पु० ) आलोलाः च ताः पादपलताः ( कर्मधारयः ), तासाम् अन्तराणि ( ष० तत्पु० ), तेषु निर्गतानि तेषाम् ( स० तत्पु० )। घर्मद्युतेः घर्माद्युतिः यस्य तस्य ( बहुव्रीहिः )। आदर्शमण्डलनिभानि—आदर्शानां मण्डलानि ( ष० तत्पु० ), आदर्शमण्डलैः निभानि ( तृ० तत्पु० )

कोशः—'भित्तिः स्त्री कुड्यम्'। 'किरणोऽस्रमयूखांशुगभस्तिघृणिरश्मयः'। 'घर्मो निदाघः स्वेदः स्यात्'। 'गृहदेहत्विट्प्रभावा धामानि'। 'निभसङ्काशनीकाशप्रतीकाशोपमादयः'। 'समूहे पटलं न ना'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—इह–'इदमोहः'। इति ह प्रत्ययः। 'इदम् इश' इति इश् प्रत्ययः। धाम्नाम्–धा + मनिन् + आम्। पटलम्–पटं विस्तारं लाति, पट + ला + क + सु + अम्। समुल्लसन्ति–सम् + उत् + लस + झि।

पदार्थः—इह = इस ( कैलास ) में। रजतभित्तिमयूखजालैः = चांदीकी दीवालोंके किरण समूहोंसे। संमूर्च्छतां = फैलते हुए। आलोलपादपलतान्तरनिर्गतानाम् = हिलती हुई वृक्षलताओंके बीचसे निकलते हुए। घर्मद्युतेः = सूर्यकी धाम्नां = किरणोंके। आदर्शमण्डलनिभानि = शीशेके बिम्ब जैसे। पटलानि = मण्डल। मुहुः = बार-बार। समुल्लसन्ति = चमकते हैं।

हिन्दी—इस कैलास पर्वतपर चांदीकी दीवारोंसे निकलती हुई शुभ्र किरणोंसे सूर्यकी किरणें और भी अधिक प्रकाशमयी हो रही हैं। वह प्रकाश जब हिलते हुए वृक्षों की शाखाओंके बीचसे गुजरता है तब बारबार ऐसा प्रतीत होता है जैसे दर्पणपर सूर्यकी किरणें पड़नसे उसकी परझाँई ऊपरको उठ रही हो।

अभिप्राय—दर्पण जब धूपमें रखा जाय तो उससे एक पर झांई सी ऊपरको उठती है और उसका प्रतिबिम्ब जहाँ पड़ता है वहाँ सूर्य किरणों से भी अधिक प्रकाश होता है यहाँ भी सूर्य किरणे चाँदोकी दीवारोंसे टकराकर दूना प्रकाश कर रही हैं और वह प्रकाश जब हिलते हुए पेड़ोंकी शाखाओंके बीचसे बाहर आ रहा

हैं तो गोलाकार रूपसे निलती हुई वे प्रकाश किरणें वैसी ही लग रही हैं जैसी कि दर्पण से निकलती हुई लगती है। यहाँ उपमालङ्कार है और वसन्ततिलका छन्द ॥ ४१ ॥

शुक्लैर्मयूखनिचयैः परिवीतमूर्ति-
वंप्राऽभिघातपरिमण्डलितोरुदेहः ।
शृङ्गाण्यमुष्य भजते गणभर्तुरुक्षा
कुर्वन्वधूजनमनःसु शशाऽङ्कशङ्काम् ॥४२॥

अन्वयः—शुक्लैः मयूखनिचयैः परिवीतमूर्तिः वप्राऽभिघातपरिमण्डलितोरुदेहः गणभर्तुः उक्षा वधूजनमनःसु शशाङ्कशङ्कां कुर्वन् अमुष्य शृङ्गाणि भजते ।

व्याख्या—शुक्लैः शुभ्रैः, मयूखनिचयैः शशिमूहैः, परिवीतमूर्तिः व्यासकायः, वप्राऽभिघातपरिमण्डलियोरुदेहः वप्रक्रीडया वर्तुलीकृतस्फीतकायाः, गणभर्तुः प्रमथादिस्वामिनः शिवस्य, उक्षा वृषभः, वधूजनमनःसु स्त्रीजनहृदयेषु, शशाङ्कशङ्कां चन्द्रोदयमिति भ्रान्ति, कुर्वन् रचयन्, तासां मुग्धत्वात्, अमुष्य कैलासपर्वतस्य, शृङ्गाणि शिखराणि, भजते सेवते ।

भावार्थः—शुभ्रकिरणैर्व्याप्तदेहः वप्रक्रिडायां वर्तुलीकृतकायः शिवस्य वाहनो वृषभः स्त्रीजनमनःसु शशांकशंकामुत्पादयन् अस्य कैलाशस्य शिखरेषु तिष्ठति ।

समासः—मयूखनिचयैः—मयूखानां निचयाः तैः (ष० तत्पु०)। परिवीतमूर्तिः-परिवीता मूर्तिः यस्य सः (बहुव्रीहिः)। वप्राऽभिघातपरिमण्डलितोरुदेहवप्रे अभिघातः ( स० तत्पु० ), तेन परिमण्डलितः ( तृ० तत्पु० ), वप्राऽभिघात परिमण्डलितः ऊरुः देहः यस्य सः (बहुव्रीहिः)। गणभर्तुः—गणानां भर्ता तस्य (ष० तत्पु०)। वधूजनमनःसु—वध्वः च ते जनाः (कर्मधारयः), तेषां मनांसि तेषु (ष० तत्पु०)। शशाङ्कशङ्काम्-शशः अङ्कः यस्य सः (बहुव्रीहिः), शशाङ्कस्य शङ्का ताम् ( ष० तत्पु० )।

कोशः—'शुक्लः शुभ्रः शुचिः श्वेतः' । 'किरणोऽस्रमयूखांशुगभस्तिघृणि रश्मयः' । 'मूर्तिः काठिन्यकाययोः' । 'स्याच्चयो वप्रमस्त्रियाम्'। उक्षाऽनड्वान् बलीवर्द ऋषभो वृषभो वृषः' । 'स्वान्तं हृन्मानसं मनः' । कूटोऽस्त्री शिखरं शृङ्गम्' । सर्वत्राऽप्यमरकोशः ।

व्याकरणम्—शुक्लः–शुकगतौ धातोः 'ऋजेन्द्र०' इति निपातनात् साधु। मयूखः–'माङ ऊखो मय च' इति ऊख प्रत्ययः मयादेशः च। मूर्तिः–मूर्च्छति इति 'मूर्च्छा मोहसमुच्छ्राययोः, इति धातोः 'क्तिच् क्तौ च संज्ञायाम्'। इति क्तिच् प्रत्ययः। उक्षा–उक्षसेचने धातोः, 'श्वन्नुक्षन्०'। इति त्रयोदशब्दाः किन-प्रत्ययान्ताः निपात्यन्ते। कुर्वन्–कृ + शतृ + । शृङ्गम्–शृ हिंसायां धातोः 'शृणातेर्ह्रस्वश्च' इति गन् प्रत्ययः, ह्रस्वः कित्वं नुट् च। भजते—भज सेवायाम्, धातोः लटि त प्रत्यये रूपम्।

पदार्थ—इह = इस (कैलास) में। रजतभित्तिमयूखजालैः = चांदीकी दीवालों के किरण समूहों से। संमुर्च्छतां = फैलते हुए। आलोलपादपलतान्तरनिर्गतानाम् = हिलतो हुई वृक्षलताओं के बीच से निकलते हुए। घर्मद्युतेः = सूर्यकी। धाम्नां = किरणों के। आदर्शमण्डलनिभानि = शीशे के विम्ब जैसे। पटलानि = मण्डल। मुहुः = बार-बार। समुल्लसन्ति = चमकते हैं।

हिन्दी—स्वच्छ एवं सफेद किरणों से व्याप्त, वप्रक्रीड़ा में शरीर को गोलाकार किये हुए शिवजी का वाहन नन्दी, स्त्रियों के मन में चन्द्रमा की शंका उत्पन्न करता हुआ इस कैलाश के शिखरों में विचरता है।

अभिप्राय—वप्राभिघातः–मदोन्मत्त हाथी अपने दाँतों से तथा उन्मत्त सांड़ अपने सींगों से जो ऊँचे दीलेंं को कुरेदते हुए मिट्टी निकालते हैं वह वप्रक्रीड़ा कहलाती है। यहाँ कैलास के शिखर सफेद हैं, उनकी किरणें वृषभ पर पड़ती हैं और वह स्वयं भी सफेद है अतः चन्द्रमा की तरह चमक रहा है। वप्रक्रीड़ा में निकलती हुई इन्द्रनील आदि मणियों की कान्ति उसके शरीर के कुछ भाग पर पड़ जाती है जिससे चन्द्रमा के कलंक की तरह प्रतीत होती है और गर्दन घुमाकर जब वह ऊँचे टीलों को सींग से खोदने लगता है तो उसकी देह गोलाकार हो जाती है। इसलिए गोलाकार होने से, किरणों से व्याप्त होने से, तथा कुछ अंश में कालिमायुक्त होने से स्त्रियाँ उसे चन्द्रमा समझने लगती हैं। क्योंकि वह कैलास के ऊँचे शिखरों पर विचरता हुआ यह कृत्य करता है। स्त्रियाँ समझने लगती हैं—का तात्पर्य है कि वे भोली-भाली होती हैं अतः उनको चन्द्रमा की भ्रान्ति

हो जाती है। यहाँ भ्रान्तिमान् या सन्देह अलंकार प्रतीत होता है किन्तु वास्तव में कविकी अतिशयोक्ति ही है। वसन्ततिलका छन्द है ॥४२॥

सम्प्रति लब्धजन्म शनकैः कथमपि लघुनि
क्षीणपयस्युषि भिदां जलधरपटले।
खण्डितविग्रहं बलभिदो धनुरिह विविधाः
पूरयितुं भवन्ति विभवः शिखरमणिरुचः ॥४३॥

अन्वयः—इह विविधाः शिखरमणिरुचः सम्प्रति लघुनि क्षीणपयसि भिदाम् उपेयुषि जलधरपटले कथमपि शनकैः लब्धजन्मखण्डितविग्रहं बलभिदः धनुः पूरयितुं विभवः भवन्ति।

व्याख्या—इह कैलासपर्वते, विविधाः भिन्नप्रकाराः, विभिन्नवर्णाः इत्यर्थः। शिखरमणिरुचः शृङ्गरत्नतीतयः, सम्प्रति अधुना, शरदीति भावः। लघुनि लघुभूतानि, क्षीणपयसि नष्टजले, भिदां भेदम्, उपेयुषि, जलधरपटले मेघमण्डले, कथमपि केनाऽपि विधिना, शनकैः शनैः, लब्धजन्म उत्पन्नं, खण्डितविग्रहं विछिन्नस्वरूपं, बलभिदः इन्द्रस्य। धनुः कार्मुकं, पूरयितु पूर्ण कर्तुं, विभवः भवन्ति विद्यन्ते।

भावार्थः—इह कैलासे नानावर्णाः शृङ्गरत्नकान्तयः अस्मिन् शरत्समये, जलाभावाल्लघुनि भिन्ने च मेघमण्डले कथमपि शनैरुत्पन्नं छिन्नस्वरूपं इन्द्रधनुः पूरयितुं समर्थाः भवन्ति।

समासः—शिखरमणिरुचः–शिखराणां मणयः (ष० तत्पु०), तेषां रुचः (ष० तत्पु०)। क्षीणपयसि–क्षीणं पयः यस्य तत् तस्मिन् (बहुव्रीहिः)। जलधरपटले–जलधराणां पटलं तस्मिम् (ष० तत्पु०)। लब्धं जन्म येन तत् (बहुव्रीहिः)। खण्डितविग्रहम्–खण्डितः विग्रहः यस्य तत् (बहुव्रीहिः)। बलभिदः–बलं भिनत्तीति बलभित् तस्य (उभपद०)

कोशः—'कूटोऽस्त्री शिखरं शृङ्गम्'। 'स्युः प्रभारुग् रुचिस्त्विड्भा भाश्छविद्युतिदीप्तयः'। 'एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा'। 'बलारातिः शचीपतिः'। 'शरीरं वर्ष्मविग्रहः'। सर्वत्राऽप्यमरकोशः। 'विभवो धननिर्वृत्योः'। इति हैमः।

व्याकरणम्—भिदाम्–भेदनं भिदा, ताम्, 'षिद्भिदादिभ्योऽङ्'। इति अङ्

प्रत्ययः । 'उपेयिवाननाश्वाननूचानश्च' । इतिक्वसु प्रत्ययान्तो निपातः । जलधराः-धरन्ति इति धराः, जल + धृ + अच् + जस् । 'पचाद्यच्' । इति अच् प्रत्ययः । शनकैः—शनैः एव शनकैः, 'अव्ययसर्वनाम्नामकच् प्राक्टेः' । इति अकच् प्रत्ययः । वलभिदः—वल + भिद् + क्विप् + ङस् ।

पदार्थ—इह ॥ इस ( कैलास ) में । विविधः = कई प्रकारकी शिखरमणि-रुचः = चोटियोंके मणियोंकी कान्तियाँ । सम्प्रति = इसी शरत् कालमें । लघुनि = छोटेसे । क्षीणपयसि = नष्ट जलवाले । भिदाम् उपेयुषि = भेदको प्राप्त ( खण्डित ) । जलधरपटले = मेघ समूहमें, कथमपि = किसी प्रकार । शनकैः = धीरे-धीरे । लब्धजन्म = उत्पन्न । खण्डितविग्रहं = खण्डित हैं । विग्रह = शरीर जिसका (अर्थात् टूटे हुए) । वलभिदः = इन्द्रके । धनुः = धनुषको । पूरयितुं = जोड़नेके लिए । विभवो भवन्ति = समर्थ होते हैं ।

हिन्दी—इस कैलासमें अनेक रंगोंकी शिखरस्थ रत्नकान्तियाँ, इस शरत्कालमें हल्के जलहीन होनेसे टुकड़े-टुकड़े हुए मेघ मंडलमें धीरे-धीरे किसी प्रकार उत्पन्न हुए टूटे इन्द्रधनुषको जोड़नेमें समर्थ हो रही हैं ।

अभिप्राय—तात्पर्य यह है कि वर्षा ऋतुमें पूरा आकाश घने मेघोंसे आच्छादित रहता है अतः इन्द्रधनुष पूरे आकाशमें छाया रहता है । शरत् कालमें बादल निर्जल होनेसे हलके हो जाते हैं अतः हवा उन्हें छिन्न-भिन्न कर देती है, बादलोंके टुकड़े-टुकड़े हो जानेसे वह इन्द्रधनुष भी अलग-अलग टुकड़ोंमें दीखने लगता है किन्तु कैलाश पर्वतके शिखरोंसे विभिन्न रंगोंके रत्नोंकी जो परछाँई मेघों पर पड़ती हैं उससे इन्द्रधनुषका टूटा हुआ हिस्सा पूर्ण जैसा दीखता है । यहाँ इन्द्रधनुषका रत्नोंकी कान्तियोंसे कोई सम्बन्ध न होनेपर भी दिखाया गया है । अतः अतिशयोक्ति अलंकार है वंशपत्रपतित छन्द है ॥४३॥

स्नपितनवलतातरुप्रवालैरमृतलवस्रुतिशालिभिर्मयूखैः ।
सततमसितयामिनीषु शम्भोरमलयतीह वनान्तमिन्दुलेखा ॥४४॥

अन्वयः—इह शम्भोः इन्दुलेखा स्नपितनवलतातरुप्रवालैः अमृतलवस्रुति-शालिभिः मयूखैः सततम् असितयामिनीषु वनान्तम् अमलयति ।

व्याख्या—इह कैलासे, शम्भोः शूलिनः, इन्दुलेखा चन्द्रमसो चिह्नं, स्नपितनवलतातरुप्रवालैः संसिक्तनवीनवल्लीवृक्षाङ्कुरैः, अमृतलवस्रुतिशालिभिः सुधाविन्दुनिष्यन्दशोभियुक्तैः, मयूखैः रश्मिभिः सततं निरन्तरम्, असितयामिनीषु कृष्णपक्षनिशासु, वनाऽन्तम् अरण्यभूमिम्, अमलयति धवलयति।

भावार्थः—अत्रावासवतः शम्भोः शिरसि स्थिता चन्द्रकला सिक्तनूतनलतातरुकिसलयैः अमृतविन्दुनिष्यन्दशोभिभिः किरणैः सर्वदैव कृष्णपक्षनिशास्वपि वनप्रदेशं धवलयति।

समासः—इन्दुलेखा—इन्दोः लेखा (ष० तत्पु०)। स्नपितनवलतातरुप्रवालैः-लताः च तरवः च (द्वन्द्वः), लतातरूणां प्रवालानि (ष० तत्पु०), स्नपितानि नवलतातरुप्रवालानि यैः तैः (बहुव्रीहिः)। अमृतलवस्रुतिशालिभिः—अमृतस्य लवाः (ष० तत्पु०), तेषां स्रुतिः (ष० तत्पु०), तया शालन्ते तच्छीलाः तैः। असितयामिनि—न सितः (नञ्०), असितस्य यामिन्यः तेषु (ष० तत्पु०)। वनान्तम्—वनस्य अन्तः तम् (ष० तत्पु०)। अमलयति-अविद्यमानं मलं यस्य सः (नञ् बहुव्रीहिः), अमलं करोति, मलरहितं सम्पादयति।

कोशः—'शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः'। श्रेणीलेखास्तु राजयः'। प्रवालमङ्कुरेऽप्यस्त्र'। 'किरणोऽस्रमयूखांशुगभस्तिघृणिरश्मयः'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—लेखा—रलयोरभेदात् सा एव रेखा। लिख अक्षरविन्यासे, भिदादौ पाठाद् अङ्गुणौ। मयूखैः—मिमीते, इति 'माङऊखा मय च'। इति ऊख्प्रत्ययो मयादेशश्चतः। सततम्—सम् + तनु + क्त। 'समो वा हिततततयोः'। इति वा समो मलोपः। पक्षे सन्ततम्। अमलयति—अमल + णिच् + लट् + तिप्।

पदार्थ—इह = इस (कैलास) में। शम्भोः = शिवजीको। इन्दुलेखा = चन्द्रकला। स्नपितनवलतातरुप्रवालैः = सींचे हैं नवीन लताओं एवं वृक्षोंके किसलय जिन्होंने ऐसे। अमृत-लवस्रुतिशालिभिः = अमृतकी बूंद टपकाते हुए। मयूखैः = किरणोंसे। सततं = निरन्तर। असितयामिनीषु = कृष्णपक्षकी रात्रिमें भी। वनाऽन्तम् = वन प्रदेशोंको। अमलयति = स्वच्छ कर देती है।

हिन्दी—यहाँ निरन्तर निवास करते हुए भगवान् शिवजीके मस्तककी चन्द्र-

कला लताओं एवं वृक्षोंके नये-नये किसलयोंको धोती हुई सी अमृतकी बूंदोंको बरषा कर शोभित किरणोंसे कृष्ण पक्षकी रातोंमें भो वन प्रदेशोंको सफेद किये रहती है।

अभिप्राय—दूसरे किसी पर्वतको यह सौभाग्य नहीं प्राप्त है अतः अन्य पर्वतोंकी अपेक्षा कैलासका वैशिष्ट्य व्यक्त होता है। इसीलिए मल्लिनाथने व्यतिरेक अलंकार माना है। पुष्पिताग्रा छन्द है ॥४४॥

क्षिपति योऽनुवनं विततां बृहद्बृहतिकामिव रोचनिकीं रुचम्।
अयमनेकहिरण्मयकन्दरस्तव पितुर्दयितो जगतीधरः ॥४५॥

अन्वयः—यः पर्वतः अनुवनं विततां रौचनिकीं रुचं वृहद्वृहतिकाम् इव क्षिपति, अनेकहिरण्मयकन्दरः अयं तव पितुः दयितः जगतीधरः अस्ति।

व्याख्या—यः पर्वतः, अनुवनं वने, विततां प्रसृतां रौचनिकीं स्वर्णमयों रुचं कान्ति, वृहद्वृहतिकाम् इव महोत्तरासङ्गमिव, क्षिपति प्रेरयति, प्रसारयति इति भावः, अनेकहिरण्मयकन्दरः बहुकाञ्चनगुहावान्, अयं पुरः स्थितः, तव भवतः, पितुः जनकस्य, इन्द्रस्य, दयितः प्रियः, जगतीधरः पर्वतः, इन्द्रकीलाऽऽख्यः, स एव त्वया आश्रयणीयः। द्रुतविलम्बितवृत्तम्। उपमालङ्कारः।

भावार्थः—यः वनेषु विस्तृतां सौवर्णीं कान्ति महत्प्रावारकमिव प्रसारयति स एवायं पुरोवर्ती बहुसौवर्णदरीकः भवज्जनकस्येन्द्रस्य प्रियः पर्वतः अस्ति।

समासः—वृहद्वृहतिकाम्—वृहती च असौ वृहतिका ताम् (कर्मधारयः)। अनेकहिरण्मयकन्दरः—अनेकाः हिरण्मय्यः कन्दराः यस्य सः (बहुव्रीहिः)। जगतीधरः—जगत्याः धरः (ष० तत्पु०)।

कोशः—'स्युः प्रभारुग्रुचिस्त्विड्भा भाश्छविद्युतिदीप्तयः'। 'द्वौ प्रावरोत्तरासङ्गौ समौ वृहतिका तथा'। 'अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्'। सर्वत्राऽप्यमरकोशः। 'वल्लभो दयितेऽध्यक्षे सल्लक्षणतुरङ्गमे'। इति विश्वः।

व्याकरणम्—रौचनिकीम्—रोच + ठक् + अम् + ङीप्। 'लाक्षारोचनशकलकर्दमाट्ठक्'। इति ठक् प्रत्ययः, 'ठस्येकः' इति इक्, 'किति च' इति आदिवृद्धिः, 'टिड्ढाणञ्' इत्यादिना ङीप्। वृहद्वृहतिकाम्—'पुंवत्कर्मधारयजातीयदेशीयेषु'। इति वृहतीशब्दस्य पुंवद्भावः। हिरण्मय्यः—हिरण्यस्य विकाराः,

इति तत्र विकारार्थे मयट् प्रत्ययः । 'दाण्डिनायन०' इत्यादिना निपातनात् साधु । जगतीधरः—जगती + धृ + अच् + सु ।

पदार्थ—यः = जो । अनुवनं = वनोंमें । विततां = फैली हुई । रौचनिकीं रुचं = सुनहरी कान्तिको । बृहद्बृहतिकाम् इव = लम्बी चौड़ी चादरकी तरह । क्षिपति = डालता है । अनेकहिरण्मयकन्दरः = अनेक सोनेकी गुफाओं वाला । अयं = यह । तव पितुः = तुम्हारे पिता (इन्द्र) का । दयितः = प्रिय । जगतीधरः = पर्वत (इन्द्रकील) अस्ति = है ।

हिन्दी—जो वनमें फैली हुई सुनहरी कान्तिको बड़ी चादरकी तरह डाल रहा है वह अनेक सुवर्णमय गुफाओंवाला यही पर्वत है जो तुम्हारे पिता इन्द्रको अत्यन्त प्रिय है ।

अभिप्राय—यक्ष इन्द्रकील पर्वतको लक्ष्य करके कहता है और उसका अभिप्राय है कि—यही पर्वत है जहाँ तुम्हें व्यासजीके आदेशानुसार तपस्या करनी है यह तुम्हारे पिताको अत्यन्त प्रिय है अर्थात् वे यहाँ हर प्रकारसे तुम्हारी रक्षा करेंगे । इस पर्वतकी कन्दराएँ सोने की हैं अतः उनकी सुनहरी छटा वनोंपर चादरकी तरह फैल रही है । रौचनिकीका अर्थ है रोचना ( गोरोचन ) से रंगी हुई । गोरोचन पीला होता है और सुवर्ण भी पीला है अतः सुनहरे के अर्थ में रौचनिकी प्रयोग किया गया है । द्रुतविलम्बित छन्द है ॥४५॥

सक्तिं जवादपनयत्यनिले लतानां
वैरोचनैर्द्विगुणिताः सहसा मयूखैः ।
रोधोभुवां मुहुरमुत्र हिरण्मयीनां
भासस्तडिद्विलसितानि विडम्बयन्ति ॥४६॥

अन्वयः—अमुत्र अनिले जवात् लतानां सक्तिम् अपनयति, सहसा वैरोचनैः मयूखैः द्विगुणिताः हिरण्मयीनां रोधोभुवां भासः मुहुः तडिद्विलसितानि विडम्बयन्ति ।

व्याख्या—अमुत्र अस्मिन्पर्वते, अनिले पवने, जवात् रंहात् लतानां व्रततीनां सक्तिम् अन्योऽन्यसङ्गम्, अपनयति वारयति सति, सहसा हठात्, वैरोचनैः सूर्यैः । मयूखैः किरणैः, द्विगुणिताः द्विगुणीकृताः, हिरण्मयीनां स्वर्णविकाराणां, रोधोभुवां

तीरभूमीनां, भासः प्रभा, मुहुः वारं-वारं, तडिद्विलसितानि विद्युतोविलासान्, विडम्बयन्ति अनुकुर्वन्ति। द्रुतविलम्बितम्। उपमालङ्कारः।

भावार्थः—अस्मिन् पर्वते यदा वायवः परस्परसंसक्ताः लताः वेगात् पृथक्कुर्वन्ति तदा तन्मध्यपतितैः सूर्यकिरणैः द्विगुणं प्रकाशमानाः सौवर्णमय्यस्तटभूमयः विद्युद्विलासाननुकुर्वन्ति।

समासः—द्विगुणिताः—द्वौ गुणौ येषां ते (बहुव्रीहिः), द्विगुणाः कृताः द्विगुणिताः। रोधोभुवाम्—रोधसः भुवः तासाम् (ष० तत्पु०)। तडिद्विलसितानि-तडितः विलसितानि तानि (ष० तत्पु०)।

कोशः—'पृषदश्वो गन्धवहौ गन्धवाहानिलाऽऽशुगाः'। 'रंहस्तरसी तु रयः स्यदः। जवोऽथ'। 'वल्ली तु व्रततिर्लता'। 'अतर्किते तु सहसा'। द्युमणिस्तरणिमित्रश्चित्रभानुर्विरोचनः'। 'किरणोऽस्त्रमयूखांशुगभस्तिघृणिरश्मयः'। 'स्युः प्रभा रुग्रुचिस्त्विड्भा भाश्छविद्युतिदीप्तयः'। 'तडित्सौदामिनी विद्युत्'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—अमुत्र—अमुष्मिन् इति 'सप्तम्यास्त्रल्'। इति त्रल् प्रत्ययः। अपनयति—अप + नी + लट् + तिप्। अत्र भावे सप्तमी। वैरोचनैः—विरोचन + अण् + भिस्। 'तस्येदम्', इति अण् प्रत्ययः। द्विगुणिताः—द्विगुणाः कृताः द्विगुणिताः। द्विगुण + णिच् + क्त + जस्। 'तत्करोति तदाचष्टे'। इति णिच् प्रत्ययः। हिरण्मयीनाम्—हिरण्मयस्य विकाराः तासाम्, हिरण्य + मयट् + ङीप् + आम्।

पदार्थ—अमुत्र = इस (पर्वत) से। अनिगे = वायुके। जवात् = वेगसे। लतानां सक्तिम् = लताओंके परस्पर सटनेको। अपनयति सति = हटा देनेपर। सहसा = एकाएक। वैरोचनैः मयूखैः = सूर्यकी किरणोंसे। द्विगुणिताः = दूनी हुई। हिरण्मयीनां = सुवर्णमय। रोधोभूवां = तटभूमियोंकी। भासः = कान्तियाँ। मुहुः = बार-बार। तडिद्विलसितानि = बिजलीकी शोभाओंका। विडम्बयन्ति = अनुकरण करती है।

हिन्दी—इस पर्वतमें वेग से बहता हुआ वायु जब परस्पर जुटी हुई लताओंको

पृथक् करता है तव उनके बीचसे पड़ती हुई सूर्य किरणोंसे दुगुनी चमकती हुई सुनहरी तट-भूमियाँ बिजलीकी तरह प्रतीत होती हैं।

अभिप्राय—लताओंके परस्पर जुड़े रहनेसे तटभूमि ढकी रहती है। वेगसे बहता हुआ वायु जब उन्हें एक दूसरेसे अलग करता है और उनपर बीचसे सूर्यकी किरणें पड़ती हैं तब उनकी चमक दुगुनी हो जाती है और वे बिजलीसी कौंधने लगती हैं। यहाँ उपमा अलंकार तथा वसन्ततिलका छन्द है ॥ ४६ ॥

कषणकम्पनिरस्तमहाऽहिभिः क्षणविमत्तमतङ्गजवर्जितैः ।
इह मदस्नपितैरनुमीयते सुरगजस्य गतं हरिचन्दनैः ॥ ४७ ॥

अन्वयः—इह कषणकम्पनिरस्तमहाऽहिभिः क्षणविमत्तमतङ्गजवर्जितैः मदस्नपितैः हरिचन्दनैः सुरगजस्य गतम् अनुमीयते ।

व्याख्या—इह हिमपर्वते, कषणकम्पनिरस्तमहाऽहिभिः कण्डूयनवेपथुदूरीकृत-वृहद्सर्पैः, क्षणविमत्तमतङ्गजवर्जितैः स्वल्पकालमदमत्तगजशून्यैः, मदस्नपितैः दान-वारिस्नातैः, हरिचन्दनैः देवतरुविशेषैः, सुरगजस्य ऐरावतस्य, गतं गमनम्, अनुमीयते अनुभूयते । द्रुतविलम्बितवृत्तम् । काव्यलिङ्गमलङ्कारः ।

भावार्थः—अत्र कण्ड्यनजन्यकम्पेन महासर्पाः येभ्यः पलायिताः, क्षणमुन्मत्तम-तङ्गजैश्च ये वर्जिता एवंभूता ऐरावतमदसिक्ता हरिचन्दनद्रुमाः प्रत्याययन्ति यदत्र सुरगजेनागतमिति ।

समासः—कषणकम्पनिरस्तमहाऽहिभिः-कषणेन कम्पः (तृ० तत्पु०), कषणकम्पेन निरस्ताः (तृ० तत्पु०) कषणकम्पनिरस्ता महाऽहयो येभ्यः ते तैः (बहुव्रीहिः)। क्षणविमत्तमतङ्गजवर्जितैः-विमत्ताः च ते मतङ्गजाः (कर्मधारयः), विमत्तमतङ्गजैः वर्जिताः (तृ० तत्पु०), क्षणं विमत्तमतङ्गजवर्जिताः तैः । मदस्नपितैः—मदेन स्नपिताः तैः (तृ० तत्पु०)। सुरगजस्य—सुरस्य (इन्द्रस्य) गजः तस्य (ष० तत्पु०)।

कोशः—'सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः'। 'मतङ्गजो गजो नागः'। 'मदो वारि'। 'पञ्चैते देवतरवो मन्दारः पारिजातकः। सन्तानः कल्पवृक्षश्च पुंसिवा हरिचन्दनम्'। 'अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः। सर्वत्राऽप्यमरकोशः ।

व्याकरणम्—महाऽहिभिः—अत्र 'आन्महतः समानाऽधिकरणजातीययोः'।

इति महतः आत्वम्। गतम्—गम + क्त + सु + अम्। अनुमीयते + अनु + मा + णिच् + त + एत्व।

पदार्थः—इह = इस (इन्द्रकील) पर्वतपर। कषणकम्पनिरस्तमहाहिभिः = खुजलानेकी प्रक्रियामें शरीरके हिलनेसे हट गये हैं बड़े-बड़े सर्प जिनमें ऐसे। क्षणविमत्तमतङ्गजवर्जितैः = थोड़ी देरक लिए उन्मत्त हाथियोंसे रहित। मदस्नपितैः = मदजलसे धोये हुए। हरिचन्दनैः = कल्प वृक्षोंसे। सुरगजस्य = ऐरावतका। गतम् = आना। अनुभीयते = (लोगोंसे) अनुमान किया जाता है।

हिन्दीः—इस पर्वतपर ऐरावतके गण्डस्थल खुजलानेसे हिलनेके कारण जिनपर लिपटे हुए सर्प भाग गये हैं, अन्यन्त तीव्र मदगन्धके कारण दूसरे उन्मत्त हाथी जहाँ नहीं आ रहे हैं ऐसे तथा ऐरावतके मदवारिसे धुले हुए हरिचन्दन वृक्षोंसे यह अनुमान किया जाता है कि ऐरावत यहाँ आया था।

अभिप्राय—पञ्चैते देवतरवो मन्दारः पारिजातकः, सन्तानः, कल्पवृक्षश्च, पुंसि वा हरिचन्दनम्''—अमरकोश। ये पाँच देववृक्ष कहे जाते हैं। यह प्रसिद्धि है कि चन्दनवृक्षमें सर्प लिपटे रहते हैं, हरिचन्दनमें सर्प नहीं दीखते इससे कवि कल्पना करता है कि ऐरावतने अपने कपोल इनमें रगड़े जिससे ये वृक्ष हिले और इनमें लपटे हुए सर्प भाग गये। ऐसे ही साधारण गजोंका यहाँ आ पाना कठिन है इससे कवि यही अनुमान करता है कि ऐरावतके मदकी उत्कट गंधको न सह सकनेसे अन्य हाथी यहाँ नहीं दीखते। इन कारणोंसे लोग यह अनुमान करते हैं कि ऐरावत यहाँ आता है। यहाँ हरिचन्दन वृक्षोंसे जो अनुमान होता है उसमें महासर्पोंका निरस्त होना, अन्य हाथियोंका वहाँ न आना तथा मदसिक्त होना हेतु है। अतः यह काव्यलिङ्ग अलंकार है और द्रुतविलम्बित छन्द है ॥४७॥

जलदजालघनैरसिताऽश्मनामुपहतप्रचयेह मरीचिभिः।
भवति दीप्तिरदीपितकन्दरा तिमिरसंवलितेव विवस्वतः ॥४८॥

अन्वयः—इह जलदजालघनैः असिताऽश्मनां मरीचिभिः उपहतप्रचया अदीपितकन्दरा विवस्वतः दीप्तिः तिमिरसंवलिता इव भवति।

व्याख्या—इह अस्मिन् हिमालये जलदजालघनैः पयोदग्रामसघनैः असिताश्मनाम् इन्द्रनीलमणीनाम्, मरीचिभिः प्रभाभिः उपहतप्रचया विघट्टितसङ्घाता, अव

एव अदीपितकन्दरा अप्रकाशितगह्वरा, विवस्वतः दिवाकरस्य दीप्तिः प्रकाशः, तिमिरसंवलिता इव अन्धकारसंयुता इव, भवति जायते। द्रुतविलम्बितवृत्तम्। उत्प्रेक्षालङ्कारः।

भावार्थः—अत्र मेघसमूहैरिव सान्द्रैः इन्द्रनीलमणीनां किरणैः विघटितसङ्घाततया गह्वराण्यप्रकाशयन्ती सूर्यदीप्तिः तिमिरव्यामिश्रितेव भवति।

समासः—जलदजालघनैः—जलदानां जालानि (ष० तत्पु०), तानि इव घनाः तैः (उपमानकर्म०)। असिताश्मनाम्—असिताः च ते अश्मानः, तेषाम् (कर्मधारयः) उपहतप्रचया—उपहतः प्रचयः यस्याः सा (बहुव्रीहिः)। अदीपितकन्दरा—न दीपिताः (नञ्०), अदीपिताः कन्दराः यया सा (बहुव्रीहिः)। तिमिरसंवलिता—तिमिरैः संवलिता (तृ० तत्पु०)।

कोशः—'धाराधरो जलधरस्तडित्वान् वारिदोऽम्बुभृत्'। 'भानुः करो मरीचिः'। 'दरी तु कन्दरो वा स्त्री'। 'भास्वद् विवस्वत् सप्ताश्वहरिदश्वोष्णरश्मयः'। 'स्युः प्रभा रुग्रुचिस्त्विड्भा भाश्छविद्युतिदीप्तयः'। 'अन्धकारोऽस्त्रियाँ ध्वान्तं तमिस्रं तिमिरं तमः'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—जलदाः—जल + दा + क + जस्। 'आतोऽनुपसर्गे कः'। मरीचिः—म्रिजते तमः अस्मिन्। 'मृकणिभ्यामीचिः' इति ईचि प्रत्ययः—कं जलेन दीर्यते। 'ॠदोरप्' इति अप् प्रत्ययः। कं + दृ + अप् + टाप्। दीप्तिः—दीप्यते अनया, दीपी दीप्तौ धातोः क्तिन्। भवति—भू + लट् + तिप्।

पदार्थ—इह = इस पर्वतपर। जलदजालघनैः = मेघोंके घने झुण्डों जैसे। असिताश्मनां = इन्द्रनीलोंकी। मरीचिभिः = किरणोंसे। उपहतप्रचया = रोका गया है समूह जिनका ऐसी। (अतः) अदीपितकन्दरा = गुफाओं को प्रकाशयुक्त न करती हुई। विवस्वतः = सूर्यकी। दीप्तिः = कान्ति। तिमिरसंवलिता इव = अन्धकार मिली हुई जैसी। भवति = होती है।

हिन्दी—इस पर्वतपर इन्द्रनील मणियोंका काले-काले बादलों जैसा घना कान्तिसमूह सूर्यकी किरणोंको आगे बढ़नेसे रोक देता है। फलतः गुफाओंमें अन्धकार ही रह जाता है। कहीं प्रकाश और कहीं अन्धेरा होनेसे ऐसा प्रतीत होता है कि सूर्यकी कांति अन्धकारसे मिला दी गई है।

अभिप्राय—उत्प्रेक्षा अलंकार और द्रुतविलम्बित छन्द है ।।४८।।

भव्यो भवन्नपि मुनेरिह शासनेन
क्षात्रे स्थितः पथि तपस्य हतप्रमादः ।
प्रायेण सत्यपि हितार्थकरे विधौ हि
श्रेयांसि लब्धुमसुखानि विनाऽन्तरायैः ।।४९।।

अन्वयः—इह भव्यः भवन्नपि मुनेः शासनेन क्षात्रे पथि स्थितः हतप्रमादः ( सन् ) तपस्य हि प्रायेण हितार्थकरे विधौ अन्तरायैः विना श्रेयांसि लब्धुम् असुखानि ।

व्याख्या—इह पर्वते, भव्यः प्रशान्तः, भवन्नपि वर्तमानोऽपि, मुनेः व्यासस्य, शासनेन आज्ञया, इन्द्राऽऽराधनरूपया इति भावः, क्षात्रे पथि क्षत्रियोचितमार्गे, स्थितः वर्तमानः सन्, गृहीतशस्त्र एवेति भावः । हतप्रमादः सावधानः सन्, तपस्य तपश्चर्यां विधेहि, हि यस्मात् कारणात्, प्रायेण वाहुल्येन, हितार्थकरे हितकार्य-कारिणि, विधौ व्यापारे सति, अन्तरायैः विना विघ्नैर्विना, श्रेयांसि कल्याणानि, लब्धुं प्राप्तुम्, असुखानि अशक्यानीति भावः । यतोऽहि 'श्रेयांसि बहुविघ्नानि' भवन्तीति लोके प्रसिद्धम् । वसन्ततिलकावृत्तम् । अर्थान्तरन्यासालङ्कारः ।

भावार्थः—शान्तोऽपि भवान् व्यासनिर्देशेन क्षात्रे धर्मणि वर्तमानोऽप्रमत्तः सन् तपः करोतु । यतोहि हितसम्पादके कर्मणि विघ्नैर्विना श्रेयांसि लब्धुमशक्यानि भवन्ति ।

समासः—हतप्रमादः—हतः प्रमादः यस्य सः ( बहुव्रीहिः ) । हिताऽर्थकरे—हितः च असौ अर्थः ( कर्मधारयः ), हितार्थं करोति इति हितार्थकरः तस्मिन् ।

कोशः—'अपवादस्तु निर्देशो निदेशः शासनं च सः । शिष्टिश्चाज्ञा च' । 'प्रमादोऽनवधानता' । 'विघ्नोऽन्तरायः प्रत्यूहः' । सर्वत्राऽप्यमरकोशः । 'प्रायो तपस्यनशने मृतौ वाहुल्यतुल्ययोः' । इति हेमचन्द्रः ।

व्याकरणम्—भवन् + भू + शतृ । क्षात्रे—क्षत्रस्य अयं, क्षत्र + अण् + ङि । तपस्य—तपस् + क्यङ् + लोट् + सिप् । कर्मणो रोमन्थतपोभ्यां वर्त्तिचरोः' इति क्यङ् प्रत्ययः । 'तपसः परस्मैपदञ्च' इति परस्मैपदत्वम् । लब्धुम्—लभ् + तुमुन् ।

पदार्थ—इह = इस पर्वतपर। भव्यः = शान्त। भवन्नपि = होता हुआ भी। मुनेः = व्यासजी की। शासनेन = आज्ञासे। क्षात्रे पथि = क्षत्रिय धर्ममें। स्थितः = वर्तमान। हतप्रमादः (सन्) = अप्रमत्त होकर। तपस्या = तपस्या करो। हि = क्योंकि। प्रायेण = अधिकतर। हितार्थकरे विधौ = हितसाधक कार्य में। अन्तरायैः बिना = विघ्नों के बिना। श्रेयांसि = कल्याणों की। लब्धुं = प्राप्तकरना। असुखानि = कष्टकर होता हैं।

हिन्दी—यद्यपि तुम शान्त हो, फिर भी व्यासजीकी आज्ञानुसार क्षत्रियधर्ममें रहते हुए सावधान होकर तपस्या करो। क्योंकि प्रायः भाग्य अनुकूल होनेपर भी अच्छे कार्यों में विघ्नोंके बिना कल्याण प्राप्त नहीं किये जा सकते ॥४९॥

मा भूवन्नपथहृतस्तवेन्द्रियाऽश्वाः
सन्तापे दिशतु शिवः शिवां प्रसक्तिम्।
रक्षन्तस्तपसि बलञ्च लोकपालाः
कल्याणीमधिकफलां क्रियां क्रियासुः ॥५०॥

अन्वयः—तव इन्द्रियाऽश्वाः अपथहृतः मा भूवन्। सन्तापे शिवः शिवां प्रसक्तिं दिशतु। लोकपालाः च तपसि बलं रक्षन्तः कल्याणीं क्रियाम् अधिकफलां क्रियासुः।

व्याख्या—हे अर्जुन! तव भवतः, इन्द्रियाऽश्वाः इन्द्रियघोटकाः, अपथहृतः कुपथगामिनः, मा भूवन् न भवेयुः, सन्तापे तपःकरे सति, शिवः आशुतोषः, शिवां कल्याणकारिणीं, प्रसक्तिं प्रवृत्तिम् उत्साहं, दिशतु ददातु, किञ्च लोकपालाः इन्द्राऽऽदयो देवाः, तपसि तपश्चर्यायां, बलं शक्तिं, रक्षन्तः संवर्धयन्तः, कल्याणीं साध्वीं, क्रियाम् तपश्चर्याम्, अधिकफलाम् बहुश्रेयवतीं, क्रियासुः कुर्वन्तु, इति एषा आशीः। प्रहर्षिणीवृत्तम्। रूपकालङ्कारः।

भावार्थः—अश्वा इव तवेन्द्रियाणि त्वां कुमार्गगामिनं मा कुर्वन्, तपःक्लेशे च भगवान् शङ्करः कल्याणिनीं प्रवृत्तिं ददातु। लोकपालाश्च तपसि शक्तिं रक्षन्तः साध्वीमनुष्ठानपद्धतिमधिकफलवतीं कुर्वन्तु।

समासः—इन्द्रियाऽश्वाः—इन्द्रियाणि एव अश्वाः (रूपककर्म०)। अपथहृतः—न पन्थाः अपथम् (नञ्०), तेन हरन्तीति। लोकपालाः—लोकं पालयन्तीति (उपपद०)। अधिकफलाम्—अधिकं फलं यस्याः सा ताम् (बहुव्रीहिः)।

कोशः—'हृषीकं विषयीन्द्रियम्'। 'सन्तापः सञ्ज्वरः समौ'। 'शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः'। 'श्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्'। 'सारो बले स्थिरांशे च'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—अपथहृतः—न + पथ + अ + सु + अम्। 'पथो विभाषा'। इति वैकल्पिकः समासान्तः अ प्रत्ययः। ह्रञ् हरणे धातोः क्त प्रत्ययः। मा भूवन्—'माङि लुङ्'। इति माङ्योगे लुङ्लङ्कारः, 'न माङ् योगे' इति अट् आगमस्य निषेधः। लोकपालाः—लोक + पाल् + अच् + जस्। क्रियाम्—'कृञः श च' इति श प्रत्ययः। क्रियासुः—कृ + आशीर्लिङ् × झि। 'रिङ्शयग्लिङ्क्षु'। इति रिङ् आदेशः।

पदार्थ—तव = तुम्हारे। इन्द्रियाश्वाः = इन्द्रियरूप घोड़े। अपथहृतः = कुमार्ग की ओर ले जानेवाले। मा भूवन् = न होवें। सन्तापे = कष्ट की दशा में। शिवः = भगवान् शिव। शिवां = कल्याणकारिणी। प्रसक्ति = प्रवृत्ति को। दिशतु = दें। च = और। लोकपालाः = इन्द्रादि लोकपाल। तपसि = तपश्चर्या में। बलं रक्षन्तः = शक्ति की रक्षा करते हुए। कल्याणीं = कल्याणकारिणी। क्रियां = क्रिया को। अधिकफलां = अधिक फलवालीं। क्रियासुः = करें।

हिन्दी—तुम्हारे इन्द्रिय रूप घोड़े तुम्हें कुमार्ग की ओर न ले जावें। तपोजन्य कष्टों में भगवान् शङ्कर तुम्हें कल्याणकारिणी प्रवृत्ति दें और इन्द्रादि लोकपाल तपःसामर्थ्य की रक्षा करते हुए अच्छी अनुष्ठानक्रिया को अधिक फलवाली करें।

इत्युक्त्वा सपदि हितं प्रियं प्रियार्हे
धाम स्वं गतवति राजराजभृत्ये।
सोत्कण्ठं किमपि पृथासुतः प्रदध्यौ
सन्धत्ते भृशमरतिं हि सद्वियोगः ॥५१॥

अन्वयः—प्रियाऽर्हे राजराजभृत्ये इति हितं प्रियम् उक्त्वा सपदि स्वं धाम गतवति (सति) पृथासुतः सोत्कण्ठं किमपि प्रदध्यौ, हि सद्वियोगः भृशम् अरतिं सन्धत्ते।

व्याख्या—प्रियाऽर्हे प्रेमवचनयोग्ये, राजराजभृत्ये कुबेराऽनुचरे यक्षे, इति पूर्वोक्तं, हितं हितकरं, प्रियं स्नेहपूर्णं, वचनम्, उक्त्वा कथयित्वा, सपदि सद्यः, स्वं

स्वसम्बन्धिनं, धाम गृहं, गतवति प्राप्तवति, वृथासुतः कुन्तीपुत्रः अर्जुनः, सोत्कण्ठं सौत्सुक्यं, किमपि प्रदध्यौ चिन्तयामास, हि यतः, सद्वियोगः सज्जनविरहः, भृशम् अतिवेलम्, अरतिम् अप्रीतिम् अशान्तिं, सन्धत्ते करोतीति भावः। प्रहर्षिणीवृत्तम्। अर्थान्तरन्यासाऽलङ्कारः।

भावार्थः—एवं हितकारकं प्रियं चोक्त्वा यक्षे स्वस्थानं प्रयाते सति अर्जुनः किमपि चिन्तयामास। यतः सज्जनविरहो भृशं व्यथामुत्पादयति।

समासः—प्रियाऽर्हे—प्रियम् अर्हतीति, तस्मिन् ( उपपद० )। राजराजभृत्ये-राज्ञां राजा राजराजः ( ष० तत्पु० ), तस्य भृत्यः तस्मिन् ( ष० तत्पु० )। वृथासुतः—वृथायाः सुतः ( ष० तत्पु० )। सोत्कण्ठम्—उत्कण्ठया सहितम् ( तुल्ययोगबहु० )। सद्वियोगः—सतां वियोगः ( तृ० तत्पु० )।

कोशः—'राजराजो घनाऽधिपः'। 'सद्यः सपदि तत्क्षणे'। 'गृहदेहत्विट्प्रभावा धामान्यथ'। 'अतिवेलभृशात्यर्थम्'। सर्वत्राऽप्यमरकोशः। 'प्रीतिर्योगाऽन्तरे प्रेम्णि स्मरपत्नीमुदोः स्त्रियाम्'। इति मेदिनी।

व्याकरणम्—प्रियाऽर्हे—प्रिय + अर्ह + अच् + ङि। सोत्कण्ठम्—क्रिया-विशेषणम्। प्रदध्यौ—प्र + ध्यै + लिट् + तिप् + णल्। 'आत औ णलः'। इति णलः स्थाने औकारादेशः।

पदार्थ—पियार्हे = प्रिय वचनोंके योग्य। राजराजभृत्ये = कुबेरके अनुचर ( यक्षके )। इति = इस प्रकार। हितं प्रियं ( च ) = हितकर और प्रियवचन। उक्त्वा = कहकर। सपदि = तत्काल। स्वं धाम = अपने स्थानको। गतवति = चले जानेपर। पृथासुतः = कुन्तीपुत्र ( अर्जुन )। सोत्कण्ठं = उत्सुकतासे। किमपि प्रदध्यौ = कुछ सोचने लगा। हि = क्योंकि। सद्विभोगः = सज्जनोंका विरह। भृशं = अत्यन्त। अरतिं = व्यथाको। सन्धत्ते = उत्पन्न करता है।

हिन्दी—इस प्रकार हितकर और मधुर वचन कहकर पूर्वोक्त यक्षके अपने स्थानको चले जानेपर अर्जुन कुछ सोचने लगा। क्योंकि सज्जनोंके वियोगसे कुछ कष्ट तो होता ही है।

अभिप्राय—यह यक्षको व्यासने अपने तपोबलसे इसीलिए उत्पन्न किया था कि तत्काल अर्जुनको इन्द्रकील पर्वतपर पहुँचा दे। यहाँ तक साथ रहनेके बाद सहसा

उसके साथ चले जाने पर अर्जुन अकेला रह गये। अतः उसे चिन्ता और कष्ट होना स्वाभाविक ही है। इस श्लोकमें अर्थान्तरन्यास अलंकार और प्रहर्षिणी छन्द है॥५१॥

तमनतिशयनीयं सर्वतः सारयोगा-
दविरहितमनेकेनाऽङ्कभाजा फलेन।
अकृशमकृशलक्ष्मीश्चेतसाऽऽशंसितं सः
स्वमिव पुरुषकारं शैलमभ्याससाद॥५२॥

इति महाकविभारविकृतौ महाकाव्ये किरातार्जुनीये पञ्चमः सर्गः॥

अन्वयः—अकृशलक्ष्मीः सः सर्वतः सारयोगात् अनतिशयनीयम् अनेकेन अङ्कभाजा फलेन अविरहितम् अकृशं चेतसा आशंसितं शैलं स्वं पुरुषकारम् इव अभ्याससाद।

व्याख्या—अकृशलक्ष्मीः शोभायुतानं, सः धनञ्जयः, सर्वतः सर्वत्र, सारयोगात् उत्कृष्टतपबलप्रयोगात्, अनतिशयनीयम् अनतिक्रमणीयम्, अनेकेन वहुना, अङ्कभाजा शीघ्रभाविना अत्र अङ्कशब्दस्य समीपाऽर्थे लक्षणा, फलेन कार्यसिद्ध्या, अविरहितम् अशून्यं, कार्यसिद्धिकरमिति भावः। अकृशमतितम्, महान्तमित्याऽऽशयः। चेतसा-चित्तेन आशंसितं प्रासुमिष्टं, शैलम् इन्द्रकीलपर्वतं, स्वम् आत्मीयं, पुरुषकारम् इव पौरुषम् इव, अभ्याससाद आससाद। मालिनीवृत्तम्। उपमाऽलङ्कारः।

भावार्थः—परिपूर्णशोभोऽर्जुनः उत्कृष्टबलयोगादनुल्लङ्घनीयं शीघ्रभाविना फलेन शून्यं (कार्यसिद्धेरवश्यं साधकं) महान्तं समीप्सितं पर्वतमिन्द्रकीलं स्वकीयं पुरुषार्थमिव प्रासवान्।

समासः—अकृशलक्ष्मीः—न कृशाः (नञ्०), अकृशाः लक्ष्म्यः यस्य सः (वहुव्रीहिः)। सारयोगात्-सारस्य योगः तस्मात् (ष० तत्पु०)। अङ्कभाजाअङ्कं भजति, तेन (उपपद०)।

कोशः—'सारो बले स्थिरांशे च'। 'उत्सङ्गचिह्नयोरङ्कः'। 'चित्तन्तु चेतो हृदयं स्वान्तं हृन्मानसं मनः'। 'अद्रिगोत्रगिरिग्रावाऽचलशैलशिलोच्चयाः'। 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने'। पुम्भावे तत्क्रियायाञ्च पौरुषम्'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—अकृशलक्ष्मीः—अत्र बहुवचनान्तलक्ष्मीशब्दप्रयोगात् 'उरः प्रभृतिभ्यः कप्। एवञ्च 'नद्यृतश्च' इति कप् निषेधः। सर्वतः-अत्र सप्तम्यर्थे तसिः। अङ्कभाजा—अङ्क + भज + ण्विः। पुरुषस्य करणं तम्, पुरुष + कृ + घञ्।

इति डॉ० बदरीनारायण पाण्डेयरचितायां राजविवर्धिनीसंस्कृत व्याख्यायाम् किरातार्जुनीयमहाकाव्यस्य पञ्चमसर्गः समाप्तः॥

पदार्थ—अकृशलक्ष्मी = जो शोभासे क्षीण नहीं है ऐसा। सः = वह (अर्जुन)। सर्वतः = सब प्रकारसे। सारयोगात् = उत्कृष्टबलप्रयोगसे। अनतिशयनीयम् = अनुल्लंघनीय। अनेकेन = बहुत। अङ्कभाजा = समीपवर्ती। फलेन = फल (कार्य-सिद्धि)से। अविरहितं = युक्त। अकृशं = महान्। चेतसा = मनसे। आशंसितं = चाहे हुए। शैलं = पर्वत (इन्द्रकील) को। स्वं = अपने। पुरुषकारम् इव—पुरुषार्थकी तरह। अभ्याससाद = प्राप्त किया।

हिन्दी—पूर्ण शोभासे युक्त अर्जुन सब प्रकारके बल प्रयोगसे भी अनुल्लंघनीय, शीघ्र होने वाली कार्यसिद्धिके निश्चित साजक, अपने अत्यन्त अभीष्ठ इन्द्रकीलमें अपने पौरुषकी भाँति पहुँच गया।

इति श्री डॉ० कु० रामेश्वरी कुमारी रासेश्वरीकृत राजेश्वरीहिन्दीव्याख्या युक्त किरातार्जुनीयमहाकाव्य का पञ्चम सर्ग समाप्त।

# षष्ठः सर्गः

रुचिराऽऽकृतिः कनकसानुमथो परमः पुमानिव पतिं पतताम् ।
धृतसत्पथस्त्रिपथगामभितः स तमाऽऽरुरोह पुरुहूतसुतः ॥१॥

श्री गणपतये नमः
राजबिबर्धिनी संस्कृत टीका

अन्वयः—अथो रुचिराऽऽकृतिः धृतसत्पथः सः पुरुहूतसुतः कनकसानुं तं परमः पुमान् पततां पतिम् इव त्रिपथगाम् अभितः आरुरोह ।

व्याख्या—अथो इन्द्रकीलपर्वतगते, रुचिराऽऽकृतिः सौम्याऽऽकृतिः, आकाराऽनुरूपगुणवानिति भावः । यथाऽऽह कालिदासः-'आकारसदृशप्रज्ञः प्रज्ञया सदृशाऽऽगमः । आगमैः सदृशाऽऽरम्भ आरम्भसदृशोदयः ॥ रघु० १।१५ । अन्यदपि मतमिदम्—'यत्राऽऽकृतिस्तत्र गुणा वसन्ति' इति । धृतसत्पथः आधाराधिसन्मार्गः, पुरुहूतसुतः इन्द्रपुत्रः, सः अर्जुनः, कनकसानुं सुवर्णप्रस्थं, गरुडसावर्ण्यार्थं विशेषणमेतत् । तम् इन्द्रकीलपर्वतं, परमः श्रेष्ठतमः, पुमान् जनः, भगवान् विष्णुरिति भाव । पततां खगनां, पतिम् इव स्वामिनं गरुडमिव, त्रिपथगाम् गङ्गाम् अभितः सम्मुखम्, आरुरोह आरुढवान् । महाभारते त्रिपथगानाम्नोनिरुक्तिः-'क्षितौ तारयते मर्त्यान्नागांस्तारयतेऽप्यधः । दिवि तारयते देवांस्तेन त्रिपथगा स्मृता । प्रमिताक्षरावृत्तम् । तल्लक्षणं यथा—'प्रमिताक्षरा सजसैरुदिता' । उपमाऽलङ्कारः ।

भावार्थः—अथ सौम्यविग्रहः सन्मार्गानुवर्ती इन्द्रसूनुरर्जुनः स्वर्णशिखरं इन्द्रकीलपर्वतं भागीरथ्या अभिमुखं तथाऽऽरुरोह यथा भगवान् विष्णुः गरुडमारोहति ।

समासः—रुचिराऽऽकृतिः—रुचिरा आकृतिः यस्य सः ( बहुव्रीहिः ) धृतसत्पथः—सत् च असौ पन्थाः (कर्मधारयः), धृतः सत् पन्था येन सः (बहुव्रीहिः) । पुरुहूतस्य सुतः पुरुहूतसुतः ( ष० तत्पु० ) । कनकसानुम्—कनकस्य विकाराः कनकानि, तानि सानवः यस्य सः तम् (बहुव्रीहिः) ।

कोशः—'मङ्गलाऽनन्तराऽऽरम्भप्रश्नकात्स्र्न्येष्वथो अथ' । आकारस्त्विङ्गइङ्गितम्' । 'पुरुहूतः पुरन्दरः' । 'कनकं हेमहाटकम्' । 'स्नुः प्रस्थः सानुरस्त्रियाम्' । 'पतत्त्रिपत्त्रिपतगपतत्त्ररथाऽण्डजाः' । सर्वत्राऽप्यमरकोशः ।

व्याकरणम्—सत्पथः-सत् + पन्था + अ + सु । 'ऋक्पूरब्धूः पथामानक्षे' । इति समासान्तः अ प्रत्ययः । त्रिपथगाम् अभितः-अत्र अभितः योगे 'अभितः परितः समया निकषा हा प्रतियोगेऽपि' इति द्वितीया ।

श्री गणेशाय नमः

राजेश्वरी हिन्दी व्याख्या

पदार्थ—अथ = यक्षके चले जानेके बाद । रुचिराकृतिः = सुन्दर आकृत वाला । धृतसत्पथः = सन्मार्गमें प्रवृत्त हुआ । सः = वह । पुरुहूतसुतः = इन्द्रका पुत्र (अर्जुन) । कनकसानुं = सुवर्णमय शिखरों वाले । तं = उस (इन्द्रकील) पर । परमः पुमान् = परमपुरुष (विष्णु) । पततां पति = पक्षियोंके स्वामी (गरुड़) पर । इव = जैसे । त्रिपथगाम् = गङ्गाके । अभितः = संमुख । आरुरोह = आरूढ़ हुआ ।

हिन्दी—यक्षके जानेके बाद सुन्दर आकृतिवाला तथा सन्मार्गमें प्रवृत्त हुआ इन्द्रपुत्र अर्जुन, सोनेके शिखरों वाले इन्द्र कील पर गङ्गाके सम्मुखसे ऐसे चढ़ने लगा जैसे भगवान् विष्णु गरुड़ पर चढ़ते हैं ।

अभिप्राय—भगवान् शंकर जीकी जटाओंसे निकल कर गङ्गाकी तीन धाराएँ हो गईं । देवताओंको तारनेके लिए जो धारा स्वर्गमें प्रवाहित हुई वह मन्दाकिनी कहलाई । राजा भगीरथके प्रयत्नसे मर्त्य लोक वासियोंके तारणके लिए भागीरथी भूलोकमें तथा पाताल वासियोंके उद्धारके लिए अलकनन्दा पाताल लोकमें प्रवाहित हुई, इसलिए गंगाको त्रिपथगा या त्रिस्रोता कहते हैं ॥१॥

तमनिन्द्यवन्दिन इवेन्द्रसुतं विहिताऽलिनिक्वणजयध्वनयः ।
पवनेरिताऽऽकुलविजिह्मशिखा जगतीरुहोऽवचकरुः कुसुमैः ॥ २ ॥

अन्वयः—विहिताऽलिनिक्वणजयध्वनयः पवनैरिताऽऽकुलविजिह्मशिखाः जगतीरुहः अनिन्द्यवन्दिनः इव तम् इन्द्रसुतं कुसुमैः अवचकरुः ।

व्याख्या—विहिताऽलिनिक्वणजयध्वनयः विहितषट्पदझङ्कारजयशब्दाः, पवनेरिताऽऽकुलविजिह्मशिखाः वायुप्रेरितचपलवक्रशाखाग्रदेहाः जगतीरुहः पादपाः अनिन्द्यवन्दिनः इव अनवद्यस्तुतिपाठकाः इव, तम् इन्द्रसुतम् अर्जुनं, कुसुमैः पुष्पैः, अवचकरुः अभिववृषुः। प्रमिताक्षरावृत्तम्। श्लोकेऽस्मिन् समासगतयोरुपमयोः साध्यसाधनभावादङ्गाङ्गिभावसङ्करः।

भावार्थः—भ्रमरझंकाररूपं विजयशब्दं कुर्वाणाः वायुप्रेरितत्वाच्चलवक्रशाखाग्राः वृक्षाः योग्यवैतालिका इव अर्जुनस्योपरि पुष्पाण्यभिववृषुः।

समासः—विहितालितिक्वणजयध्वनयः—अलीनां निक्वणाः (ष० तत्पु०), जयस्य ध्वनयः (ष० तत्पु०) अलिनिक्वणाः जयध्वनयः इव (उपमान०), विहिता अलिनिक्वणजयध्वनयः यैः ते (बहुव्रीहिः)। पवनेरिताऽऽकुलविजिह्मशिखाः—पवनेन ईरिताः (तृ० तत्पु०), पवनेरिताः आकुलाः विजिह्मा शिखाः येषाम् (बहुव्रीहिः)। जगतीरुहः—जगत्यां रोहन्तीति (उपपद०)। अनिन्द्यवन्दिनः—अनिन्द्याः च ते वन्दिनः (कर्मधारयः)। इन्द्रसुतम्—इन्द्रस्य सुतम् (ष० तत्पु०)।

कोशः—'द्विरेफपुष्पलिङ्भृङ्गषट्पदभ्रमराऽलयः'। 'निक्वाणो निक्वणः क्वाणः'। 'वन्दिनः स्तुतिपाठकाः'। सर्वत्राप्यमरकोशः। 'शिखाज्वालाकेलिमौल्योः शिखाशाखाग्रमौलिषु'। इति वैजयन्ती।

व्याकरणम्—जगतीरुहः—जगती + रुह् + क्विप् + जस्। पुष्पैः-अत्र 'साधकतमं करणम्' इति पुष्पशब्दस्य करणसंज्ञा, 'कर्तृकरणयोस्तृतीया' इति तृतीया। अवचकरुः—अव + कृ + लिट्।

पदार्थ—विहितालिनिक्वणजयध्वनयः = किया है भ्रमरगुञ्जाररूप जय ध्वनि जिन्होंने, ऐसे। पवनेरिता = वायुसे हिलाये हुए (अतएव), आकुल = चञ्चल (और) विजिह्म = टेढ़ीमेढ़ी, शिखाः = शाखाओंवाले। जगतीरुहः = वृक्ष। अनिन्द्यवन्दिनः इव = प्रशंसनीय (योग्य) वैतालिकों जैसे। इन्द्रसुतं त = इन्द्रपुत्र उस (अर्जुन) को कुसुमैः = फूलोंसे। अवचकरुः = वर्षा करते थे।

हिन्दी—भौरोंकी गुनगुनाहट रूप विजयध्वनि करते हुए तथा वायु द्वारा हिलाये जानेसे चञ्चल और टेढ़ी मेढ़ी शाखाओंवाले वृक्ष अच्छे वैतालिकोंकी तरह उस अर्जुनपर फूलोंकी वर्षा करते थे।

अभिप्राय—योग्य वैतालिक जब राजाकी जयजयकार करते हुए उसपर फूल बरसाते हैं तब हवासे उनके घुंघराले बाल हिलने लगते हैं, इसी प्रकार अर्जुनके ऊपर ये वृक्ष भी फूलोंकी वरषा कर रहे हैं। फूलोंपर मंडराते हुए भौरोंकी गुञ्जार ही जैसे जयध्वनि है और वायुसे हिलती हुई चंचल टेढ़ी-मेढ़ी शास्त्राएँ ही जैसे उनके केश हैं। कुसुमैः यह करणत्वात् तृतीया विभक्ति हुई। यदि सामान्य विक्षेप ही अर्थ रहता तो कर्म संज्ञा ही होती ॥२॥

अवधूतपङ्कजपरागकणास्तनुजाह्नवी सलिलवीचिभिदः।
परिरेभिरेऽभिमुखमेत्य सुखाः सुहृदः सखायमिव तं मरुतः ॥३॥

अन्वयः—अवधूतपङ्कजपरागकणाः तनुजाह्नवीसलिलवीजिभिदः सुखाः मरुतः तं सुहृदः इव अभिमुखम् एत्य परिरेभिरे।

व्याख्या—अवधूतपङ्कजपरागकणाः विकम्पितपद्मपुरजोलवाः, अनेन पवनस्य सुगन्धिवत्ता ज्ञायते। तनुजाह्नवीसलिलवीचिभिदः लघुगङ्गाजलतरङ्गभेदकारिकाः अनेन पवनस्य शैत्यप्रतीतिः। सुखाः सुखस्पर्शयुता अनेन पवनस्य मन्दताऽनुभवः। मरुतः समीराः, तम् अर्जुनं, सुहृदः इव सखायः इवं, अभिमुखं सम्मुखम्, एत्य आगत्य, परिरेभिरे आलिङ्गितवन्तः। अत्राऽपि शीतलमन्दसुगन्धवतः पवनस्य स्पर्शः शुभशकुनमेव। प्रमिताक्षरावृत्तम्। उत्प्रेक्षाऽलङ्कारः।

भावार्थः—पङ्कजपरागकणाताकम्पयन्तः जाह्नव्या लघुजलवीचीर्भिन्दन्तोऽत्याह्लादकाः मरुतः सम्मुखमेत्य मित्राणीव तमालिलिङ्गुः।

समासः—अवधूतपङ्कजपरागकणः—पङ्कजपरागाणां कणाः (ष० तत्पु०), अवधूताः पङ्कजपरागकणाः यैः ते (बहुव्रीहिः)। तनुजाह्नवीसलिलवीचिभिदः—जाह्नव्याः सलिलवीचयः (ष० तत्पु०), तनवः च ताः जाह्नवीसलिलवीचयः (कर्मधारयः)।

कोशः—'पङ्केरुहं तामरसं सारसं सरसीरुहम्'। 'परागः सुमनोरजः'। 'लवलेशकणाऽणवः'। 'गंङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा 'भङ्गस्तरङ्गऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु'। 'समीरमारुतमरुज्जगत्प्राणसमीरणाः'। 'अथ मित्रं सखा सुहृत्। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—लवाः—लूञ् छेदने 'ऋदोरप्' इति अप् प्रत्ययः । वीचिभिदः- वीचि + भिद् + क्विप् + जस् । मरुतः—म्रियन्ते अनेन विना इति, मृङ् + उतिः + जस । 'मृग्रोरुतिः' इति उति प्रत्ययः । एत्य आ + इण् + ल्यप् ।

पदार्थः—अवधूत = कम्पित किया है, पङ्कज = कमलोंके, परागकणाः = मकरन्दकणोंको जिन्होंने ऐसे । तनु = पतली, जाह्नवीसलिल = गंगाके जलको, वीचि = तरङ्गोंको, भिदः = भेदन करनेवाले । सुखाः = सुखकारक । मरुतः = वायु । तम् = उस (अर्जुन) को । सुहृद इव = मित्रोंकी तरह । अभिमुखम् एत्य = सामने आकर । परिरेभिरे = आलिंगन करते थे ।

हिन्दी—कमलके परागकणोंको हिलाते हुए, गंगाकी छोटी-छोटी लहरोंको फाड़ते हुए सुखकारक वायु, सामने की ओरसे आकर अर्जुनके शरीरको ऐसे छू रहे थे जैसे मित्रको आलिगन कर रहे हों ।

अभिप्राय—जब कोई व्यक्ति दूरकी यात्राको जाने लगता है या दूरसे लौटता है तो मित्र लोग उसका आलिंगन करते हैं, यह भारतीय परम्परा है । यात्रामें सुखद वायुका सामनेकी ओरसे बहना शुभ लक्षण भी है । यहाँ कमलपरागरेणुको कम्पित करनेसे उस वायुका कमलकी सुगन्धसे युक्त होना, गंगाकी छोटी-छोटी लहरोंके भेदनसे शीतल होना और सुखकर इस विशेषणसे मन्द होना व्यक्त होता है । अर्थात् शीतल, मन्द और सुगन्ध वायु उसके सामनेसे प्रवाहित हो रहा था । यहाँपर उपमा तो है ही, विशेषणोंके साभिप्राय होनेसे परिकर अलङ्कार भी है ॥३॥

उदितोपलस्खलनसंवलिताः स्फुटहंसतारसविरावयुजः ।
मुदमस्य माङ्गलिकतूर्यकृतां ध्वनयः प्रतेनुरनुवप्रमपाम् ॥ ४ ॥

अन्वयः—उदितोपलस्खलनसंवलिताः स्फुटहंससारसविरावयुजः अनुवप्रम् अपां ध्वनयः अस्य माङ्गलिकतूर्यकृतां मुदं प्रतेनुः ।

व्याख्या—उदितोपलस्खलनसंवलिताः अभ्युन्नतप्रसारितघातपरिमृष्टाः अतस्तूर्य-घोषा इव रवयुताः आसन्निति भावः । स्फुटहंससारसविरावयुजः व्यक्तहंससारसश-कलरवयुताः, अनुवप्रं तीरे अपां सलीलानां ध्वनयः कलकलनिनादः अस्य अर्जुनस्य, माङ्गलिकतूर्यकृतां शुभवाद्यवृहताम्, मुदं प्रीतिं, प्रतेनुः विस्तारितवन्तः । प्रमिताक्ष-रावृत्तम् । निदर्शनाऽलङ्कारः ।

भावार्थः—उन्नतोन्नतपाषाणखण्डेषु प्रस्खलनेन चूर्यमाणत्वात् घुरघुरायमानाः, स्पष्टमेव हंससारसकूजनरवाः तटान्तःपततां जलानां ध्वनयश्च तस्य मङ्गलसूचकवाद्यं ( तूर्यं ) इव हर्षसाधका अभूवन् ।

समासः—उदितोपलस्खलनसंवलिताः—उदिताः च ते उपलाः (कर्मधारयः), तेषु स्खलनम् (स० तत्पु०), तेन संवलिताः ( तृ० तत्पु० ) । स्फुटहंससारसविरावयुजः—हंसाः च सारसाः च ( द्वन्द्वः ), हंससारसानां विरावाः ( षं० तत्पु० ) स्फुटाः च ते हंसासारसविरावाः ( कर्मधारयः ), स्फुटहंससारसविरावैः युज्यन्ते इति ( उपपद० ) । अनुवप्रम्—वप्रे इति ( अव्ययीभावः ) । माङ्गलिकतूर्यकृताम्—माङ्गलिकानि च तानि तूर्याणि ( कर्मधारयः ) तैः कृता ताम् ( तृ० तत्पु० ) ।

कोशः—'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृशत्' । 'आरवाऽऽरावयंरावविरावाः' । स्याच्चयो वप्रमस्त्रियाम्' । 'आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्' । 'मुत्प्रीतिः प्रमदो हर्षः' । सर्वत्राऽप्यमरकोशः ।

व्याकरणम्—विरावयुजः—विराव + युज + क्विप् + जस् । माङ्गलिकम्—मङ्गल + ठञ् + इक् + सु + अम् । प्रतेनुः—प्र + तनु + लिट् + झि ।

पदार्थः—उदित = ऊँचे, उपल = पत्थरोंमें, स्खलन = गिरनेसे, संवलिताः = चूर चूर हुए । स्फुट = स्पष्ट ही, हंससारखविराव = हंसों और सारसोंकी ध्वनिसे, युजः = मिलते हुए । अनुवप्रं = तटोंपर । अपां ध्वनयः = जलोंके शब्द । अस्य = इस ( अर्जुन ) के । मांगलिकतूर्यकृतां = मंगलसूचक बाजोंसे होनेवाले । मुदं = हर्षको । प्रतेनुः = बढ़ा रहे थे ।

हिन्दी—ऊँचे-ऊँचे पत्थरोंपर टकरानेसे चूर-चूर होते सयय घुरघुराते हुए और हंसों सारसोंकी ध्वनिसे मिलते हुए ऐसे, तटमें गिरते हुए जलोंके शब्द मङ्गलसूचक तूरी आदि बाजोंके शब्दको तरह अर्जुनके हर्षको बढ़ा रहे थे ।

अभिप्राय—तात्पर्य यह है कि ऊपरसे पत्थरोंपर गिरकर बिखरनेमें जलोंसे जो शब्द हो रहा है वह हंसों और सारसोंकी ध्वनिसे मिलनेपर बाजोंका जैसा लग रहा है उसे मंगल सूचक तूरी तुतुही आदि बाजोंके जैसा सुनकर अर्जुनको आनन्द हो रहा है । यहाँ बाजोंके शब्दसे होनेवाला हर्ष जलध्वनिसे होना सम्भव नहीं है

अतः अर्थतः प्रतीत होता है कि वह जलध्वनि उन बाजोंके सदृश थी जिनसे अर्जुनको हर्ष होता था। इसलिये यहाँ निदर्शना अलंकार है ॥ ४ ॥

अवरुग्णतुङ्गसुरदारुतरौ निचये पुरः सुरसरित्पयसाम्।
स ददर्श वेतसवनाऽऽचरितां प्रणतिं बलीयसि समृद्धिकरीम् ॥५॥

अन्वयः—सः पुरः अवरुग्णतुङ्गसुरदारुतरौ बलीयसि सुरसरित्पयसां निचये वेतसवनाऽऽचरितां समृद्धिकरीं प्रणतिं ददर्श।

व्याख्या—सः अर्जुनः पुरः पुरागते अवरुग्णतुङ्गसुरदारुतरौ भग्नोन्नतचन्दन-पादपे, बलीयसि बलकृते, सुरसरितपयसां गङ्गाजलानां, निचये ग्रास पूरे इति भावः। वेतसवनाऽऽचरितः वानीरकाननविहितां, समृद्धिकरीं श्रेयकारिणीं, प्रणतिम् प्रणामं, ददर्श दृष्टवान्। प्रमिताक्षरावृत्तम्।

भावार्थः—सोऽर्जुनः पुरस्तात् भग्नोन्नतदेवदारुद्रुमे बलवत्तरं गङ्गाजलौघे वानीरवनविहितां श्रेयस्करीं प्रणतिं ददृशे।

समासः—अवरुग्णतुङ्गसुरदारुतरौ—सुरदारूणि च ते तरवः ( कर्मधारयः ), अवरुग्णाः तुङ्गाः सुरदारुतरवः येन सः, तस्मिन् ( बहुव्रीहिः )। सुरसरित्पयसाम्—सुराणां सरित् ( ष० तत्पु० ), तस्याः पयांसि तेषाम् ( ष० तत्पु० ), वेतसवनाऽऽचरिताम्—वेतसानां वनम् ( ष० तत्पु० ), वेतसवनेन आचरिता ताम् ( तृ० तत्पु० )। समृद्धिकरीम्—समीचीना ऋद्धिः समृद्धिः, तां करोतीति तद् हेतुस्ताम्। 'कुगतिप्रादयः' इति समासः।

कोशः—'पुरोऽग्रतोऽग्रेप्रपुरो पर्यग्राणि'। 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे'। 'अथ वेतसे। रथाऽभ्रपुष्पविदुलशीतवानीरवञ्जुलाः' इत्यमरः।

व्याकरणम्—बलीयसि—बलम् अस्ति यस्य सः बलवान्, बल + मतुप्। अतिशयेन बलवान् बलीयान्, तस्मिन्, 'द्विवचनविभज्योत्तरपदे तरबीयसुनौ' इति ईयसुन् प्रत्ययः। 'विन्मतोर्लुक्' इति मतुप् प्रत्ययस्य लोपः। समृद्धिकरीम्—'कृञो हेतुताच्छील्याऽऽनुलोम्येषु' इति ट प्रत्ययः, टित्वात् ङीप्। सम् + ऋद्धि + कृ + ट + ङीप् + अम्।

पदार्थः—स = उस ( अर्जुन ) ने। पुरः = सामने। अवरुग्ण = तोड़ दिये हैं, हैं, तुङ्ग = ऊँचे, सुरदारुतरौ = देवदारु वृक्ष जिसने ऐसे। बलीयसि = बलवान्।

सुरसरित्पयसां = स्वर्ग के जलों के निचये = समूह में। वेतसवनाचरितां = वेंत के समूहों द्वारा किये हुए। समृद्धकरीं = ऐश्वर्यकारक। प्रगतिं = झुकाव को। ददर्श = देखा।

हिन्दी—अर्जुनने सामने बड़े-बड़े देवदारु वृक्षोंको भी तोड़ डालनेवाले वेगशाली गंगाजलके बीच, वेंतके वृक्षोंके उस झुकाव को देखा जिससे वह सुरक्षित होकर लहरा रहे हैं।

अभिप्राय—नीतिशास्त्रका नियम है कि बलवान्‌के सामने जो झुक जायगा वह आरामसे रहेगा और जो अकड़ कर रहेगा वह नष्ट हो जायगा। यहाँ भी वेगशाली गंगाके प्रवाह में देवदारू वृक्ष अकड़ कर खड़े रहते हैं तो वेग उन्हें तोड़ देता है और वेंतके वृक्ष झुक जाते हैं तो पानी उनके ऊपरसे होकर निकल जाता है। झुके हुए वेंत समूहको पानीमें आनन्दसे लहराते देखकर अर्जुनने उपर्युक्त दृष्टान्तको पुष्ट समझा। यहाँ समृद्धिकरी इस प्रणतिके विशेषणसे यह भी व्यक्त होता है कि वेतस् वृक्ष प्रणाम करनेमें अभ्यस्त है अतः सब प्रकारसे वह सम्पन्न है जैसा कि नीतिमें कहा है—अभिवादनशीलस्य नित्यं वृद्धोपसेविनः। चत्वारि तस्य वर्धन्ते आयुर्विद्या यशोबलम् ॥५॥

प्रबभूव नाऽलमवलोकयितुं परितः सरोजरजसाऽरुणितम्।
सरिदुत्तरीयमिव संहतिमत् स तरङ्गरङ्गिकलहंसकुलम् ॥६॥

अन्वयः—सः परितः सरोजरजसा अरुणितं संहतिमत् तरङ्गरङ्गिसरिदुत्तरीयम् इव कलहंसकुलम् अवलोकयितुम् अलं न प्रबभूव।

व्याख्या—सः अर्जुनः, परितः समन्तात्, सरोजरजसा कमलरागेण, अरुणितं रक्तरंजितम्, उत्तरीयञ्च कुसुमादिभिः अरुणितं भवतीति भावः। संहतिमत् समूहयुक्तं, नीरन्ध्रमित्याऽऽशयः। तरङ्गरङ्गि तारितरङ्गशोभि, सरिदुत्तरीयम् इव नदीवस्त्रमिवं, स्तनांऽशुकमिवस्थितमिति भावः। कलहंसकुलकादम्बसमूहम्, अवलोकयितुं द्रष्टुम्, अलम् अत्यर्थं, न प्रबभूव न शशाक। तत् सौन्दर्यस्य निःसीमत्वादिति भावः। प्रमिताक्षरावृत्तम्। उत्प्रेक्षालङ्कारः।

भावार्थः—सः सर्वतः कमलरेणुना पाटलितं श्रेणीबद्धं जलतरङ्गशोभि नदीदुकूलमिव कादम्बसमूहं चिरं द्रष्टुं न शशाक।

समासः—सरोजरजसा–सरोजस्य रजः तेन ( ष० तत्पु० )। तरङ्गरङ्गि-तरङ्गैः रङ्गतीति तच्छीलं तत् (उपपद०)। सरिदुत्तरीयम्–सरितः उत्तरीयं तत् (ष० तत्पु०)। कलहंसकुलम्–कलहंसानां कुलं तत् (ष० तत्पु०)।

कोशः—समन्तस्तु परितः 'सर्वतो विष्वगित्यपि'। 'परागः सुमनोरजः'। कादम्बः कलहंसः स्यात्'। सर्वत्राऽप्यमरकोशः। 'अरुणोऽव्यक्तरागेऽर्कसारथौ। निश्शब्दे कपिले कुष्ठभेदे ना गुणिनि त्रिषु'। इति मेदिनी।

व्याकरणम्—अरुणितम्–अरुणः सञ्जातः अस्य तत् अरुण + इतच् + सु + अम्। संहतिमत्-सहति + मतुम्। तरङ्गरङ्गि–तरङ्गैः रङ्गतीति तच्छीलं तत् तरङ्ग + रगि + णिनि + सु + लुक्। अवलोकयितुम्–अव + लोक् + णिच् + तुमुन्। प्रबभूव-प्र + भू + लिट् + तिप् + णल्।

पदार्थ—स = वह (अर्जुन)। परितः = चारों ओर। सरोजरजसा = कमलोंके परागसे अरुणितं = लाल रंगे गये। संहतिमत् = श्रेणीवद्ध। तरङ्गरङ्गि = तरङ्गोंमें लहराते हुए। सरिदुत्तरीयमिव = नदीके दुपट्टे जैसे। कलहसकुलम् = हंसोंके समूह को। अवलोकयितु = देखने में। अलं = अत्यन्त ( देरतक )। न प्रबभूव = समर्थ नहीं हुआ।

हिन्दी—वह चारों ओर कमल परागसे रंगे हुए, कतारमें बँधे, और पानीकी लहरोंमें लहराते हुए हंसोंके समूहको, नदीके दुपट्टेकी तरह देर तक नहीं देख सका।

अभिप्राय—जैसे कोई पुरुष किसी स्त्रीकी ओढ़नीपर लज्जाके कारण देर तक नजर नहीं गड़ा सकता उसी प्रकार अर्जुन भी नदीकी ओढ़नी जैसी इन हंसोंकी कतारपर सौन्दर्यातिरेकके होते हुए भी देर तक दृष्टि न जमा सका, यह तात्पर्य है ॥६॥

दधती क्षतिः परिणतद्विरदे मुदिताऽलियोषिति मदस्रुतिभिः।
अधिकां स रोधसि बबन्ध धृतिं महते रुजन्नपि गुणाय महान् ॥७॥

अन्वय—सः क्षतीः दधति परिणतद्विरदे मदस्रुतिभिः मुदिताऽलियोषिति रोधसि अधिकां धृतिं बबन्ध, महान् रुजन् अपि महते गुणाय (भवति)।

व्याख्या—सः अर्जुनः, क्षतीः क्षतानि, दधति धारयति, परिणतद्विरदे तिर्यग्दन्तप्रहारिणि गजे, मदस्रुतिभिः दानवारिनिष्यदैः, मुदिताऽलियोषिति प्रसन्नभ्रमर्य्यां, रोधसि तटे, अधिकाम् पूर्वतोऽपि विशेषां धृतिं प्रीतिम्, बबन्ध निश्चलीकृतनान्, महान् बृहत्, रुजन् अपि कष्टं ददन् अपि, महते वृहते, गुणाय उत्कर्षाय, भवतीति शेषः। अर्थात् महत्कृता पीडाऽपि शुभावहा एवेत्यर्थः। अत एव गजदन्तप्रहृतस्याऽपि रोधसः प्रीतिकरत्वमुचितमेव।

भावार्थः—सः क्षताति धारयति, तिर्यक्दन्तप्रहारिगजयुते, मदस्रवणैः प्रीतभ्रमरीके तटेऽधिकां प्रीतमकरोत् यतो हि पीडयन्नपि महान् महते उत्कर्षायैव भवति।

समासः—परिणतद्विरदे—द्वौ रदौ येषां ते (बहुव्रीहिः), परिणाताः द्विरदाः यस्मिन्, तस्मिन् (बहुव्रीहिः)। मदस्रुतिभिः—मदस्य स्रुतयः, ताभिः (ष० तत्पु०)। मुदिताऽलियोषिति—मुदिताः अलियोषितः यस्मिन् तत्, तस्मिन् (बहुव्रीहिः)।

कोशः—'तिर्यग्दन्तप्रहारस्तु गजः परिणतो मतः'। इति हलाऽऽयुधः। 'धृतिर्योगाऽन्तरे धैर्ये धारणाऽध्वरतुष्टिषु'। इति विश्वः। 'मौर्व्यांद्रव्याऽऽश्रिते सत्वे शौर्ये सन्ध्यादिके गुणः' इत्यमरः। 'गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये। त्यागशौर्यादिसत्वादिसन्ध्याद्यावृत्तिरज्जुषु। शुक्लादावपि बुद्धयाश्च, इति मेदिनी।

व्याकरणम्—दधति—धा + शतृ + ङि। बबन्ध—बन्ध + लिट् + तिप् + णल्। रुजन्—रुजो भङ्गे + शतृ + सु। महत् + ङे।

पदार्थ—सः = वह (अर्जुन)। क्षतीः = प्रहारों को। दधत्ति = धारण करते हुए। परिणतद्विरदे = तिरछा प्रहार करने वाले हाथियों से युक्त। मदस्रुतिभिः = मदवारिके क्षरण से। मुदितालियोषिति = प्रसन्न है भ्रमरियाँ जिसमें ऐसे। रोधसि = तट में। अधिकां = अधिक। धृतिं = प्रीतिको। बबन्ध = स्थिर करता था। (क्योंकि) महान् = जो बड़ा है (वह)। रुजन् अपि = कष्ट देता हुआ भी। महते गुणाय (भवति) = अत्यन्त उत्कर्षके लिए होता है।

हिन्दी—चोटोंको धारण करते हुए, तिरछा प्रहार करने वाले हाथियोंसे युक्त, मद चू जानेसे प्रसन्न हैं भ्रमरियाँ जिसमें ऐसे तटको देखकर अर्जुन अधिक

प्रसन्न हुआ क्योंकि महान् व्यक्ति कष्ट देता हुआ भी अत्यन्त शोभा दायक ही होता है।

अभिप्राय—तिरछा दन्त प्रहार करने वाला हाथी "पारिणद" कहलाता है। अर्जुनको उसी तटसे होकर इन्द्रकील पर्वतपर चढ़ता है। हाथियोंने अपने दाँओंसे तिरजा प्रहारकर स्थान-स्थानपर उन तटोंको तोड़ रखा है। यद्यपि वे किनारे टूटे हुए हैं फिर भी अर्जुनको अच्छे लग रहे हैं क्योंकि उनके टूटनेसे अर्जुनको ऊपर चढ़नेमें आसानी हो रही है। इसीको इस अर्थान्तरन्यास द्वारा स्पष्ट किया गया है कि महान् व्यक्ति द्वारा दिया हुआ कष्ट भी दूसरोंके लिए उत्कर्षाधायक ही होता है ॥७॥

अनुहेमवप्रमरुणैः समतां गतमूर्मिभिः सहचरं पृथुभिः।
स रथाऽङ्गनामवनितां करुणैरनुबध्नतीमभिननन्द रुतैः ॥८॥

अन्वयः—सः अनुहेमवप्रम् अरुणैः पृथुभिः ऊर्मिभिः समतां गतं सहचरं करुणैः रुतैः अनुबध्नतीं रथाऽङ्गनामवनिताम् अभिननन्द।

व्याख्या—सः अर्जुनः अनुहेमवप्रं स्वर्णसानुसमीप, अरुणैः रक्तैर्भिः स्वर्णकान्त्युपरञ्जनादिति भावः पृथुभिः वृहद्भिः, ऊर्मिभिः विविभिः, समतां समतुल्यतां, गतंप्रासं, सहचरं सहगामिनं करुणैः दीनैः, रुतैः शब्दैः, अनुबध्नन्तीम् अन्विष्यन्तीं, रथाऽङ्गनामवनितां चक्रवाकीम्, अभिननन्द अभिनन्दितवान्।

भावार्थः—सौवर्णशिखरसमीपे हेमकान्त्युपरञ्जनात् तत्तुल्यरूपतां गतमत एव सादृश्याद्विवेक्तुमशक्यं स्वसहचारिणं चक्रवाकं दीनकूजनैरन्विष्यन्तीं चक्रवाकीमर्जुनोऽभिनन्दितवान्।

समासः—अनुहेमवप्रम्—हेम्नः वप्राः (ष० तत्पु०), हेमवप्राणां समीपे (अव्ययीभावः)। रथाङ्गनामवनिआम्—रथस्य अङ्गम् (ष० तत्पु०), रथाङ्गं नाम यस्य सः रथाङ्गनामा (वहुव्रीहिः), रथाङ्गनाम्नः (चक्रवाकस्य) वनिआ, ताम् (ष० तत्पु०)।

कोशः—'रक्तोऽनुरक्ते नीलादिरञ्जिते लोहिते त्रिपु। क्लीबन्तु कुङ्कुमे ताम्रे प्राचीनाऽऽमलकेसृग्जि'। इति मेदिनी। 'विशङ्कटं पृथुबृहद्विशालं पृथुलं महत्।

वङ्गोरु विपुलम्' । 'तिरश्चां वाशितं रुतम्' । कोकश्चक्रश्चक्रवाको रथाङ्गाऽह्वय-नामकः । सर्वत्राऽप्यमरकोशः ।

व्याकरणम्—समताम्–सम + तल् + टाप् + अम् । सहचरम्–सह + चर् + अच् + अम् । 'पचाद्यच्' । इति अच् प्रत्ययः । अनुबध्नतीम्–तनु + बन्ध + शतृ + ङीप + अम् । अभिननन्द–अभि + टुनदि + लिट् + तिप् + णल् ।

पदार्थ—सः = वह ( अर्जुन ) । अनुहेमवप्रम् = सुनहरे शिखरों के पास । अरुणैः = लाल-लाल । पृथुभिः = बड़े-बड़े । उर्मिभिः = लहरोंसे, समतां गतं = समानताको प्राप्त । सहचरं = तपने पति ( चक्रवाक ) को । करुणैः = दीन । रुतैः = कूजनोंसे । अनुबध्नतीं = खोजती हुई । रथाङ्गनामवनिताम् = रथाङ्गनाम् (चक्रवाक) की पत्नी (अर्थात् चक्रवाकी) को । अभिनदन्द = सराहना करता था ।

हिन्दी—सुवर्णमय शिखरोंके पास सोनेकी चमकीली किरणोंसे पीली बड़ी-बड़ी लहरोंसे सुनहरे हुए अपने साथी चकवे को, दीन वाणीसे खोजती हुई चकवीकी अर्जुन सराहना करते थे ।

अभिप्राय—स्वर्गागङ्ग की बड़ी बड़ी सफेद लहरें सोनेके शिखरों तक पहुँचती हैं और उन शिखरोंसे निकलती हुई चमकीली किरणोंसे पीली दीखती हैं । वे पीली लहरें जब सफेद चकवे पर पड़ती है तो चकवा भी सुनहरा हो जाता है और उसके साथकी चकवी लहरोंके सङ्गमें खोये हुए चकवेको दीन स्वरसे खोजने लगती हैं । उसके इस उत्कृष्ट प्रेमको देखकर अर्जुन उसकी सराहना करते हैं । यहाँपर लहरोंका अपने सफेद गुणको छोड़कर पीला हो जाना तद्गुण अलंकार है और उससे सुनहरे होनेपर चकवेको खोया हुआ समझना यह चकवी की भ्रान्ति हैं । ये दोनों अलंकार अङ्गाङ्गीभाव से संकीर्ण हो गये हैं ।।८।।

सितवाजिने निजगदु रुचयश्चलवीचिरागरचनापटवः ।
मणिजालम्भसि निमग्नमपि स्फुरितं मनोगतमिवाऽऽकृतयः ।।९।।

अन्वयः—चलवीचिरागरचनापटवः रुचयः अम्भसि निमग्नम् अपि मणिजालं मनोगतं स्फुरितम् आकृतयः इव सितवाजिने निजगदुः ।

व्याख्या—चलवीचिरागरचनापटवः चञ्चलतरङ्गवर्णान्तरापादनसक्षमाः, रुचयः कान्तयः, अम्भसि जले निमग्नम् अपि बुडितम् अपि, मणिजालं रत्नग्रामं,

मनोगतं हृदिस्थं, स्फुरितं रोषादिविकारम्, आकृतयः इव भ्रूभङ्गादिबाह्यविकाराः इव, सितवाजिने अर्जुनाय, निजगदुः ज्ञापयामासुः। यतो हि 'परेङ्गितज्ञानफला बुद्धयः'। प्रमिताक्षरावृत्तम्। उपमालङ्कारः।

भावार्थः—यथा मनोगतं क्रोधादिविकारमाकृत्या स्पष्टं परिलक्ष्यते तथैव जलान्तर्गतमणीनां प्रभाः जलवीचिरञ्जनात् स्वसत्तामर्जुनाय कथयामासुः।

समासः—चलवीचिरागरचनापटवः—चलाः च ताः वीचयः (कर्मधारयः), चलवीचीनां रागः (ष० तत्पु०), तस्य रागः (ष० तत्पु०), तस्यां पटवः (ष० तत्पु०)। मणिजालम्—मणीनां जालं तत् (ष० तत्पु०)। मनोगतम्—मनसि गतम् तत् (स० तत्पु०)। सितवाजिने—सिताः वाजिनः यस्य सः, तस्मै (बहुव्रीहिः)।

कोशः—'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु'। 'स्युः प्रभा रुग्रुचिस्त्विड्भा भाश्छविद्युतिदीप्तयः'। 'अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम्'। रत्नं मणिर्द्वयोरश्मजातौ'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—मनोगतम्—मनस् + गम् + क्त + अम्। निजगदुः—नि + गद + लिट् + झि + उस्। अत्र निगदनक्रियासम्बन्धात् 'सितवाजिने' इति 'क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्' इति सम्प्रदानसंज्ञा, 'चतुर्थी सम्प्रदाने' इति। चतुर्थी विभक्तिः।

पदार्थ—चलवीचिरागरचनापटवः = चञ्चलतरङ्गोंको रंगनेमें चतुर। रुचयः = प्रभाएँ। अम्भसि = जलमें। निमग्नम् अपि = डूबे हुए भी। मणिजालं = रत्नसमूह को। मनोगतं = मनमें आये हुए। स्फुरितं = भावको। आकृतय इव = आकृतियां जैसे। सितवाजिने = श्वेत घोड़ोंवाले (अर्जुन) से। निजगदुः = कहती थीं।

हिन्दी—जलके भीतर छिपी हुई मणियोंकी कान्तिसे जलकी लहरे रंग जा रही थीं जिससे अर्जुनको जलके भीतर कौन-कौन रत्न हैं यह ऐसे ही प्रतीत हो जाता था, जैसे कि, किसी व्यक्तिकी आकृतिको देखकर यह ज्ञान हो जाता है इसके मनके अन्दर कैसे विचार उत्पन्न हो रहे हैं।

अभिप्राय—अर्जुनके घोड़े सफेद थे इसलिए उनका नाम सितवाजि भी है। "क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्" इस नियमसे सितवाजिने यह चतुर्थीका

प्रयोग है। 'आकृतिर्भावमाख्याति वपुराख्याति भोजनम्। सन्ततिः पुण्यमाख्याति श्रुतमाख्याति भाषणम्'॥ अर्थात् आकृतिसे व्यक्तिके मनोभावोंका, शरीरसे भोजन का, सन्तानको देखकर पुण्योंका तथा भाषणसे शास्त्रज्ञानका अनुमान हो जाता है। यह सूक्ति स्मरणीय है ॥९॥

उपलाऽऽहतोद्धततरङ्गधृतं जविना विधूतविततं मरुता।
स ददर्श केतकशिखाविशदं सरितः प्रहासमिव फेनमसाम् ॥१०॥

अन्वयः—सः उपलाऽऽहतोद्धततरङ्गधृतं जविना मरुता विधूतविततं केतकशिखाविशदं अपां फेनम् सरितः प्रहासम् इव ददर्श।

व्याख्या—सः अर्जुनः, उपलाऽऽहतोद्धततरङ्गधृतं पाषाणघातितोत्थभङ्गः धारितं, जविना रंघेण, मरुता समीरेण विधूतविततं कम्पितविस्तृतं, केतकशिखाविशदं केतकीपुष्पाऽग्रशुभ्रम् अपां जलानां, फेनम्, डीण्डिरम् सरितः नद्याः, प्रहासम् इव अट्टहासम् इव अट्टहासम् इव, ददर्श। अवलोकयामास प्रमिताक्षरावृत्तम्। उत्प्रेक्षाऽलङ्कारः।

भावार्थः—निर्गमरोधात् पाषाणदण्डेषु ताड़िततयोद्गततरङ्गैर्गृहीतवेगेन वायुनोत्थापितत्वाद्विस्तृतं केतकाग्रधवलं जलहिण्डीरं स तस्याः सरितोहासमिव ददर्श।

समासः—उपलाऽऽहतोद्धततरङ्गधृतम्—उपलैः आहताः (तृ० तत्पु०), उद्धताः च ते तरङ्गाः (कर्मधारयः), उपलाऽऽहताः च ते उद्धततरङ्गाः (कर्मधारयः), तैः भृतः, तम् (तृ० तत्पु०)। विधूतविततम्—विधूतः च असौ विततः तम् (कर्मधारयः)। केतकशिखाविशदम्—केतकस्य शिखा (ष० तत्पु०), सा इव विशदः, तम् (उपमानकर्म०)।

कोशः—'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्'। 'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु'। 'जवोऽथ शीघ्रं त्वरितं लघु क्षिप्रमरं द्रुतम्'। 'समीरमारुतमरुज्जगत्प्राणसमीरणाः'। 'हिण्डीरोऽब्धिकफः फेनः। सर्वत्रामरकोशः।

व्याकरणम्—जविना—जवः अस्य अस्ति इति जवी तेन, जव + इनि + टा। केतकशिखाविशदम्—केतक्याः विकारः केतकं, 'तस्य विकारः' इति अण् प्रत्ययः। 'पुष्पमूलेषु बहुलम्' इति अण् प्रत्ययस्य लोपः। ददर्श—दृशिर् प्रेक्षणे धातोः लिटि तिपि रूपम्।

पदार्थ—सः = उस (अर्जुन) ने। उपलाहतोद्धततरङ्गधृतं = (उपलाहत = ) पत्थरोंपर टकरानेसे (उद्धवतरङ्ग = ) ऊपर उछलती हुई तरङ्गों द्वारा (धृतं = ) धारण किये गये। (तथा) जविना = वेगवाले। मरुता = वायुसे। विधूतविततं = उड़ाकर फैलाये हुए। केतकशिखाविशदं = केतकीके अग्रभागकी तरह स्वच्छ। अपां फेनम् = फेनको। सरितः = नदीके। प्रहासम् इव = अट्टहासकी तरह। ददर्श = देखा।

हिन्दी—पत्थरोंपर टकराकर उछलती हुई तरङ्गोंमें लगते हुए, उनके वेगसे हिलहिलकर फैलते हुए तथा केतकीके फूल जैसे सफेद फेनको अर्जुन ने नदीके अट्टहास जैसा देखा।

अभिप्राय—कविप्रसिद्धि है कि अट्टहासका सफ़ेद रूपमें वर्णन किया जाता है। स्वर्गशङ्गाके सफ़ेद फेनको देखकर अर्जुनको लगा कि जैसे नदी हँस रही हो, यह भाव है ॥१०॥

बहु बर्हिचन्द्रकनिभं विदधे धृतिमस्य दानपयसां पटलम्।
अवगाढमीक्षितुमिवेभपतिं विकसद्विलोचनशतं सरितः॥ ११॥

अन्वयः—बर्हिचन्द्रकनिभं बहु दानपयसाम् पटलम् अवगाढम् इभपतिम् ईक्षितुं विकसत् सरितः विलोचनशतम् इव अस्य धृतिं विदधे।

व्याख्या—बर्हिचन्द्रकनिभं मयूरमेचकरोभं, बहु अनेकधा, दानपयसाम् मदबलानां, पटलं ग्रामः, अवगाढम् अन्तःप्रविष्टम्, इभपतिं ऐरावतम्, ईक्षितुम् अवलोकयितुं, विकसत् विकासं गच्छत्, सरितः नद्याः, विलोचनशतम् इव चक्षुः-शतमिव, अस्य अर्जुनस्य, धृतिं प्रेम विदधे कृतवान्। प्रमिताक्षरावृत्तम्। उत्प्रेक्षाऽलङ्कारः।

भावार्थः—मयूरमेचकसदृशमनेकधा मदजलानां समूहोऽन्तःप्रविष्टं गजेन्द्रमिव-लोकयितुमुन्मिषन्नद्या लोचनशतमिवास्य प्रीतिं चकार।

समासः—बर्हिचन्द्रकनिभम्—बर्हिणः चन्द्रकः (ष० तत्पु०)। बर्हिचन्द्रकेण सदृशम् (तृ० तत्पु०)। दानपयसाम्—दानानि एव पयांसि तेषाम् (रूपककर्म०)। विलोचनशतम्—विलोचनानां शतम् (ष० तत्पु०)।

कोशः—'पिच्छबर्हे नपुंसके'। 'मयूरो बर्हिणो बर्ही' 'समौ चन्द्रकमेचकौ' 'कृष्णे नीलाऽसितश्यामकालश्यामलमेचकाः'। 'पयः क्षीरं पयोऽम्बु च'। 'समूहे पटलं न वा'। सर्वत्राऽप्यमरकोशः। 'धृतिर्योगाऽन्तरे धैर्ये धारणाऽध्वरतुष्टिषु'। इति विश्वः।

व्याकरणम्—बर्हिचन्द्रकनिभम्—बर्हम् अस्ति यस्य सः बर्ही + इनिः। पटलम्-अत्र 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' इति जातावेकवचनम्। अवगाढम्-अव + गाहू + क्त + अम्।

पदार्थः—बर्हिचन्द्रकनिभ = मोरके चन्द्रक (पंखमें बना हुआ चन्द्राकार चिह्न) सदृश। बहु = अनेकों। दानपयसां पटलं = मदजलोंका समूह। अवगाढं = (जलके) भीतर घुसे हुए। इभपतिं = गजराजको। ईक्षितुं = देखनेके लिये। विकसत् = खिले हुए। सरितः = नदीके। विलोचनशतम् इव = सैकड़ों नेत्रोंकी तरह। अस्य = इस (अर्जुन) को। धृति विदधे = अच्छा लगता था।

हिन्दी—मोर पंखके चन्द्रक की तरह अनेक प्रकारका मजदलोंका समूह जलके भीतर घुसे हाथीको देखनेके लिये नदीके खुले हुए सैकड़ों नैत्रों जैसा, अर्जुनको अच्छा लग रहा था।

अभिप्रायः—पानीमें जब कोई स्निग्ध पदार्थको बूंद छोड़ी जाय तो उसकी रंगविरंगी गोलाकार झांइयां दीखने लगती हैं। स्वर्गगङ्गामें भी जब हाथी भीतर घुसते हैं तो उनके कपोलोंका मदजल, जो कि चिकना होता है, जलके ऊपर तैर रहा है और उसमें मोरपंखके चन्द्रक जैसे, सैकड़ों चन्द्रक बन जा रहे हैं। कवि उत्प्रेक्षा करता है कि भीतर घुसे हुए हाथीको खोजनेके लिए नदी जैसे अपनी चन्द्ररूप सैकड़ों आँखोंको खोले हुए है। यह दृश्य अर्जुनके लिए अत्यन्त प्रसन्नतादायक हो रहा है, यह भाव है॥ ११॥

प्रतिबोधजृम्भणविभिन्नमुखी पुलिने सरोरुहदृशा ददृशे।
पतदच्छमौक्तिकमणिप्रकरा गलदश्रुबिन्दुरिव शुक्तिवधूः॥१२॥

अन्वयः—प्रतिबोधजृम्भणविभिन्नमुखी पतदच्छमौक्तिकमणिप्रकरा गलदश्रुबिन्दुः इव शुक्तिवधूः पुलिने सरोरुहदृशा ददृशे।

व्याख्या—प्रतिबोधजृम्भणविभिन्नमुखी प्रतिबोधे, निद्रापगतौ, जृम्भणेन जृम्भया, उच्छूनतया वा, विभिन्नमुखी, विवृताऽऽस्या, पतदच्छमौक्तिकमणिप्रकरा प्रसरदच्छमुक्तारत्नग्रासः गलदश्रुबिन्दुः इव च्युतनेत्रजलपृषतः इव, शुक्तिवधूः शुक्तियोषा, पुलिने सैकते, सरोरुहदृशा कमलनयनेन अर्जुनेन, ददृशे अवलोकिता। प्रमिताक्षरावृत्तम्। पद्येऽस्मिन् सन्देहाऽलङ्कारस्य उत्प्रेक्षाऽलङ्कारस्य च अङ्गाङ्गिभावसङ्करः।

भावार्थः—यथा काचिद्वधूः जागरणकाले जृम्भमाणा मुखं विवृणोति तथैव ष्फुटनोनोच्छूनतया विकसिताग्रां, अश्रुबिन्दूनिवाच्छमौक्तिकमणिनिकरान् प्रकटयन्तीं शुक्तिं पुण्डरीकाक्षोऽर्जुनः ददर्श।

समासः—प्रतिबोधजृम्भणविभिन्नमुखी—प्रतिबोधे जृम्भणम् ( स० तत्पु० ), विभिन्नं मुखं यस्याः सा (बहुव्रीहिः) प्रतिबोधजृम्भणेन विभिन्नमुखी (तृ० तत्पु०)। पतदच्छमौक्तिकमणिप्रकरा—मौक्तिकानि एव मणयः (रूपककर्म०), तेषाम् प्रकरः (ष० तत्पु०), पतन् अच्छः मौक्तिकमणिप्रकरः यस्याः सा (बहुव्रीहिः)। अश्रूणां बिन्दवः (ष० त०), गलन्तः अश्रुबिन्दवः यस्याः सा (बहुव्रीहिः)। शुक्तिवधूः—शुक्तिः वधूः इव (उपमान०)। सरोरुहदृशा—सरोरुहे इव दृशौ यस्य सः, तेन ( बहुव्रीहिः )।

कोशः—'प्रसन्नोऽच्छः'। पृषन्ति बिन्दुः पृषताः पुमांसो विप्रुषः स्त्रियाम्'। 'योषा नारी सीमन्तिनी वधूः'। 'तोयोत्थितं तत् पुलिनम्'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—विभिन्नमुखी—अत्र मुखशब्दात् 'स्वाऽङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीप्। ददृशे—दृश् धातोः कर्मणि लिट्।

पदार्थ—सरोरुहदृशा = कमलसदृश नेत्रोंवाले (अर्जुन) ने। पुलिने = तटपर। प्रतिबोधजृम्भणविभिन्नमुखी = (प्रतिबोध = ) जगते समयकी (जृम्भण = ) जंभाईसे ( विभिन्नमुखी = ) खुले मुँहवाली वहूकी तरह, ( प्रतिबोध = ) फट जानेसे (जृम्भण = ) जो तनाव उससे (विभिन्नमुखी) पृथक्-पृथक् हो गया है अग्रभाग जिसका ऐसी। गलदश्रुबिन्दुः इव = गिरते हुए आँसुओंकी बूंदों जैसे। पतदच्छमौक्तिकमणिप्रकरा = गिर रहे हैं स्वच्छ मुक्तामणियोंके समूह जिससे ऐसी। शुक्तिवधूः = सीपी रूप बहूको। ददृशे = देखा।

हिन्दी—उठते समय जंभाई लेनेमें मुख फैलाती हुई बहूकी तरह फटने पर तन जानेसे जिसके अगले भाग अलग-अलग हो गये हैं और गिरते हुए आँसुओंकी बूंदोंकी तरह जो स्वच्छ मोतियोंको फेंक रही हैं ऐसी सीपियोंको कमल जैसी आँखोंसे अर्जुनने देखा।

अभिप्राय—जैसे कोई रमणी निद्रा परित्याग करके जब उठती है और जंभाई लेती है, तब उसका मुंह खुलता है तो दाँत चमकने लगते हैं, ऐसे ही नदियोंके किनारे पड़ी हुई सीपियाँ घूपसे तनकर फट जाती हैं तो उनके अन्दरसे चमकते दाँतों जैसे मोती चटककर गोल-गोल गिरते हुए आँसुओं की बूंदोंकी तरह बाहर आ रहे हैं। विशेषण श्लिष्ट होनेसे रूपक है या उपमा, यह निश्चय नहीं होता अतः सन्देह अलंकार है जो, गलित आँसुओंकी बूंद जैसे, इस उत्प्रेक्षासे संकीर्ण हो गया है ॥१२॥

शुचिरप्सु विद्रुमलताविटपस्तनुसान्द्रफेनलवसंवलितः ।
स्मरदायिनः स्मरयति स्म भृशं दयिताऽधरस्य दशनांऽशुभृतः ॥१३॥

अन्वयः—अप्सु शुचिः तनुसान्द्रफेनलवसंवलितः विद्रुमलताविटपः स्मरदायिनः दशनांऽशुभृतः दयिताऽधरस्य भृशं स्मरयति स्म ।

व्याख्या—अप्सुसलीले, शुचिः शुभ्रः, तनुसान्द्रफेनलवसंवलितः ईषद्डिण्डीर-लेशसम्पृक्तः, विद्रुमलताविटपः प्रवालवल्लीपल्लवः, स्मरदायिनः ईच्छाप्रदस्य, कामोद्दीपकस्येति भावः। दशनांशुभृतः दन्तकान्तिललितस्य, दयिताऽधरस्य प्रिया-रदनच्छदस्य, भृशम् अत्यधिकं स्मरयतिस्म स्मरणं कारयतिस्म प्रमिताक्षरावृत्तम्। स्मरणाऽलङ्कारः।

भावार्थः—जले स्वच्छं लघुभिः सान्द्रैश्च फेनलवैर्वेष्टितं प्रवाललतापल्लव दृष्ट्वा सः कामोद्दीपकस्य दन्तकान्तिवेष्टितस्य प्रियाधरस्य स्मरणमकरोत्।

समासः—तनुसान्द्रफेनलवसंवलितः—तनुः च असौ सान्द्रः (कर्मधारयः), फेनस्य लवः (ष० तत्पु०) तनुसान्द्रः च असौ फेनलवः (कर्मधारयः), तेन संवलितः (तृ० तत्पु०)। विद्रुमलताविटपः—विद्रुमस्य लता (ष० तत्पु०), तस्याः विटपः (ष० तत्पु०)। स्मरदायिनः—स्मरं ददातीति तस्य (उपपद०)।

दशनांशुभृतः—दशनानाम् अंशवः ( ष० तत्पु० ), तान् बिभर्तीति तस्य । दयिताऽधरस्य—दयितायाः अधरः तस्य ( ष० तत्पु० ) ।

कोशः—'शुचिर्ग्रीष्माऽग्निश्रृङ्गारेष्वाषाढे शुद्धमन्त्रिणि । ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु' इति मेदिनी । 'स्तोकाऽल्पक्षुल्लकाः सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु' । 'हिण्डीरोऽब्धिकफः फेनः' उभयत्राऽप्यमरः । 'विटपः पल्लवे षिड्गे विस्तारे स्तम्ब-शाखयोः' इति विश्वः । 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी' इत्यमरकोशः ।

व्याकरणम्—स्मरदायिनः—अत्र 'सुप्यजातौ णिनिस्ताच्छील्ये' । इति णिनिः । 'आतो युक् चिण्कृतोः' इति युक् आगमः । स्मर + दा + णिच् + युक् + ङस् । दशनांशुभृतः—दशन + अंशु + भृ + क्विप् + ङस् । दयिताधरस्य—अत्र स्मरयतिस्म क्रियायाः योगे 'अधीगर्थदयेषां कर्मणि' इति षष्ठी । स्मरयतिस्म—स्मृ + णिच् + लट् + तिप् + स्म । अत्र 'लट स्मे' इति भूताऽर्थे लट्, 'मितां ह्रस्वः' इति आ इत्यस्य ह्रस्वे ( अकारे ) रूपम् ।

पदार्थ—अप्सु = पानीमें । शुचिः = स्वच्छ । तनुसान्द्रफेनलवसंवलितः = पतले और गाढे फेनके टुकड़ोंसे वेष्टित । विद्रुमलताविटपः = मूंगेकी लताओंके पौधे । स्मरदायिनः = कामोद्दीपक । दशनांशुभृतः = दाँतोंकी किरणरूप वस्त्रसे वेष्टित । दयिताधरस्य = प्रियाके अधरोंका । भृशं = बार-बार । स्मरयतिस्म = स्मरण कराता था ।

हिन्दी—जलमें स्वच्छ छोटे-छोटे और गाढे फेनके टुकड़ोंसे वेष्टित प्रवालकी लताओंके पौधेको देखकर अर्जुनको कामोद्दीपक और दन्तकान्तिसे घिरे हुए प्रियाके अधरोंका स्मरण हो आया ।

अभिप्राय—सफेद फेनके टुकड़े दन्तकान्तिके सदृश हैं और लाल-लाल विद्रुम लताएँ अधरोंके सदृश, अतः सदृश पदार्थोंको देखकर अर्जुनको कामोत्तेजक प्रियाके अधरोंका स्मरण हो आता है, यह स्मरणालङ्कार है ॥१३॥

उपलभ्य चञ्चलतरङ्गधृतं मदगन्धमुत्थितवतां पयसः ।
प्रतिदन्तिनामिव स सम्बुबुधे करियादसामभिमुखान् करिणः ॥१४॥

अन्वयः—सः चञ्चलतरङ्गधृतं मदगन्धम् उपलभ्य पयसः उत्थितवतां करियादसां प्रतिदन्तिनाम् इव अभिमुखान् करिणः सम्बुबुधे ।

व्याख्या—सः धनञ्जयः चञ्चलतरङ्गधृतं चपलोर्मिग्राहीतं, तत्सङ्क्रान्तमिति भावः। मदगन्धं मदवारिगन्धम्, उपलभ्य संप्राप्य, आघ्रायेत्यर्थः। पयसः सलिलात्, उत्थितवतां विहितोत्थानानां, राघादिति भावः। करियादसां गजाऽऽकृतिजलजन्तु-विशेषाणाम्, प्रतिदन्तिनाम् इव प्रतिपक्षिणां करिणाम् इव, अभिमुखान् सम्मुख-स्थितान्, करिणः गजान्, सम्बुबुधे ददर्श। प्रमिताक्षरावृत्तम्। उत्प्रेक्षाऽलङ्कारः।

भावार्थः—स चपलोर्मिगृहीतं दानवारिगन्धमाघ्राय जलादुत्थितवतां गजाकार-जलजन्तूनां प्रतिपक्षिणां गजानामिवाभिमुखं प्रवर्तमानन् गजाम् ददर्श।

समासः—चञ्चलतरङ्गधृतम्—चञ्चलाः च ते तरङ्गाः (कर्मधारयः), तैः धृतः तम् (तृ० तत्पु०)। मदगन्धम्—मदस्य गन्धः तम् ( ष० तत्पु० )। करियादसाम्-गजाकाराणि यादांसि तेषाम् ( मध्यमपदलोपी स० )। प्रतिदन्तिनाम्—प्रतिकूलाः दन्तिनः प्रतिदन्तिनः, तेषाम् (गतिसमासः)।

कोशः—'भङ्गस्तरङ्ग ऊर्मिर्वा' सलिलं कमलं जलम्। पयः कीलालम-मृतम्'। 'यादांसि जलजन्तवः'। 'दन्ती दन्तावलो हस्ती'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—उत्थितवताम्—उद् + स्था + क्तवतु + आम्। उपलभ्य-उप + लभ + ल्यप् सम्बुबुधे—सम् + बुध + लिट् + त।

पदार्थ—स = वह ( अर्जुन )। चञ्चलतरल्लधृतं = चञ्चलतरङ्गोंसे लिए हुए। मदगन्धं = मदजलकी गन्धको। उपलभ्य = पाकर। पयसः = जलसे। उत्थित-वतां = उठते हुए। करियादसां हाथी जैसे जलजन्तुओंके। प्रतिदन्तियाम् इव = प्रतिपक्षी हाथियोंकी तरह। अभिमुखान् = सामने आते हुए। करिणः = हाथियोंको। सम्बुबुधे = समझा।

हिन्दी—चञ्चल तरङ्गोंमें लगे हुए मदजलकी गन्धको सूंघलर जलसे ऊपरको उठते हुए गजाकार जलजन्तुओंको अर्जुन नें सामने आते हुए विपक्षी हाथियों जैसा देखा।

स जगाम विस्मयमुदीक्ष्य पुरः सहसा समुत्पिपतिषोः फणिनः।
प्रहितं दिवि प्रजविभिः श्वसितैः शरदभ्रविभ्रममपां पटलम् ॥१५॥

अन्वयः—सः पुरः सहसा समुत्पिपतिषोः फणिनः प्रजविभिः श्वसितैः दिवि प्रहतं शरदभ्रविभ्रमम् अवां पटलं पुरः उदीक्ष्य विस्मयं जगाम।

व्याख्या—सः अर्जुनः, पुरोऽपि सहसा अतर्किते एव, समुत्पिपतिषोः समुत्थातुमिच्छोः, फणिनः भुजगस्य, प्रजविभिः अतिवेगैः, श्वसितैः फूत्कारैः दिवि प्रहितं-प्रेरितं, शरदभ्रविभ्रमं शरन्मेघसौन्दर्यम्, अपां पवसां, पटलं समूहम्, पुरः सम्मुखे, उदीक्ष्य विलोक्य, विस्मयम् साश्चर्यं, जगाम गतः, स आश्चर्यचकितोऽभूदित्यर्थः। प्रमिताक्षरावृत्तम्। उपमाऽलङ्कारः।

भावार्थः—अर्जुनः पुरतः सहसोत्पतिष्णोरजगरस्य दीर्घैर्वेगवद्भिश्च श्वासवायुभिराकाशे निक्षिप्तम् एव स्वच्छतया शारदीयाभ्रखण्डमिवावलोक्यमानं जलसमूहं दृष्ट्वाऽऽश्चर्यमकरोत्।

समासः—शरदभ्रविभ्रमम्—शरदि अभ्रम् ( ष० तत्पु० )। शरदभ्रस्य इव विभ्रमः यस्य, तत् (व्यधिकरणबहु०)।

कोशः—'पुरोऽधिकमुपर्यग्राणि'। 'अतर्किते तु सहसा'। 'कुण्डली गूढपाच्चक्षुःश्रवा काकोदरः फणी'। 'अभ्रं मेघो वारिवाहः'। 'समूहे पटलं न ना'। 'विस्मयोद्भुतमाश्चर्यम्'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—समुत्पिपतिषोः—सन्नन्तात् सम्पूर्वकाद् उदुपसर्गकात् पत् धातोः उ प्रत्यये इटि ङसि रूपम्। सम् + उत् + पत् + सन् + उ + इट् + ङस्। फणिनः-फणः अस्य अस्ति, 'अत इनिः' इति इनि प्रत्ययः। फण + इनि + ङस्। प्रजविभिः-प्र + जव + इनि + भिस्। उदीक्ष्य—उत् + ईक्ष + ल्यप्। जगाम—गम् + लिट् + तिप् + णल्।

पदार्थ—स वह ( अर्जुन ) पुरः = सामने। सहसा = एकाएक। समुत्पिपतिषोः = उठनेकी इच्छा करते हुए। फणिनः = सर्पके। प्रजविभिः = वेगवाले। श्वसितैः = श्वासोंसे। दिवि = आकाशमें। प्रहितं = फेंके हुए। शरदभ्रविभ्रमं = शरत्कालके मेघ जैसे सुन्दर। अपांपटलं = जलसमूहको। उदीक्ष्य = देखकर। विस्मएं जगाम = आश्चर्यको प्राप्त हुआ।

हिन्दी—सामने एकाएक उठनेकी इच्छा करते हुए अजगरकी गहरी और वेगशील श्वासवायुसे उछाल कर आकाशमें गये हुए जलसमूहको शरद्कालके स्वच्छ बादलके टुकड़े जैसा देखकर अर्जुनको आश्चर्य हो रहा था ॥१५॥

स ततार सैकतवतीरभितः शफरीपरिस्फुरितचारुदृशः ।
ललिताः सखीरिव बृहज्जघनाः सुरनिम्नगामुपयतीः सरितः ॥१६॥

अन्वयः—सः सैकवतीः अभितः शफरीपरिस्फुरितचारुदृशः सुरनिम्नगाम् उपयतीः वृहज्जघनाः ललिताः सखीः इव सरितः ततार ।

व्याख्या—सः धनञ्जयः, सैकतवतीः सिकतामतीः अभितः सर्वतः, शफरोपरिस्फुरितचारुदृशः मत्सीस्पन्दनरम्यमं, सुरनिम्नगां गङ्गाम्, उपयतीः समापारयन्तीः वृहज्जघनाः प्रदृक्षश्रोणीपुरोभागाः, ललिताः सुन्दरीः, सखीः इव वयस्याः इव, सरितः नदीः, ततार अतिचक्रमे । प्रमिताक्षरावृत्तम् । पद्येऽस्मिन् रूपकाऽलङ्कारः, उपमाऽलङ्कारश्च अनयोः संसृष्टिः ।

भावार्थः—सः पुलिनवतीः, परितो मत्स्यीपरिस्फुरणलोलनेत्राः, स्वर्गगङ्गा भजन्तीः बृहन्मध्याः परितः, वयस्याः सखीः इव ततार ।

समासः—शफरीस्फुरितचारुदृशः—शफरीणां स्फुरितानि (ष० तत्पु०), शफरीपरिस्फुरितानि एव चारवः दृशः यासां, ताः (बहुव्रीहिः)। सुरनिम्नगाम्—सुराणां निम्नगा ताम् (ष० तत्पु०)। बृहज्जघनाः—बृहत् जघनं यासां ताः (बहुव्रीहिः)।

कोशः—'तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्'। 'प्रोष्ठी तु शफरी द्वयोः'। 'आलिः सखी वयस्याऽथ'। सर्वत्राऽप्यमरकोशः। जघनं स्यात् स्त्रियाः श्रोणिपुरोभागे कटावपि' इति मेदिनी ।

पदार्थ—सः = वह (अर्जुन)। सैकतवतीः = किनारोंवाली । अभितः = चारों ओर । शफरीपरिस्फुरितचारुदृशः = मछलियोंका इधर-उधर घूमना ही है सुन्दर नेत्र संचालन जिनका ऐसी । सुरनिम्नगाम् = स्वर्गङ्गाको । उपयतीः = प्राप्त होती हुई । बृहज्जघनाः = बड़े बड़े जघनों (मध्यप्रदेशों) वाली । ललिताः = सुन्दर । सखीः इव = सखियोंकी तरह । सरितः = नदियोंको ततार = तर जाता था ।

हिन्दी—उस अर्जुनने किनारेवाली, चारों ओर मछलियोंका फड़कना ही है सुन्दर नेत्र जिनके ऐसी, स्वर्गङ्गामें मिलती हुई,चौड़े चौड़े फाटवाली नदियोंको,

चारों ओर घूमती हुई मछलियोंकी तरह फड़कते नेत्रोंवाली, स्वर्गमें ( स्नानार्थ ) उतरती हुई, विस्तृत जघनोंवाली सखियोंकी तरह पार किया।

अधिरुह्य पुष्पभरनम्रशिखैः परितः परिष्कृततलां तरुभिः।
मनसः प्रसत्तिमिव मूर्ध्नि गिरेः शुचिमाससाद स वनान्तभुवम् ॥१७॥

अन्वयः—सः अधिरुह्य पुष्पभरनम्रशिखैः परितः परिष्कृततलां शुचिं मनसः प्रसत्तिम् इव गिरेः मूर्ध्नि वनान्तभुवम् आससाद।

व्याख्या—सः अर्जुनः, अधिरुह्य गिरिम् आरुह्य, पुष्पभरनम्रशिखैः पुष्पभारानम्राऽग्रभागैः, तरुभिः वृक्षैः,। परितः सर्वतः, परिष्कृततलाम् अलङ्कृतमयो, शुचि शुद्धाम्, मनसः हृदयस्य, प्रसत्तिम् इव प्रसन्नताम् इव, स्थिताम्, गिरेः पर्वतस्य, इन्द्रकीलाऽभिधस्येति, तात्पर्यः। मूर्ध्नि शिखरे, वनान्तभुवं काननभूमिम्, आससाद प्राप्तवान्। उत्प्रेक्षालङ्कारः।

भावार्थः—अर्जुनः इन्द्रकीलगिरिमारुह्य पुष्पभारावनतशाखैर्वृक्षैः परितः भूषितस्वरूपां वनप्रान्तभुवं स्वच्छमनसः प्रसत्तिमिव प्राप।

समासः—पुष्पभरनम्रशिखैः—पुष्पाणां भरः (ष० तत्पु०)। नम्राः शिखाः येषां तं ( बहुव्रीहिः )। पुष्पभरेण नम्रशिखाः तैः ( तृ० तत्पु० )। परिष्कृततलाम्—परिष्कृतं तलं यस्याः सा ( बहुव्रीहिः )।

कोशः—'अधः स्वरूपयोरस्त्री तलम्' इत्यमरः। 'तलं स्वरूपेऽनूर्ध्वेऽस्त्री क्लीबं ज्याघातवारणे। कानने कार्यबीजे च पुंसि तालमहीरुहे। चपेटे च त्सरौ तन्त्रीघाते सव्येन पाणिना'। 'प्रसादोऽनुग्रहे काव्यप्राणस्वास्थ्यप्रसत्तिपु। 'अन्तोऽव्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके'। सर्वत्र मेदिनी।

व्याकरम्—अधिरुह्य—अधि + रुह + ल्यप्। परिष्कृततलाम्—परि + कृ + क्त + सुट् + टाप् + सु + अम्। अत्र 'सम्परिभ्यां करोतौ भूषणे' इमि सुट् आगमः। आससाद—आ + सद् + लिट् + तिप् + णल्।

पदार्थः—सः = उस ( अर्जुन ) ने। अधिरुह्य = ( पहाड़ पर ) चढ़कर। पुष्पभरनम्रशिखैः = फूलोंके भारसे झुकी शाखाओंवाले। तरुभिः = वृक्षोंसे। परितः = चारों ओर। परिष्कृततलां = अलंकृत है स्वरूप जिसका ऐसी। शुचिं =

स्वच्छ। मनसः = मनकी। प्रसक्तिम् इव = प्रसन्नताकी तरह। गिरेः = पहाड़के। मूर्ध्नि = शिखरपर। वनान्तभुवं = बनभूमिको। आससाद = प्राप्त किया।

हिन्दी—इन्द्रकील पर्वतपर चढ़कर फूलोंके भारसे झुकी शाखाओंवाले वृक्षोंसे चारों ओर घिरी हुई वनभूमिको स्वच्छ मनकी प्रसन्नताकी तरह अर्जुनने प्राप्त किया।

अनुसानु पुष्पितलतावितति: फलितोरुभूरुहविविक्तवनः।
धृतिमाततान तनयस्य हरेस्तपसेऽधिवस्तुमचलामचलः ॥१८॥

अन्वयः—अनुसानु पुष्पितलावितति: फलितोरुभूरुहविविक्तवनः अचलः हरेः तनयस्य तपसे अधिवस्तुम् अचलां धृतिम् आततान्।

व्याख्या—अनुसानु प्रतिप्रस्थं पुष्पितलतावितति: विकसितवल्लीविस्तरः, फलितोरुभूरुहविविक्तवनः समुत्पन्नफलपादपविजनाख्यम् अचलः शैलः परेः इन्द्रस्य तनयस्य सुतस्य, अर्जुनस्येत्यर्थः। तपसे तपस्यायै, अधिवस्तुं अधिकर्तां, अचलां निश्चलां, स्थिरामित्याऽऽशयः। धृति धैर्यम्, उत्साहशक्तिमिति भावः, आततान विस्तारयामास। प्रमिताक्षरावृत्तम्। अस्तांचलविशेषणपदार्थस्य धृतिकारणंहेतुत्वात् काव्यलिङ्गमलङ्कारः।

भावार्थः—प्रतिशिखरं कुसुमितलताविस्तरवान् फलयुग्विशालवृक्षोऽप्येकान्त-वनैर्युक्त इन्द्रकीलगिरिः इन्द्रसूनोरर्जुनस्य तपसेऽधिष्ठन्तुं स्थिरां मतिमकरोत्।

समासः—अनुसानु—सानून् प्रति (अव्ययीभावः)। पुष्पितलतावितति:—पुष्पिताः लतानां विततयः (ष० तत्पु०), पुष्पिताः लताविततयः यस्मिन् सः (बहुव्रीहिः)। फलितोरुभूरुहविविक्तवनः—फलिताः उरवः भूरुहाः येषु, तानि (बहुव्रीहिः) तादृशानि विविक्तानि वनानि यस्मिन् सः (बहुव्रीहिः)।

कोशः—'स्नुः प्रस्थः सानुरस्त्रियाम्'। 'वल्ली तु व्रततिर्लता'। 'वड्रोरु विपुलम्'। विविक्तौ पूतविजनौ'। 'गहनं काननं वनम्'। अद्रिगोत्रगिरिग्रावाऽचलशैलशिलोच्चयाः'। 'धृतिर्धारणधैर्य्ययोः'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—पुष्पिताः—पुष्प + इतच् + जस्। तपसे—तादर्थ्ये चतुर्थी। अधिवस्तुम्—अधि + वस् + तुमुन्। अत्र 'समानकर्तृकेषु तुमुन् इति तुमुन् प्रत्यय. । आतता—आ + तनु + लिट् + तिप।

पदार्थ—अनुसानु = प्रत्येक शिखरपर। पुष्पितलताविततिः = खिलीलताओंके फैलाववाला। (तथा) फलितोरुभूरुहविविक्तवनः = फले हुए विशाल वृक्षोंवाले एवं एकान्तमय हैं वन जिसमें ऐसा। अचलः = इन्द्रकील पर्वत। हरेः तनयस्य = इन्द्रपुत्र (अर्जुन) के। तपसे अधिवस्तुं = तपस्यार्थ वास करनेके लिये। अचलां = स्थिर। धृतिं = धैर्यको। आततान = फैलाता था।

हिन्दी—प्रत्येक शिखरपर फूली हुई लताओंके विस्तारवाला तथा फले हुए विशालवृक्षोंवाले होनेपर भी एकान्त वनोंवाला इन्द्रकील पर्वत, तपस्यार्थ वहाँ ठहरनेके लिए इन्द्रपुत्र अर्जुनकी बुद्धिको निश्चल कर देता था।

प्रणिधाय तत्र विधिनाऽथ धियं दधतः पुरातनमुनेर्मुनिताम्।
श्रममादधावसुकरं न तपः किमिवाऽवसादकरमात्मवताम् ॥१९॥

अन्वयः—अथ तत्र विधिना धियं प्रणिधाय मुनितां दधतः पुरातनमुनेः असुकरं तपः श्रमं न आदधौ, आत्मवताम् अवसादकरं किमिव।

व्याख्या—अथ तदनन्तरं, तत्र इन्द्रकीलपर्वते, विधिना योग विधानेन, धियं बुद्धिम्, प्रणिधाय नियम्य, मुनितां मुनित्वं, धारयतः, तपश्चरत इत्यर्थः। पुरातन-मुनेः प्राचीनमुनेः, अर्जुनस्य। बदरिकाश्रमे अर्जुनस्य तपश्चरणं सुप्रसिद्धम्। असुकरं दुष्करं। तपः नियमाऽनुष्ठानं, श्रमं कष्टं, न आदधौ नाऽभवत्। तथाहि—आत्मवताम् मनस्विनाम्, अवसादकरम् अशान्तिगतं, किमिव न किञ्चिदित्यर्थः।

भावार्थः—अथ तत्रेन्द्रकीले योगशास्त्राद्यनुसारेण चित्तवृत्तिं नियम्य मुनि-वत्तपश्चरतः पुराणमुनेस्तस्य दुष्करं तपः खेदजनकं न बभूव, यतोहि मनस्विनां खेदोत्पादकं किं भवति ?

समासः—पुरातनमुनेः—पुरातनः च असौ मुनिः, तस्य (कर्मधारयः)। असुकरम्—न सुकरम् (नञ्०)। अवसादकरम्—अवसाद करोतीति तत् (उपपद०)।

कोशः—'विधिर्विधाने दैवेऽपि'। इत्यमरः। 'विधिर्ना नियतौ काले विधाने परमेष्ठिनि'। इति मेदिनी। 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः'। 'तपः कृच्छ्रादि कर्म च'। उभयत्राऽप्यमरकोशः। 'तपो लोकाऽन्तरेऽपि च चान्द्रायाणादौ चने च' इति मेदिनी।

व्याकरणम्—प्रणिधाय–प्र + नि + धा + क्त्वा + ल्यप् । अत्र 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' । इति ल्यप् आदेशः । 'नेर्गदनद०' इत्यादिसूत्रेण णत्वञ्च । असुकरम्–असु + कृ + खल् + सु + अम् । अत्र 'ईषद्दुःसुषु कृच्छ्राऽकृच्छ्रार्थेषुखल्' । इति खल् प्रत्ययः । श्रमम्–श्रमु + घञ् + वृद्ध्यभावः । आत्मवतांम्-आत्मन् + मतुप् + आम् । अवसादकरम्—अवसादं करोति इति तद्धेतुः, अत्र कृञो हेतुताच्छील्यानुलोम्येषु' इति ट प्रत्ययः ।

हिन्दी—उस पर्वतपर विधिपूर्वक बुद्धिको संयत करके मुनियोंकी भाँति तपस्या करते हुए पुराने मुनि उस अर्जुनको वह कठिन तपस्या भी थकानेवाली नहीं हुई, क्योंकि मनस्वी व्यक्तियोंके लिए श्रमजनक होता ही क्या है ?

अभिप्राय—पुराणोंमें प्रसिद्ध है कि भगवान्‌के अंशावतार नर और नारायण जो कि चिरकालतक बदरी वनमें तपस्या करते थे वे ही, जन्मान्तरमें अर्जुन और कृष्ण रूपमें अवतीर्ण हुए । अर्जुन नर थे और कृष्ण नारायण । इसीलिए अर्जुनको पुरातन मुनि कहा है । अर्थात् जिसे पूर्व जन्मसे ही तपस्याका अभ्यास है उसे वह श्रमजनक कैसे लगेगी । यहाँ अर्थान्तरन्यास अलंकार है । मनस्वियोंको कौन सी वस्तु श्रमजनक हो सकती है ! अर्थात् कोई वस्तु नहीं ॥१९॥

शमयन् धृतेन्द्रियशमैकसुखः शुचिभिर्गुणैरघमयं स तमः ।
प्रतिवासरं सुकृतिभिर्ववृधे विमलः कलाभिरिव शीतरुचि ॥२०॥

अन्वयः—धृतेन्द्रियशमैकसुखः शुचिभिः गुणैः अघमयं तमः शमयन् विमलः सः प्रतिवासरं सुकृतिभिः शीतरुचिः इव ववृधे ।

व्याख्या—धृतेन्द्रियशमैकसुखः स्वीकृतविषयव्यावृत्तिमुख्याऽऽनन्दः, आत्मारामः-इति भावः । चन्द्रमसः पक्षे—स्वीकृतसन्तापनिवर्तनाऽऽह्लादः । शुचिभिः मैत्र्यादिभिः गुणैः, चन्द्रपक्षे—निर्मलत्वादिभिः कान्त्यादिभिः च गुणैः, अघमयं पापकल्यम्, अपरत्र—पापसदृशं, तमः अज्ञानम्, चन्द्रपक्षे—विमलः शुक्लः, सः अर्जुनः, प्रतिवासरं प्रतिदिनं, सुकृतिभिः सुकृतैस्तपोभिः; चन्द्रपक्षे कलाभिः अंशैः, शीतरुचिः इव चन्द्रमा इव, ववृधे वृद्धिङ्गतः । अत्रोपमाश्लेषयोरङ्गाङ्गिभावेन सङ्करः ।

भावार्थः—यथा चन्द्रः सन्तापनिवृत्तिरूपमद्वितीयमाह्लादकत्वं धारयन्, कान्त्यादिभिः गुणैः तमो निवारयंश्च प्रतिदिनं कलाभिरुपचीते, तथैवायमपि इन्द्रि-

यनिग्रहैकरूपं प्रधानमानन्दं धारयन् मैत्र्यादिगुणैरुपेतः, पापमयमज्ञानं निवर्तयन् प्रतिवासरं तपोरूपैः पुण्यैः वर्द्धतेस्म ।

समासः—धृतेन्द्रियशमैकसुखः-इन्द्रियाणां शमः ( ष० तत्पु० ) धृतम् इन्द्रिय-शमः एव एकं सुखं येन सः (बहुव्रीहिः) ।। विमलः—विगतं मलं यस्मात् सः (बहुव्रीहिः) । प्रतिवासरम्-वासरं वासरम् इति (अव्ययीभावः) । सुकृतिभिः-शोभनाः च ताः कृतयः ताभिः (गतिसमासः) । शीतरुचिः-शीता रुचिः यस्य सः (बहुव्रीहिः) ।

कोशः—'हृषीकं विषयेन्द्रियम्' । 'कलुषं वृजिनैनोघमंहो दुरितदुष्कृतम्' । 'ध्वान्ते गाढेऽन्धतमसं क्षीणेऽवतमसं तमः' । 'घस्रो दिनाह्नी वा तु क्लीबे दिवस-वासरौ' । सुकृती पुण्यवान् धन्यः' । सर्वत्राऽप्यमरकोशः । 'शुचिग्रीष्माग्निशृङ्गारे-ष्वाषढे शुद्धमन्त्रिणि । ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु' । इति मेदिनी ।

व्याकरणम्—अघमयम्—अघ + मयट् + सु + अम् । अत्र 'तत्प्रकृतवचने मयट्' इति स्वरूपाऽर्थे मयट्प्रत्ययः । ववृधे—वृधु + लिट् + त + एश् ।

पदार्थ—धृतेन्द्रियशमैकसुखः = ( धृत ) धारण किया है ( इन्द्रियशम = ) इन्द्रियों की विषयोंसे निवृत्ति रूप (एकसुखः = )मुख्य आनन्दको जिसने ऐसा । शुचिभिः = पवित्र । गुणैः = गुणों ( मैत्री, मुदिता, करुणा आदि योगशास्त्रोक्त संपदाओं ) से । अघमयं = पापरूप । तमः = अज्ञानको । शमयन् = नष्ट करता हुआ । विमलः = निष्पाप । सः = वह ( अर्जुन ) । प्रतिवासरं = प्रतिदिन । सुकृतिभिः = ( तपस्यारूप ) पुण्योंसे [ धृतेन्द्रियशमैकसुखः = ग्रहण किया है लोगों की इन्द्रियोंको शान्त ( आह्लादित ) करनारूप एक आनन्द जिससे ऐसा । शुचिभिः = स्वच्छ । गुणैः = कान्ति आदि गुणोंसे । अघमयं तमः = पापरूप अन्ध-कारको । ] शमयन् = नष्ट करता हुआ । विमलः = निर्मल । शीतरुचिः = चन्द्रमा । कलाभिः इव = कलाओंसे जैसे । ववृधे = बढ़ता था ।

हिन्दी—जैसे चन्द्रमा दूसरोंके संतापहरणरूप अद्भुत आह्लादकताको धारण करता हुआ, कान्ति आदि निर्मलगुणोंसे अन्धकारको हटाता हुआ, प्रतिदिन कला-ओंसे बढ़ता है । ऐसे ही यह अर्जुन भी विषयनिवृत्तिरूप प्रधान इन्द्रियसुखसे युक्त,

मैत्री आदि योगशास्त्रो के गुणों द्वारा पापरूप अज्ञानको हटाता हुआ निष्पाप होकर प्रतिदिन तपस्यारूप पुण्योंसे वृद्धिको प्राप्त हो रहा था।

अधरीचकार च विवेकगुणादगुणेषु तस्य धियमस्तवतः।
प्रतिघातिनीं विषयसङ्गरतिं निरुपल्लवः शमसुखाऽनुभवः ॥२१॥

अन्वयः—च विवेकगुणात् अगुणेषु धियम् अस्तवतः तस्य निरुपप्लवः शमसुखाऽनुभवः प्रतिघातिनीं विषयसङ्गरतिम् अधरीचकार।

व्याख्या—च किञ्च, विवेकगुणात् तत्त्वात्मगुणात्, अगुणेषु कामादिषु धियं चित्तं, अस्तवतः निवारितवतः, तस्य अर्जुनस्य, निरुपप्लवः, बाधारहितः शमसुखाऽनुभवः शमाऽऽनन्दाऽनुभवः, प्रतिघातिनीं घातकारिणीं विषयसङ्गरतिं विषयोपभोगेच्छाम्, अधरीचकार निवारितवान्।

भावार्थः—किञ्च विवेककारणात् कामादिदोषेषु चित्तवृत्तिं निवारितवतोऽर्जुनस्य निर्बाधशान्त्यानन्दानुभवः प्रतिबन्धयित्रीं शब्दाद्युपभोगरुचिं तिरस्कृतवान्।

समासः—विवेकगुणात्—विवेकः एव गुणः तस्मात् (रूपककर्म०)। अगुणेषु—न गुणाः अगुणाः, तेषु (नञ्०)। निरुपप्लवः—निर्गतः उपल्लवः यस्मात्, सः (बहुव्रीहिः)। शमसुखाऽनुभवः—शमस्य सुखं (ष० तत्पु०) यस्य अनुभवः (ष० तत्पु०)। विषयसङ्गरतिम्—विषयाणां सङ्गः (ष० तत्पु०) तस्मिन् रतिः ताम् (स० तत्पु०)।

कोशः—'विवेकः पृथगात्मता'। 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः'। उभयत्राऽप्यमरकोशः। 'उपप्लवः सैंहिकेये विप्लवोत्पातयोरपि'। इति विश्वः।

व्याकरम्—अस्तवतः—अस् + क्तवतु + ङस्। प्रतिघाति दीम्—प्रति + हन् + णिनि + ङीप् + अम्। अधरीचकार—अधर + कृ + च्वि + ईत्व + लिट् + णल्। अत्र 'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः'। इति च्वि प्रत्ययः। 'अस्य च्वौ'। इतीत्वम्।

पदार्थ—च = और। विवेकगुणान् = विवेक (वास्तविक तत्त्वका निर्धारण) रूप गुणसे। अगुणेषु = जो गुण नहीं हैं (अर्थात् कामक्रोधादि) उनसे। धियम् = वुद्धिको। अस्तवतः = निवृत्त करते हुए। तस्य = उस (अर्जुन) के। निरुपल्लवः = निर्विघ्न। शमसुखानुभवः = शान्तिरूप आनन्दके अनुभवसे। प्रतिघातिनी = विघ्न

करनेवाली। विषयसङ्गरतिं = विषयों (शब्दादिकों) के उपभोगकी इच्छाको। अवरीचकार = तिरस्कृत कर दिया।

हिन्दी—और विवेकके द्वारा कामादिदोषोंसे चित्तवृत्तिको निवृत्त करते हुए अर्जुनके निर्बाध शान्तिजन्य आनन्दानुभव ने तपस्यामें विघ्न करनेवाली शब्दादि-विषयोंके उपभोगकी रुचिको नष्ट कर दिया।

मनसा जपैः प्रणतिभिः प्रयतः समुपेयिवानधिपतिं स दिवः।
सहजेतरौ जयशमौ दधती बिभराम्बभूव युगपन्महसी ॥२२॥

अन्वयः—प्रयतः मनसा जपैः प्रणतिभिः दिवः अधिपतिं समुपेयिवान् सः सहजेतरौ जयशमौ दधती महसी युगपत् बिभराम्बभूव।

व्याख्या—प्रयतः, हिंसादिपापकर्मविरतः, मनसा चित्तेन, जपैः विशिष्टमन्त्राऽभ्यासैः, प्रणतिभिः मनोवाक्कायकर्मभिः प्रणामैः। दिवः नाकस्य, अधिपतिं स्वामिनम्, इन्द्रम्। समुपेयिवान् उपसेदिवान्, सः अर्जुनः सहजेतरौ सहाऽऽगन्तुकौ, दधती पुष्णती, महसी तेजसी, युगपत् सार्धम् एकस्मिन् काले इति भावः, बिभराम्बभूव दधार।

भावार्थः—पवित्रः सन् ध्यानजपप्रणत्यादिभिर्देवराजोपासना कुर्वन् सः स्वाभाविकं वीररसमागन्तुकं शान्तरसं च पुष्णती तेजसी युगपदेव बभार।

समासः—सहजेतरौ—सहजः च इतरः च तौ (द्वन्द्वः)। जयशमौ—जयः च शमः च (द्वन्द्वः)।

कोशः—'पवित्रः प्रयतः पूतः'। 'सुरलोको द्यौ दिवौ द्वे'। 'महस्तूत्सवतेजसोः'। 'युगपदेकदा'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—समुपेयिवान्—सम् = इण् = क्वसु। अत्र 'उपेयिवाननाश्वाननूचानश्च'। इति क्वसु प्रत्ययः। जयसमौ—जि धातोः 'एरच्' इति अच् प्रत्ययः। शमु धातोः घञ् प्रत्यये वृद्ध्यभावे रूपम्। बिभराम्बभूव—भृ + आम् + भू + लिट् + तिप् + णल्। 'भीह्रीभृहुवां श्लुवच्च'। इति आमः विकल्पपक्षे 'बभार' इति रूपम्।

पदार्थ—प्रयतः = पवित्र। मनसा = ध्यानसे। जपैः = (मंत्रोंके) जपसे। प्रणतिभिः = नमस्कारोंसे। दिवः अधिपतिं = स्वर्गके स्वामी (इन्द्र) की। समुपेयि-

वान् = उपासना करता हुआ। सः = वह ( अर्जुन )। सहजेतरौ = स्वाभाविक तथा उससे भिन्न ( अर्थात् आगन्तुक )। जयशमौ = वीर और शान्त रसोंको। दधती = धारण करते हुए। महसी = तेजोंको। युगपत् = एक साथ। बिभरांबभूव = धारण करता था।

हिन्दी—पवित्र होकर ध्यान जप नमस्कारादिसे देवराज इन्द्रकी उपासना करता हुआ अर्जुन स्वाभाविक वीररस और तात्कालिक शान्तरसको पुष्ट करते हुए प्रतापोंको एक साथ ही धारण करता था।

शिरसा हरिन्मणिनिभः स वहन् कृतजन्मनोऽभिषवणेन जटाः।
उपमां ययावरुणदीधितिभिः परिमृष्टमूर्धनि तमालतरौ ॥२२॥

अन्वयः—हरिन्मणिनिभः अभिषवणेन कृतजन्मनः जटाः शिरसा वहन् सः अरुणदीधितिभिः परिमृष्टमूर्धनि तमालतरौ उपमा ययौ।

व्याख्या—हरिन्मणिनिभः मरकतमणितुल्यः, अभिषवणेन पुण्यस्नानेन, कृत-जन्मनः जनिताः पिशङ्गीरिति भावः। जटाः सटाः, शिरसा मूर्धना, वहन् संधारयन्, सः अर्जुनः, अरुणदीधितिभिः अनूरुकिरणैः, परिमृष्टमूर्धनि संस्पृष्टशिरसि, तमालतरौ कालवृक्षे, उपमां सादृश्यं, ययौ प्राप्तवान्।

भावार्थः—मरकतसदृशः श्यामलवर्णः स्नानजन्याः पिङ्गलवर्णा जटाः शिरसा धारयन् स अरुणकिरणव्याप्तशिखः तमालतरुरिव दृश्यते स्म।

समासः—हरिन्मणिनिभः–हरित् च असौ मणिः (कर्मधारयः) तेन निभः। कृतजन्मनः–कृतं जन्म या सां ताः ( बहुव्रीहिः )। अरुणदीधितिभिः–अरुणस्य दीधितयः ताभिः ( ष० तत्पु० )। परिमृष्टमूर्धनि–परिमृष्टः मूर्धा यस्य, तस्मिन् ( बहुव्रीहिः )। तमालतरौ-तमालः च असौ तरुः, तस्मिन् ( कर्मधारय )।

कोशः—'सवनं त्वध्वरे स्नाने सोमनिर्दलनेऽपि च'। इति मेदिनी। 'व्रतिनस्तु जटाः सटाः'। 'उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्'। सूर्यसूतोऽरुणोऽ-नूरुः'। 'कालस्कन्धस्तमालः स्यात्, तापिच्छः'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—शिरसा–शिरस् + टा। वहन्–वह + शतृ। ययौ–या प्रापणे धातोः लिटि प्रथमपुरुषस्यैकवचने तिपि रूपम्।

पदार्थ—हरिन्मणिनिभः = मरकतमणि जैसा सांवला। अभिषवणेन = स्नानसे। कृतजन्मनः = उत्पन्न हुई। जटाः = जटाओंको। शिरसा वहन् = शिरसे धारण करता हुआ। सः = वह ( अर्जुन ) अरुणदीतिभिः = अरुण ( सूर्यके सारथि ) की किरणोंसे। परिमृष्टमूर्धनि = व्याप्त है शिर जिसका ऐसे। तमालतरौ = तमालवृक्षकी। उपमां = समानताकी। ययौ = प्राप्त होता था।

हिन्दी—मरकत मणि जैसा साँवला अर्जुन स्नान करनेसे उलझे हुए बालोंकी पीली जटाओंको धारण करता हुआ, अरुणकी पीली किरणोंसे पूर्ण चोटीवाले तमाल के वृक्ष जैसा दीखता था।

अभिप्राय—बालों में निरन्तर पानी पड़नेसे वे उलझ जाते हैं और उनमें जटाएँ बन जाती हैं। तपस्या में लगे रहनेके कारण अर्जुन बालोंका अन्य प्रसाधन करते नहीं। केवल त्रिकाल स्नानादि से उनकी जटाएँ हो गई हैं। साँवले तमालवृक्षोंकी चोटीपर प्रातः अरुणोदयकी पीली किरणें पड़नेसे जो शोभा होती है वही वही पीली जटाओंवाले साँवले अर्जुन की हो रही थी, वह तात्पर्य है। आर्थी उपमा अलङ्कार है ॥२३॥

धृतहेतिरप्यधृतजिह्ममतिश्चरितैर्मुनीनधरयञ्शुचिभिः ।
रजयाञ्चकार विरजाः स मृगान् कमिवेशते रमयितुं न गुणाः ॥२४॥

अन्वयः—धृतहेतिः अपि अधृतजिह्ममतिः शुचिभिः चरितैः मुनीन् अधरयन् विरजाः सः मृगान् रजयाञ्चकार, गुणाः कम् इव रमयितुं न ईशते।

व्याख्या—धृतहेतिः अपिधारीताऽऽयुधोऽपि, अधृतजिह्ममतिः अगृहीतवक्रप्रज्ञः, शुचिभिः पवित्रैः, चरितैः चरित्रैः, मुनीन् ऋषीन्, अधरयन् तिरस्कुर्वन्, विरजाः रजरहिताः अर्जुनः, मृगान् हरिणसमूहान्, रजयाञ्चकार प्रसादयामास, तथाहि—गुणाः दयाप्रभृतयः, कम् इव रमयितुं वशीकर्तुं, न ईशते न समर्थाः भवन्ति, अर्थात् सर्वान् वशमानयन्तीति भावः।

भावार्थः—धृतायुधोऽपि सरलमतिः, स्वकीयशुभाचरणैः मुनिभिरप्यधिकं वर्धमानः रागद्वेषादिरहितः सोऽर्जुनः वन्यान् पशूनतिशयेनानन्दितवान्। गुणाः क वशीकर्तुं न शक्नुवन्ति। अर्थाद्गुणैराकृष्टाः लोकाः मोदमासन्नन्ति।

समासः—धृतहेतिः–धृता हेतिः येन सः ( बहुव्रीहिः ) अधृतजिह्ममतिः–न धृता ( नञ्० ) जिह्मा च असौ मतिः ( कर्मधारयः ) अधृता जिह्ममतिः येन सः ( बहुव्रीहिः ) । विरजाः–विगतं रजः यस्मात्, सः ( बहुव्रीहिः ) ।

कोशः—'रवेरर्चिश्च शस्त्रं वह्निज्वाला च हेतयः' । 'अरालं वृजिनं जिह्ममूर्मिमत् कुञ्चितं नतम्' । इति मेदिनी ।

व्याकरणम्—वि + रजस् + सु । अत्र 'अत्वसन्तस्य चाधातोः' इति दीर्घः । रजयाञ्चकार–णिजन्ताद् रञ्जधातोः लिटि 'रञ्जेर्णौ मृगरमणे नलोपो वक्तव्यः' । रमयितुम्–रम + णिच् + तुमुन् । ईशते—ईश + लिट् + त + एत्व ।

पदार्थ—धृतहेतिः अपि = अस्त्रधारण करनेपर भी । अधृतजिह्ममतिः = ( जिसने ) कुटिल बुद्धिको नहीं धारण किया है, ऐसा । शुचिभिः = पवित्र । चरितैः = आचरणोंसे । मुनीन् मुनियोंको । अधरयन् = पीछे छोड़ता हुआ सा ( अर्थात् पवित्रतामें मुनियोंसे बढ़कर ) । विरजाः = रजोगुणसे रहित हुआ । सः = वह ( अर्जुन ) । मृगान् = मृगों ( वन्य पशुओं ) को । रजयाञ्चकार = आनन्दित करता था । गुणाः = गुण ( दयादाक्षिण्यादि ) । कम् इव = किसको जैसे । रमयितुं = वश करनेमें । न ईशते = समर्थ नहीं होते ।

हिन्दी—आयुधधारी होनेपर भी सरलप्रकृतिवाला, मुनियोंसे भी बढ़कर पवित्र आचरणवाला, रागद्वेषादिसे रहित वह अर्जुन वनपशुओंको मोड़ लेता था । वास्तवमें गुणोंसे कौन वशमें नहीं हो जाता है ।

अनुकूलपातिनमचण्डगतिं किरता सुगन्धिमभितः पवनम् ।
अवधीरिताऽऽर्तवगुणं सुखतां नयता रुचां निचयमंशुमतः ॥२५॥

अन्वयः—अनुकूलपातिनम् अचण्डगन्धि सुगन्धि पवनम् अभितः किरता अवधीरिताऽऽर्तवगुणम् अंशुमतः रुचां निचयं सुखतां नयता ( तपसा दयालुना इव सः परिचर्यया अनुजगृहे । इति २७ तमश्लोकेन सम्बन्धः ) ।

व्याख्या—अनुकूलपातिनं स्वानुकूलं, अचण्डगतिं मन्दगतिं, सुगन्धि सुगन्धवन्तं, पवनं वातम्, अभितः सर्वतः, किरता प्रवर्तयता, अवधीरिताऽऽर्तवगुणं तिरष्कृततर्तुगुणं, अंशुमतः दीप्तिकरस्य सूर्यस्य रुचां प्रभां, निचयं समूहं, सुखस्पर्शतां, नयता प्रापयता

(तपसा दयालुना इव सः परिचर्यया अनुजगृहे इत्यस्य २७ तमेन श्लोके न सम्बन्धः) उत्प्रेक्षालङ्कारः ।

भावार्थः—अनुगुणवाहिनं मन्दगामिनं सुगन्धयुतं च पवनमभितः प्रसारयत् ग्रीष्माद्यृतुगुणमनादृत्य भानुप्रतापमपि सुखस्पर्शतां नयत् तपः तं पर्यचरदिव प्रतीयते ।

समासः—अनुकूलपातिनम्—अनुकूलं यथा तथा पतति इति तच्छीलः तम् (उपपद०) अचण्डगतम्—च चण्डी (नञ्०) अचण्डी गतिः यस्य तम् (बहुव्रीहिः) सुगन्धिम्—शोभनः गन्धः यस्य सः सुगन्धिः तम् (बहुव्रीहिः) । अवधीरिताऽऽर्तव-गुणम्—आर्तवः च असौ गुणः (कर्मधारयः) अवधीरितः आर्तवगुणः यस्य तम् (बहुव्रीहिः) । अंशुमतः—प्रशस्ताः अंशवः यस्य सः तस्य (बहुव्रीहिः) ।

कोशः—'चण्डस्त्वत्यन्तकोपनः' । 'इष्टगन्धः सुगन्धिः स्यात्' । 'नभस्वद्वात-पवनपवमानप्रभञ्जनाः' । 'स्युः प्रभारुग्रुचिस्त्विड्भाः' । सर्वत्राऽप्यमरकोशः ।

व्याकरणम्—अनुकूलपातिनम्—अनु + कूल + पत + णिनि + अम् । सुगन्धिम्—सु + गन्ध + इ + अम् । अत्र 'गन्धस्येदुत्पूतिसुसुरभिभ्यः' । इति एकदेशग्रहणात् इ प्रत्ययः । आर्तवः—ऋतु + अण् + सु । अत्र 'ऋतोरण्' । इति अण् प्रत्ययः । अंशुमतः—अंशु + मतुप् + ङस् । सुखताम्—सुख + तल् + टाप् + अम् । नयता—नयतीति नयत् तेन्, नी + शतृ + टा ।

पदार्थ—अनुकूलपातिनं = अनुकूल बहते हुए । अचण्डगतिं = मन्दवेग वाले । सुगन्धि = सुन्दर गन्धवाले । पवनं = वायुको । अभितः = चारों ओर । किरता = फैलाते हुए । अवधीरितार्तवगुणं = तिरस्कृत कर दिया है ऋतुजन्य (ग्रीष्मके) गुणको जिसने ऐसा । अंशुमतः = सूर्यकी । रुचां निचयं = किरणोंके समूहको । सुखतां नयता = सुखकारिताको प्राप्त कराती हुई (तपस्या द्वारा परिचर्यासे उसपर अनुग्रह किया गया) ।

हिन्दी—अनुकूल और मन्द-मन्द बहते हुए, सुगन्धियुक्त वायुको सब ओर फैलाता हुआ, ग्रीष्म आदि ऋतुओंके गुणको न गिनता हुआसा सूर्यकिरणोंके प्रचण्ड तेजको सुखसे सहने योग्य बनाता हुआ तप स्वयं किसी दयालु को भाँति जैसे उस अर्जुनकी सेवा कर रहा था ।

नवपल्लवाऽञ्जलिभृतः प्रचये बृहतस्तरून् गमयताऽवनतिम् ।
स्तृणता तृणैः प्रतिनिशं मृदुभिः शयनीयतानुपयतीं वसुधाम् ॥२६॥

अन्वयः—प्रचये नवपल्लवाऽञ्जलिभृतः बृहतः तरून् अवनतिं गयमता प्रतिनिशं शयनीयताम् उपयतीं वसुधां मृदुभिः तृणैः स्तृणता ( तपसा दयालुना इव सः परिचर्यया अनुजगृहे ) ।

व्याख्या—प्रचये पुष्पावचनो, नवपल्लवाञ्जलिभृतः नूतनकिसलकरधारिणः, बृहतः, अत्युच्चानिति भावः । तरून् वृक्षात् अवनतिं नम्रतां, गमयता प्रपियता, प्रतिनिशं निशायां, शयनीयतां शयनयोग्यवताम्, उपयतीम् धारयन्ती, तादृशीं वसुधां पृथिवीं, मृदुभिः सुकोमलैः, तृणैः घासैः, स्तृणता आच्छादयता ( तपसा दयालुना इव सः परिचर्यया अनुजगृहे ) ।

भावार्थः—पुष्पावचयप्रसङ्गे नूतनकिसलयाञ्जलिधारिणः, उच्चान् तरून् नमयता निशायां शयनस्थानभूतां भूमि कोमलतृणैः आच्छादयच्च ( तपः परिचर्यया तमनुजग्रहे ) ।

समासः—नवपल्लवाऽञ्जलिधृतः—नवाः च ते पल्लवाः ( कर्मधारयः ) नवपल्लवा एव अञ्जलयः ( रूपककर्म० ) तान् बिभ्रतीति तान् । प्रतिनिशम्—निशायाम् इति ( अव्ययीभावः ) ।

कोशः—'पल्लवोऽस्त्री किसलयः' । 'वृक्षो महीरुहः शाखी विटपी पादपस्तरुः' । 'निशा निशीथिनीं रात्रिः' । 'वसुधोर्वी वसुन्धरा' । 'शष्पं बालतृणं घासः' । सर्वत्राऽप्यमरकोशः ।

व्याकरणम्—तरून्—अत्र णिजन्तस्य गम् धातोः योगे 'गतिबुद्धि०' । इत्यादिना कर्मसंज्ञा ततश्च द्वितीया । शयनीयताम्—शय्यतेऽत्र शयनीया, 'कृत्यल्युटो बहुलम्' इति अधिकरणे अनीयर् प्रत्ययः । अत्र भावे तल्प्रत्ययः । शयनीयता ताम् ।

पदार्थ—प्रचये = चुनते समय । नवपल्लवाञ्जलिभृतः = नये-नये किसलय रूप अञ्जलियोंको धारण करते हुए । बृहतः = बड़े ऊँचे । तरून् = वृक्षोंको । अवनतिं गमयता = झुका देते हुए । प्रतिनिशं = प्रत्येक रात्रिको । शयनीयतां = शय्याको । उपयतीं = प्राप्त होती हुई । वसुधां = पृथ्वीको । मृदुभिः तृणैः = कोमल घासोंसे । स्तृणता = ढकते हुए ( तपके द्वारा उसपर अनुग्रह किया जाता था ) ।

हिन्दी—फूल चुनते समय नये-नये किसलयोंको अञ्जलिमें दिए हुए जैसे ऊँचे-ऊँचे वृक्षोंको नीचे झुकाता हुआ, रात्रिमें सोनेकी भूमिको कोमल घाससे जैसे ढकता हुआ तप, मानो अर्जुनकी सेवा करता हुआ उसपर कृपा कर रहा था।

पतितैरपेतजलदान्नभसः पृषतैरपां शमयता च रजः।
स दयालुनेव परिगाढकृशः परिचर्ययाऽनुजगृहे तपसा ॥२७॥

अन्वयः—अपेतजलदात् नभसः पतितैः अपां पृषतैः रजः शमयता तपसा दयालुना इव परिगाढकृशः सः परिचर्यया अनुजगृहे।

व्याख्या—अपेतजलदात् निर्मेघात्, नभसः अधोगतैः, पतितैः अपां पृषतैः, जलबिन्दुभिः, रजः च धूलिं च, शमयता विलयता, तपसा दयालुना इव कृपालुना इव, परिगाढकृशः तपपूताचरेण कायदुर्थलः, सः अर्जुनः, परिचर्यया शुश्रूषया, अनुजगृहे अनुगृहीतः। इत्यम् अर्जुनस्य तपःफलाऽभिमुखत्वं प्रतीयते। प्रमिताक्षरा-वृत्तम्। अत्र श्लोमत्रयस्यैकसम्बन्धमा प्राधान्येन उत्प्रेक्षाऽलङ्कार एव।

भावार्थः—निर्मेघान्नभसो वृष्टेर्जलकणैः रजः शमयत् दयालुरिव तपोऽत्यन्त-दुर्बलं तं सेवयानुजग्राह।

समासः—अपेतजलदारत्-अपेताः जलदाः यस्मात्, तत् तस्मात् (बहुव्रीहिः)। परिगाढकृशः—परिगाढं यथा तथा कृशः (सुप्सुपासमासः)।

कोशः—'नभोऽन्तरिक्षं गगनम्'। 'पृषन्ति विन्दुपृषताः'। स्याद् दयालुः कारुणिकः कृपालुः'। 'वरिवस्या तु शुश्रूषा परिचर्य्याऽप्युपासना। सर्वत्राऽप्यमर-कोशः।

व्याकरणम्—दयालुना-दयते इति, अत्र 'स्पृहिगृहिपतिदयानिन्द्रातन्द्राश्रद्धाभ्यः आलुच्'। इति आलुच् प्रत्ययः। अनुजगृहे- अनु + ग्रह + कर्मणि लिट् + आत्मने-पदे प्रथमपुरुषस्यैकवचने रूपम्।

पदार्थ—अपेतजलदात् = मेघोंसे रहित। नभसः = आकाशसे। पतितैः = गिरे हुए। अपांपृषतैः = जलबिन्दुओंसे। रजः = धूलिको भी। शमयता = शान्त करते हुए। तपसा = तपके द्वारा। दयालुना इव = दयालु व्यक्तिकी तरह। परिगाढ-कृशः = अत्यन्त दुर्बल। सः = वह अर्जुन। परिचर्यया = सेवाद्वारा। अनुजगृहे = अनुगृहीत किया गया।

हिन्दी—विना बादलों के आकाशसे गिरी हुई पानीकी बूंदोंसे पृथ्वीकी धूलको शान्त करता हुआ तप, अत्यन्त कृश उस अर्जुनको, किसी दयालु पुरुषकी तरह सेवासे अनुगृहीत करता था।

अभिप्राय—तात्पर्य यह है कि यदि कभी धूल उठी तो बिना बादलोंके भी आकाशसे तपः प्रभावसे ही पानी बरष जाता था और धूल शान्त हो जाती थी इस प्रकार जैसे किसी दुर्बल व्यक्तिपर कोई दयालु पुरुष कृपा करता है ऐसे ही कठोर नियमोंसे अत्यन्त कृश हुए अर्जुनकी यह तपस्या सेवा कर रही है ॥२७॥

महते फलाय तदवेक्ष्य शिवं विकसन्निमित्तकुसुमं स पुरः।
न जगाम विस्मयवशं वशिना न निहन्ति धैर्यमनुभावगुणः ॥२८॥

अन्वयः—सः महते फलाय विकसत् शिवं तत् निमित्तकुसुमं पुरः अवेक्ष्य विस्मयवशं न जगाम, वशिनाम् अनुभावगुणः धैर्यं न निहन्ति।

व्याख्या—सःअर्जुनः, महते बृहते, फलाय सिद्धये विकसत् विकासमुद्गच्छत्, शिवं शिवकरं तत् पूर्वोक्तं, निमित्तकुसुमं कारणरूपपुष्पम्, पुरः पुरस्ताद्, अवेक्ष्य विलोक्य, अनुभूयेत्यर्थः, विस्मयवशम् आश्चर्यत्वं, न जगाम न गतः, विस्मितो नाभूदित्यर्थः। यतोहि-वशिनां ग्रह्यतां, अनुभावगुणः, प्रभावगुणः, धैर्यं धीरतां, न निहन्ति न विनाशयति। विस्मयादिविकारं न जनयतीत्यर्थः। प्रमिताक्षरावृत्तम्। अर्थान्तरन्यासाऽलङ्कारः।

भावार्थः—महते कल्याणाय सस्यसमृद्धये च विकासं गच्छत् पूर्वोक्तं निमित्तरूपं पुष्पं विलोक्य स विस्मितो नाभूत्, यतः जितेन्द्रियाणां प्रभावगुणः धैर्यं निहत्य विस्मयादिविकरं न जनयति।

समासः—निमित्तकुसुमम्—निमित्तम् एव कुसुमं तत् (रूपककर्म०)। अनुभावगुणः—अनुभावः एव गुणः (रूपककर्म०)। धैर्यम्—धीरस्य भावः कर्म वा तत्।

कोशः—'श्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्'। 'निमित्तं हेतुलक्ष्मणोः'। 'विस्मयोद्भुतमाश्चर्यं चित्रमप्यथ भैरवम्'। 'धृतिर्धारण धैर्ययोः। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—फलाय—'तादर्थ्ये चतुर्थी वाच्या' इति चतुर्थी। वशिनाम्—

वश + इनि + आम् । धैर्यम्—धीर + ष्यञ् + अम् । अत्र 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' । इति ष्यञ् प्रत्ययः ।

पदार्थ—सः = वह (अर्जुन)। महते फलाय = बड़ी फल समृद्धिके लिए । विकसत् = खिलते हुए । शिवं = सुखदायक । तत् = उस । निमित्तकुसुमं = निमित्त-रूप फूलोंको । पुरः = सामने । अवेक्ष्य = देखकर । विस्मयवशं न जगाम = आश्चर्यके अधीन नहीं हुआ । वशिनां = जितेन्द्रियोंका । अनुभावगुणः = प्रभाव रूप गुण । धैर्यं = धीरंताको । न निहन्ति = नष्ट नहीं करता ।

हिन्दी—अत्यन्त कल्याण और सम्पदा को देनेके लिए खिले हुए सुन्दर निमित्त रूप पुष्पोंको सामने देखकर अर्जुनको कोई आश्चर्य नहीं हुआ, क्योंकि जितेन्द्रियों का प्रभाव उनके धैर्यको नष्ट नहीं करता ।

अभिप्राय—चारों ओर खिले हुए फूल अर्जुन की इष्ट प्राप्तिकी सूचना दे रहे थे । क्योंकि फूलोंके बाद जैसे उनपर फल लगेंगे ऐसे ही इस कठिन तपस्या का अर्जुन को अवश्य फल मिलेगा । यह शगुन की कल्पना उन/फूलोंसे ही की जा सकती है । किन्तु अर्जुन को इससे कोई आश्चर्य नहीं होता था । क्योंकि जितेन्द्रिय व्यक्ति धैर्यवान् होते हैं, उन्हें किसी प्रकारके विस्मयादि विकार उत्पन्न ही नहीं होते । यदि विस्मयादि विकार उत्पन्न होंगे तो तपस्या नष्ट हो जायगी, अतः असमयमें भी इस पुष्प-समृद्धि से उसे आश्चर्य नहीं होता । यह अर्थान्तरन्यास अलङ्कार है ॥२८॥

तदभूरिवासरकृतं सुकृतैरुपलभ्य वैभवमनन्यभवम् ।
उपतस्थुरास्थितविषादधियः शतयज्वनो वनचरा वसतिम् ॥२९॥

अन्वयः—सुकृतैःअभूरिवासरकृतं तत् वैभवम् अनन्यभवम् उपलभ्य आस्थित-विषादधियः वनचरा शतयज्वनः वसतिम् उपतस्थुः ।

व्याख्या—सुकृतैः सुकर्मैः, तपोभिरित्यर्थः । अभूरिवासरकृतं स्वल्पदिवससाधितं, तत् पूर्वोक्तं, वैभवं सिद्धिम्, अनन्यभवम् नान्यजातं, उपलभ्य प्राप्य, आस्थितविषाद-धियः प्राप्तकष्टबुद्धयः, वनचराः अरण्यविहारिणः, शतयज्वनः शतक्रतोः, इन्द्रस्य, वसतिं वासस्थानम्, इन्द्रलोके उपतस्थुः प्रापुः ।

भावार्थः—तपःप्रभावादल्पैरेव तां प्रभावसम्पदं तपः कुर्वन्तं तं विना नान्यभवं निश्चित्य खिन्नधियो वनरक्षकाः संसूचनार्थमिन्द्रनगरं प्रापुः।

समासः—अभूरिवासरकृतम्—न भूरयः (नञ्०) अभूरयः च ते वासराः (कर्मधारयः) तैः कृतं तत् (तृ० तत्पु०)। अनन्यभवं—न अन्यभवं तत् (नञ्०)। आस्थितविषादधियः—आस्थितः विषादः यासु ताः (बहुव्रीहिः) तादृश्यः धियः येषां ते (बहुव्रीहिः)। शतयज्वनः-शतेन यज्वा तस्य (तृ० तत्पु०)।

कोशः—'घस्रो दिनाऽह्नी वा तु क्लीबे दिवसवासरौ'। हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि'। 'अटव्यरण्यं विपिनं गहनं काननं वनम्'। 'यज्वा तु विधिनेष्ठवान्'।

व्याकरणम्—अनन्यभावम्—न + अन्य + भू + अच् + सु + अम्। अत्र 'पचाद्यच्' इति अच् प्रत्ययः। वनचराः वन + चर + ट + जस्। अत्र 'चरेष्टः'। इति ट प्रत्ययः। शतयज्वनः—शत + यज् + वनिप् + ङस्।

पदार्थ—सुकृतैः = पुण्योंसे। अभूरिवासरकृतं = थोड़े ही दिनोंमें प्राप्त। तद्वैभवं = उस प्रभावसम्पदाको। अनन्यभवं = (अर्जुनके अतिरिक्त) किसी दूसरेसे न हुई। उपलभ्य = समझकर आस्थितविषादधियः = प्राप्त हुई है खेदबुद्धि जिनको ऐसे (अर्थात् खिन्न हुए)। वनचराः = (उस पर्वतपर नियुक्त) वनचर लोग। शतयज्वनः = इन्द्रको। वसतिं = नगरीको। उपतस्थुः = प्राप्त हुए।

हिन्दी—तपस्याद्वारा थोड़े ही दिनों में प्राप्त उस प्रभाव-सम्पत्तिको उस तपस्वीके बिना किसी दूसरेका प्रभाव न समझकर उस वनके रक्षक किरातादि इसकी सूचना देनेके लिए इन्द्रके पास गये ॥२९॥

विदिताः प्रविश्य विहिताऽऽनतयः शिथिलीकृतेऽधिकृतकृत्यविधौ।
अनपेतकालमभिरामकथाः कथयाम्बभूवुरिति गोत्रभिदे ॥३०॥

अन्वयः—विदिताः प्रविश्य विहिताऽऽनतयः अधिकृतकृत्यविधौ शिथिलीकृते अनपेतकालं गोत्रभिदे इति अभिरामकथाःबभूवुः।

व्याख्या—विदिताः परिचिताः, अतएवाऽनुमतप्रवेशाः सन्तः, प्रविश्य अन्तर्गतस्य, विहिताऽऽनतयः कृतनमस्काराः, अधिकृतकृत्यविधौ शैलसंरक्षणात्मकनियोगकर्माऽनुष्ठाने, शिथिलीकृते सति नमतिजाते सति, अनपेतकालम् अनतिक्रान्तसमयं,

गोत्रभिदे इन्द्राय, इति वक्ष्यमाणविधिना, अभिरामकथाः श्रवणयोग्याः प्रवन्धकल्पनाः, कथयाम्बभूवुः कथयामासुः ।

भावार्थः—सानुमतित्वं प्रविश्य कृतप्रणामा वनेचराः स्वाधिकारविषये शिथिलीकृते कालमनतिक्रम्येत्यर्थं श्रवणीयवाचमिन्द्राय शशंसुः ।

समासः—विहिताऽऽनतयः–विहिता आनतिः यैः ते ( वहुव्रीहिः ) । अधिकृतकृत्यविधौ–अधिकृतं च तत् कृत्यम् (कर्मधारयः) तस्य विधिः तस्मिन् (ष० तत्पु०) । अनपेतकालम्–न अपेतः ( नञ्० ) अनपेतः कालः यस्मि० कर्मणि तत् यथा ( वहुव्रीहिः ) । गोत्रभिदे–गोत्रान् भिनत्ति इति तस्मै ( उपपद० ) ।

कोशः—'गोत्रभिद् वज्री वासवो वृत्रहा वृषा' । 'प्रबन्धकल्पना कथा' सर्वत्राऽप्यमरकोशः ।

व्याकरणम्—विदिताः–विद् + क्त + जस् । विदितमस्ति येषां ते, अत्र 'अर्श आदिभ्योऽच्' इति अच् प्रत्ययः । शिथिलीकृते–शिथिल + च्वि + कृ + क्त + ङि । गोत्रभिदे–गोत्रभिद् + क्विप् + ङे । कथाः–कथ + अङ् + शस् । कथयाम्बभूवुः–कथ + णिच् + आम् + लिट् + झि + उस् ।

पदार्थ—विदिताः = जाने हुए ( अर्थात् जिनके आनेकी सूचना मिल चुकी है, ऐसे वनेचर ) । प्रविश्य = ( नगरमें ) प्रवेश करके । विहितानतयः = हाथ जोड़े हुए । अधिकृतकृत्यविधौ = स्वीकृत कार्यके विषयको । शिथिलीकृते = ढीला करनेपर । अनपेतकालं = समयका अतिक्रमण न करते हुए । गोत्रभिदे = इन्द्रसे । इति = इस प्रकार । अभिरामकथाः = सुन्दर वाणीको । कथयाम्बभूवुः = कहते थे ।

हिन्दी—अनुमतिपूर्वक इन्द्रके नगरमें प्रवेश करके नम्रतापूर्वक वे वनेचर वनरक्षारूप कार्यकी शिथिलताके विषयमें विलम्ब न करते हुए सुन्दर शब्दोंसे इन्द्रसे कहने लगे ।

अभिप्राय—इस श्लोकका भाव यह है—इन्द्रने इन वनेचरोंको इन्द्रकीलकी देख-रेखके लिए नियुक्त किया था । वहाँ एक व्यक्तिने आकर तपस्या प्रारम्भ कर दी और वह भी ऐसी कि जिसके तेज तथा प्रतापसे सभी प्राणी उसके वशीभूत हो गये । हो सकता है कि वह इन्द्रका शत्रु हो ? या इन्द्रासन छीननेके लिए तपस्या कर रहा हो ? इसकी सूचना आजतक इन लोगोंने इन्द्रको नहीं दी । यह

इन वनेचरोंको अपने कार्यमें शिथिलता हो गई। यहाँ तक तो जो विलम्ब हो गया वह तो हुआ किन्तु अब उसकी स्थिति जैसी उससे आगे वे समझते हैं कि एक क्षण भी इसमें विलम्ब न किया जाय। इसलिए अनपेतकालं कहा है। अर्थात् जिसमें अधिक समय न बीते। अभिरामकथाःका तात्पर्य है वे सुन्दर शब्दोंमें उस समाचारको सुना रहे हैं। यदि कठोर वाणीमें कहते तो संभव है इन्द्र रुष्ट होकर कुछ अनर्थ कर बैठते। इसीलिए नीतिका वचन है—"सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम्—" ॥३०॥

शुचिवल्कवीततनुरन्यतमस्तिमिरच्छिदामिव गिरौ भवतः।
महते जयाय मघवन्ननघः पुरुषस्तपस्यति तपञ्जगतीम् ॥३१॥

अन्वयः—मघवन्, शुचिवल्कवीततनुः तिमिरच्छिदाम् अन्यतमः इव अनघः पुरुषः भवतः गिरौ जगतीं तपन् महते जयाय तपस्यति।

व्याख्या—हे मघवन्! हे इन्द्र!; शुचिवल्कवीततनुः श्वेतवल्कलाऽऽवृतशरीरम् तिमिरच्छिदाम् तमनाशकानां, सूर्यादीनामित्यर्थः। अन्यतमः इव एकः इव, स्थितः। अनघः पापशून्यः, पुरुषः पुमान्, भवतः तव, गिरौ पर्वते इन्द्रकीलाऽभिधे। जगतीं लोकं, तपन्, प्रभावयन् महते बृहते, जयाय विजयार्थं, तपस्यति तपस्यां करोति।

भावार्थः—हे देवराज! शुभ्रवल्कलावृतशरीरः तेजस्विनामन्यतम इव कश्चित्पुण्यात्मा पुरुषः जगतीं प्रभावयन् भवतामिन्द्रकीले विजयार्थं तपश्चरति।

समासः—शुचिवल्कवीततनु–शुचि च तत् वल्कं (कर्मधारयः) वीता तनुः यस्य सः (बहुव्रीहिः)। शुचवल्केन वीततनुः (तृ॰ तत्पु॰)। तिमिरच्छिदाम्–तिमिरं छिन्दन्तीति तेषाम् (उपपद॰)। अनघः–अविद्यमानम् अघं यस्य सः (नञ्बहु॰)।

कोशः—'शुचि ग्रीष्माऽग्निश्रृङ्गारेष्वाषाढे शुद्धमन्त्रिणि। ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु'। इति मेदिनी। 'त्वक् स्त्री वल्कं वल्कलमस्त्रियाम्'। 'अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः'। 'कलुषं वृजिनैनोघम्'। 'त्रित्वथो जगती लोको विष्टपं भुवनं जगत्'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—तिमिरच्छिदाम्–तिमिर + छिद् + क्विप् + आम्। तपन्—

तप + शतृ । अत्राऽन्तर्भूतणिजर्थो तप धातुः । तपस्यति—तपस् + क्यङ् + लट + तिप् । अत्र कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' । इति क्यङ् प्रत्ययः ।

पदार्थ—मघवन् ! = हे देवराज ! शुचिवल्कवीततनुः = श्वेतवल्कलोंसे ढका है शरीर जिसका ऐसा । तिमिरच्छिदां = अन्धकारनाशकों (सूर्यादि) में । अन्यतम इव = कोई एक जैसा । अनघः पुरुषः = निष्पाप व्यक्ति । भवतः गिरौ = आपके पर्वत (इन्द्रकील) पर । जगतीं तपन् = संसारको प्रभावित करता हुआ । महते जयाय = अत्यन्त विजयके लिए । तपस्यति = तपस्या कर रहा है ।

हिन्दी—हे मघवन् ! सफेदवल्कलधारी, तेजस्वियोंमें अद्वितीय सा कोई पुण्यात्मा व्यक्ति विश्वको प्रभावित करता हुआ आपके इन्द्रकीलमें तपस्या कर रहा है ।

अभिप्राय—"महते जयाय" का सामान्यरूपसे यही अर्थ है "बहुत बड़ी सिद्धिको प्राप्त करनेके लिये ।" क्योंकि वनेचर यह नहीं जानते वह कौन है और किस उद्देश्यसे तपस्या कर रहा है ? अथवा यह कल्पना की जा सकती है कि धनुषधारी देखकर वे समझ गये हों यह निश्चित ही कोई जयाभिलाषी है । यदि मोक्ष या अन्य किसी कामनावाला होता तो धनुष लेकर तपस्या की क्या आवश्यकता थी ॥३१॥

स विभर्ति भीषणभुजङ्गभुजः पृथु विद्विषां भयविधायि धनुः ।
अमलेन तस्य धृतसच्चरिताश्चरितेन चाऽतिशयिता मुनयः ॥३२॥

अन्वयः—भीषणभुजङ्गभुजः सः विद्विषां भयविधायि पृथु धनुः बिभर्ति, अमलेन तस्य चरितेन धृतसच्चरिताः मुनयः अतिशायिताः ।

व्याख्या—भीषणभुजङ्गभुजः भयङ्करनागबाहुः, सः प्रसङ्गप्राप्तः अर्जुनः विद्विषां शत्रूणां, भयविधायि भीतिकारि, पृथु विशालं, धनुः कार्मुकं, बिभर्ति धारयति, अमलेन निष्कल्मषेन, तस्य अर्जुनस्य, चरितेन आचरणेन, धृतसच्चरिताः अङ्गीकृतसच्चरित्राः, मुनयः ऋषयः, अतिशयिताः अतिक्रान्ताः । उपमालङ्कारः ।

भावार्थः—भयङ्कराजगरवद्दीर्घभुजः स तपस्वी रिपूणां भयकारकं वृहद् धनुः धारयति, अतुलेन तस्याचरणेन साम्प्रतं सदाचारवतां मुनीनामपि चरितमतिक्रान्तम् ।

समासः—भीषणभुजङ्गभुजः—भीषणौ च तौ भुजङ्गौ (कर्मधारयः) । भीषणभुजङ्गौ इव भुजौ यस्य सः (बहुव्रीहिः) । भयविधायि—भयं विधत्ते इति, तत्

( उपपद० )। अमलेद—अविद्यमानं मलःयस्य तत्, तेन ( नञ्बहु० )। धृतसच्च-रिताः—सन्ति च तानि चरितानि ( कर्मधारयः )। धृतानि सच्चरितानि यैः ते ( बहुव्रीहिः )।

कोशः—'सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः'। 'विशङ्कटं पृथु बृहद् विशालं पृथुलं महत्'। धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—भीषणौ—भीषयेते इति। 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इति ल्यु प्रत्ययः। 'युवोरनाकौ'। इति अनादेशे रूपम्। भी + षुक् + ल्यु + अन। भयविधायि—भयं विधत्ते इति, तत्, ताच्छील्ये णिनिः, 'आतो युक् चिण्कृतोः'। इति युक् आगमः।

पदार्थ—भीषणभुजङ्गभुजः = भयंकर सर्प जैसी भुजाओंवाला। सः = वह। विद्विषां = शत्रुओंको। भयविधायि = डरानेवाले। पृथु = विशाल। धनुः = धनुषको। विभर्त्ति = धारण करता है। अमलेन = स्वच्छ। तस्य = उसके। चरितेन = वृत्तान्तने। धृतसच्चरिताः = चरित्रवान्। मुनयः = मुनियोंको। अतिशयिताः = अतिकान्त कर दिया है।

हिन्दी—भीषण अजगर जैसी लम्बी भुजाओंवाला वह शत्रुओं को दहलानेवाले विशाल धनुषको धारण किये रहता है। उसके पवित्र आचरणके सामने सदाचारी मुनियोंका आचरण फीका पड़ गया है।

मरुतः शिवा नवतृणा जगती विमलं नभो रजसि वृष्टिरपाम्।
गुणसम्पदाऽनुगुणतां गमितः कुरुतेऽस्य भक्तिमिव भूतगणः॥३३॥

अन्वयः—मरुतः शिवाः, जगती नवतृणा, नभः विमलं, रजसि अपां वृष्टिः, अस्य गुणसम्पदा अनुगुणतां गमितः भक्ति कुरुते इव।

व्याख्या—मरुतः पवनः, शिवा सुखकराः, जगती भूमिः, नवतृणा नूतनस्यं, नभः खे, विमलं निर्मलं, अतएव स्वच्छं, रजसि रजकणे, अपां, जलानां, वृष्टिः वर्षणं अस्य तपस्यतः पुरुषस्य, गुणसम्पदा दयादिसद्गुणसम्पत्या, अनुगुणतां गमितः वशीकृतः, भूतगणः पृथिव्यादिपञ्चकं, भक्तिम् उपासनां कुरुते इव विदधति इति मन्ये। उत्प्रेक्षालङ्कारः।

भावार्थः—तस्मिन् तपस्यति वायवः सुखदाः प्रवहन्ति, भूमिः कोमलैस्तृणैरा-

च्छन्ना, नभः स्वच्छं जातम्, यत्र क्वापि धूलिकणा उत्थितास्तत्रापांवृष्ट्या ते शाम्यन्ते, एवमस्य गुणाकृष्टः पृथिव्यादि पञ्चभूतगणः सेवक इवास्य भक्ति कुरुते ।

समासः—नवतृणा—नवानि तृणानि यस्यां सा ( बहुव्रीहिः ) । विमलम्—विगतं मलं यस्मात् तत् ( बहुव्रीहिः ) । गुणसम्पदा—गुणानां सम्पत्, तया ( ष० तत्पु० ) । भूतगणः—भूतानां गणः ( ष० तत्पु० ) ।

कोशः—'समीरमारुतमरुत्' । 'श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्' । 'जगती सागराम्बरा' । 'शष्पं बालतृणं घासः' । 'पांशुर्ना न द्वयोरजः' । 'आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्' । सर्वत्राऽप्यमरकोशः ।

व्याकरणम्—शिवाः—शिव + अच् + जस् । अत्र 'अर्श आदिभ्योऽच्' । इति अच् प्रत्ययः । गमितः—गम् + णिच् + क्त + सु ।

पदार्थ—मरुतः = वायु । शिवाः = सुखकारक ( वह रहे हैं ) । जगती = भूमि । नवतृणा = नयी घासवाली ( हो गयी है ) । नभः = आकाश । विमलं = ( है ) रजसि = धूलपर । अपांवृष्टिः = जल वरस जाता है । अस्य = इसकी । गुणसम्पदा = ( दयादाक्षिण्यादि ) गुणरूप सम्पत्तिसे । अनुकूलताको । गमितः = प्राप्त । भूतगणः = ( पृथिव्यादि पंचमहा— ) । भूतोंका समूह । भक्ति कुरुते इव = ( इसकी ) सेवा जैसी कर रहा है ।

हिन्दी—वायु सुखद बह रहा है, भूमि हरी-भरी हो गयी है, आकाश स्वच्छ है, जहाँ कहा धूल उठती है तो जल वरसकर वह दब जाती है, इस प्रकार इसकी गुणरूप सम्पत्तिके वशीभूत हुआ सा पृथिव्यादि पंचमहाभूतोंका समूह मानों इसकी सेवा कर रहा है ।

अभिप्राय—इस कथनसे वनचरोंके दो अभिप्राय निकलते हैं—एक तो सारा जगत् समूह उसके वशमें हो रहा है आपकी अवधारणा न करने लगे अतः आप सावधान हो जायँ । दूसरा यह कि किसी भी कार्यकी सिद्धिमें सुखद वायुका वहना, आकाशका स्वच्छ होना आदि जो लक्षण होते हैं वे सब उसके हो रहे हैं अतः उसकी तपः सिद्धि निश्चित है ॥३३॥

इतरेतराऽनभिभवेन मृगास्तमुपासते गुरुमिवाऽन्तसदः ।
विनमन्ति चाऽस्य तरवः प्रचये परवान् स तेन भवतेव नगः ॥३४॥

अन्वयः—मृगाः तम् अन्तसंदः गुरुम् इव इतरेतराऽनभिभवेन उपासते, प्रचये तरवः अस्य विनमन्ति, सः नगः भवता इव तेन परवान (वर्तते) ।

व्याख्या—मृगाः हरिणः तम् पुरुषं तपसि संलग्नमिति भावः, अन्तःसदः अन्तेवासिनः शिष्याः इत्यर्थः, गुरुम् इव आचार्यम् इव, इतरेतराऽनभिभवेन परस्परागरहितेन, उपासते उपासनां कर्माणि प्रचये पुष्पसंचये, तरवः वृक्षाः, अस्य तपस्विनः कृते, विनमन्ति स्वयं विनम्राः भवन्ति, करप्रचेया भवन्तीति भावः । किंवा प्रणमन्ति च, किमधिकम्—सः प्रसङ्गप्राप्तः, नगः इन्द्रकीलपर्वतः, भवता इव त्वया इव, तेन तपस्विना, परवान् पराधीनो वर्तते ।

भवार्थः—छात्राः यथा गुरुमुपासते तथैवान्योन्यमनभिभवन्तः वन्यः पशवः तमुपासते फलपुष्पाद्यवचयने वृक्षाः स्वयमेव तत्कृते करप्रचेया भवन्ति । एवं यथा स पर्वतः भवदधीनो वर्तते तथैव तस्याधीनः संजातः ।

समासः—इतरेतराऽनभिभवेन—न अभिभवः (नञ०) इतरेतरेषाम् अनभिभवः तेन (ष० तत्पु०) ।

कोशः—'मृगे कुरङ्गवातायुहरिणाज़िनयोनयः' । 'छात्राऽन्तेवासिनौ शिष्ये' । 'वृक्षो महीरुहः शाखी विटपी पादपस्तरुः' । 'शैलवृक्षौ नगावगौ' । इत्यमरकोशः ।

व्याकरणम्—अन्तःसदः-अन्ते सीदन्ति इति, अन्त + सद् + क्विप् + जस् । इतरेतराऽनभिभवेन—अत्र इतरशब्दस्य 'कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये' इति द्वित्वे, 'समासवच्च बहुलम्' इति समाससद्भावः । उपासते—उप + आस + लट् + त + एत्व । परवान्—पर + मतुप्—सु ।

पदार्थ—मृगाः = हरिण ( पशु ) । तम् = उस (तपस्वी) का । अन्तःसदः = अन्तेवासी (छात्र) गुरुम् इव = गुरुको जैसे । इतरेतरानभिभवेन = एक दूसरेसे द्रोह न करते हुए । उपासते = सेवित करते हैं । प्रचये = (फल या फूल) चुननेके समय पर । तरवः = वृक्ष, अस्य = इसके लिये । विनमन्ति = झुक आते हैं । स नगः = वह (इन्द्रकील) पर्वत । भवता इव = आपसे जैसे (पराधीन है ऐसे ही) । तेन = उस (तपस्वी) से । परवान् = परतन्त्र (हो गया) है ।

हिन्दी—एक दूसरेसे होड़ न करते हुए छात्र जैसे गुरुकी उपासना करते हैं ऐसे ही सभी अन्य पशु उसकी सेवा करते हैं । फूल आदि चुनते समय वृक्ष स्वयं

उसके लिए झुक जाते हैं। ( ताकि वह आसानीसे फल-फूल ले सके )। वह इन्द्र-कील जैसे आपके अधिकारोंमें था वैसे ही उसके अधिकार में हो गया है ॥३४॥

उरु सत्वमाह विपरिश्रमता परमं वपुः प्रथयतीव जयम्।
शमिनोऽपि तस्य नवसङ्गमने विभुताऽनुषङ्गि भयमेति जनः ॥३५॥

अन्वयः—विपरिश्रमता उरु सत्वम् आह, परमं वपुः जयं प्रथयति इव। शमिनः अपि तस्य नवसङ्गमने जनः विभुताऽनुषङ्गि भयम् एति।

व्याख्या—विपरिश्रमता अनायासेन, उरु महत्, सत्वम् अन्तःशक्तिमत्वम्, आह व्यनक्ति। परमं श्रेष्ठं, सर्वगुणसम्पन्नमिति भावः। वपुः देहं, जयं विजयं, प्रथयति इव विस्तारयति इव, शमिनः अपि शान्तस्य अपि, तस्य तपस्विनऽर्जुनस्य नवसङ्गमने अभिनवसमागमे, जनः पुरुषः, विभुताऽनुषङ्गि प्रभावव्यापकं, न तु हिंस्रकत्वाऽनुषङ्गीति भावः। भयम् भीतिम्, एति प्राप्नोति।

भावार्थः—आयासेऽप्यश्रान्तिस्तस्यान्तःसारत्वं कथयति, विशालं वपुरस्य जयितां प्रथयति, यद्यपि स शान्तस्तथापि तस्य प्रभावशालित्वात् प्रथमपरिचये जनस्तस्मात् बिभेतीव।

समासः—विपरिश्रमता—विगतः परिश्रमः यस्मात् सः ( बहुव्रीहिः ) विपरिश्रमस्य भावः, विपरिश्रमता। नवसङ्गमने—नवं च तत् सङ्गमनं तस्मिन् (कर्मधारयः)। विभुताऽनुषङ्गि—विभुतायाः अनुषङ्गि (ष० तत्पु०)।

कोशः—'विशङ्कट पृथु बृहद् विशालं पृथुलं महत्। वड्रोरुविपुलम्'। 'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः'। 'स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नराः'। 'भीतिर्भीः साध्वसं भयम्'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—विपरिश्रमता—वि + परिश्रम + तल् + टाप्। शमिनः—शमु + घिनुण् + ङस् + । अत्र 'शमित्यष्टाभ्यो घिनुण्' इति घिनुण् प्रत्ययः। विभुताऽनुषङ्गि—विभु + तल् + टा + विभुता। अनु + षञ्ज + इनि।

पदार्थः—विपरिश्रमता = (परिश्रम करनेपर भी) थकावट न होना। (इसके) उरु सत्वम् = अत्यन्त बलवत्ताको। आह = सूचित करती है। परमं वपुः = विशाल शरीर। जयं प्रथयति इव = विजयको बढ़ाता जैसा है। शमिनः अपि = शान्त भी। तस्य = उस ( अर्जुन ) के। नवसङ्गमने = प्रथम साक्षात्कारमें। जनः =

मनुष्य। विभुतानुषङ्गि = प्रभावशालितासे जन्य। भयम् = भयको। एति = प्राप्त होता है।

हिन्दी—श्रम करनेपर भी थकावट न प्रकट होना उसके भीतर की शक्तिमत्ता प्रकट करता है, विशाल आकृति उसकी विजयशीलता की द्योतक है। यद्यपि वह शान्त प्रकृतिका है फिर भी पहिले पहल उससे मिलनेवाले व्यक्ति को उसकी प्रभावशालिता से भय जैसा लगता है।

अभिप्रायः—भय दो प्रकारका होता है, एक तो क्रूरतामूलक दूसरा प्रभावमूलक। कुछ व्यक्तियोंकी आकृति क्रूर होती है उनके कार्य भी कठोर होते हैं उन्हें देखकर मनुष्यको हिंसामूलक भय होता है अर्थात् उन्हें देखकर वह समझता है कि कहीं यह मुझे मार न दें। जिनकी आकृति गम्भीर होती है चरित्र उदात्त होता है। उन्हें देखकर प्रत्येक प्राणी एक प्रकार से झेंप खा जाता है। अर्थात् हर व्यक्ति उनके प्रभावके आगे अपनेको तुच्छ-सा समझने लगता है। अर्जुन भी जितेन्द्रिय, शान्त, तेजस्वी और सदाचार परायण है अतः उसके प्रभावसे प्रत्येक व्यक्ति उसके सामने अवनत हो जाता है, यह अभिप्राय है ॥३५॥

ऋषिवंशजः स यदि दैत्यकुले यदि वाऽन्वये महति भूमिभृताम्।
चरतस्तपस्तव वनेषु सहा न वयं निरूपयितुमस्य गतिम् ॥३६॥

अन्वयः—सः ऋषिवंशजः, यदि वा दैत्यकुले, यदि (वा) महति भूभृताम् अन्वये, तव वनेषु तपः चरत अस्य गति निरूपयितुं वयं न सहाः।

व्याख्या—सः तपसि निरतो जनः ऋषिवंशजः मुनिकुलजातः यदि वा अथवा, दैत्यकुले दानववंशे, जातः इति पूर्वतोऽनुसृतः। यदि वा अथवा, महति विस्तृते, भूभृतां राज्ञाम् अन्वये वंशे, जातः इति। तव भवतः, वनेषु काननेषु, तपः नियमाऽनुष्ठानं, चरतः कुर्वतः, अस्य तपस्यतः, गतिं स्वरूपं, निरूपयितुं ज्ञातुं, वयं वनेचराः, न सहाः नो समर्थाः स्मः।

भावार्थः—सः तपस्वी कस्मिश्चिन्मुनेर्वंशे जातो वा, दैत्यवंशोत्पन्नो वा सुप्रसिद्धे राजकुले प्रादुर्भूतो वा। इन्द्रकीले तपश्चरतस्तस्य स्वरूपं निश्चेतुं वयं न समर्थाः।

समासः—ऋषिवंशजः—ऋषेः वंशः (ष० तत्पु०) तस्मात् जातः। दैत्य-

कुले—दैत्यस्य कुलं तस्मिन् ( ष० तत्पु० ) । भूमिभृताम्—भूमिं बिभ्रति इति तेषाम् ( उपपद० ) ।

कोशः—'दितिसुताः पूर्वदेवाः सुरद्विष' । 'सन्ततिर्गोत्रजननकुलान्यभिजनाऽन्वयौ वंशः' । 'अटव्यरण्यं विपिनं गहनं काननं वनम्' । सर्वत्राऽप्यमरकोशः ।

व्याकरणम्—ऋषिवंराजः—ऋषि + वंश + जन् + ड + सु । 'पञ्चम्याम जातौ' इति ड प्रत्ययः । दैत्यकुले—दितेः अपत्यं पुमान् दैत्यः, दिति + ण्य + कुल + ङि । 'दित्यदित्यादित्यपत्युत्तरपदाण्यः' इति ण्यः प्रत्ययः । भूमिभृताम्भूमि + भृ + क्विप् + तुक् + आम् । सहाः—सहन्ते, इति, सह + अच् + जस् । 'पचाद्यच्' इति अच् प्रत्ययः ।

पदार्थ—सः = वह । ऋषिवंराजः = मुनियोंके वंशमें उत्पन्न हुआ है । इति = यह । दैत्यकुले = दानवोंके कुलमें ( उत्पन्न हुआ है, यह ) यदि वा = अथवा । महति = बड़े । भूमिभृताम् = राजाओंके । अन्वये = वंशमें (उत्पन्न हैं) तव वनेषु = आपके वनोंमें । तपः चरतः = तपस्या करते हुए । अस्य = इसकी । गतिं = स्वरूप को । निरूपयितुं = निश्चित करनेमें । वयं = हम लोग । न सहाः = समर्थ नहीं हैं ।

हिन्दी—वह किसी ऋषिके वंशमें उत्पन्न हुआ है या दैत्यकुलमें, अथवा किसी सुप्रसिद्ध राजवंशमें ? इन्द्रकीलपर तपस्या करते हुऐ उस व्यक्तिके स्वरूपका निरूपण हम नही कर सकते ॥३६॥

विगणय्य कारणमनेकगुणं निजयाऽथवा कथितमल्पतया ।
असदप्यदः सहितुमर्हसि नः क्व वनेचराः क्व निपुणा यतयः ॥३७॥

अन्वयः—अनेकगुणं कारणं विगणय्य अथवा निजया अल्पतया वा कथितं नः अदः असत् अपि सहितुम् अर्हसि, वनेचराः क्व ? निपुणाः यतयः क्व ? ।

व्याख्या—अनेकगुणं विविधफलम्, कारणं तपोरूपं हेतुं, विगणय्य समधिगम्य विचार्येत्यर्थः, अथवा किमुत, निजया स्वकीयम्, अल्पतया वा अज्ञानतया वा, कथितम् उक्तं, नः अस्माकम्, अदः इदं वचनम्, असत् अपि अनुपयुक्तमपि सहितुं सोढुम्, अर्हसि योग्यः असि, वनेचराः वनवासिनः, क्व कुत्र, निपुणाः कुशलाः, यतयः यतिनः क्व । प्रमिताक्षरावृत्तम् । अत्रार्थाऽन्तरन्यासाऽलङ्कारः । क्व शब्दप्रयोगाद् विषमाऽलङ्कारम् ।

भावार्थः—बहुफलं तपोरूपं हेतुं विचार्य स्वकीयाल्पज्ञतया वास्माभिः कथितं यद्यसदपि स्याच्चेत्तद्भवता सोढव्यम् । क्व वयं वनचारिणो मूढाः क्व च नागरिकाणां निपुणाः बुद्धयः ।

समासः—अनेकगुणाम्—न एके (नञ्०) अनेके गुणाः यस्मिन् तत् (बहुव्रीहिः) । असत्—न सत् (नञ्०) । वनेचराः—वने चरन्तीति ते (अलुक्०) ।

कोशः—'हेतुर्ना कारणं बीजं निदानं त्वादिकारणम्' । 'स्तोकाल्पक्षुद्रकाः' । 'ये निर्जितेन्द्रिणग्रामा यतिनो यतयश्च ते' । सर्वत्राऽप्यमरकोशः ।

व्याकरणम्—अल्पतया—अल्पस्य भावः अल्पता तया, अल्प + तल् + टाप् + टा । सहितुम्—सह + तुमुन् + इट् । अत्र 'समानकर्तृकेषु तुमुन्' इति तुमुन् प्रत्ययः । 'तीषसहलुभरुषरिषः' इति इट् आगमः । वनेचराः— + ट, अत्र 'चरेष्ट' इति ट—प्रत्ययः । यतयः—यती + क्तिन् + जस् ।

पदार्थः—अनेकगुणं = अनेक फलोंवाले । कारणं = ( तपस्यारूप ) हेतुको । विगणय्य = विचारकर । अथवा । निजया = अपनी । अल्पतया = न्यूनतासे । कथित = कहे हुए । नः = हमारे । अदः = इस कथनको । असद् अपि = हितकारक न होनेपर भी । सहितुम् अर्हसि = सहने योग्य हो । ( क्योंकि ) क्व वनेचरः: = कहाँ हम जंगली जीव । ( और ) क्व निपुणा मतयः = कहाँ विवेकपूर्ण बुद्धियाँ ।

हिन्दी—तपस्या बहुतसे कार्योंकी सिद्धिके लिये की जा सकती है यह सोचकर, अथवा हम लोग अल्पज्ञ हैं अधिक सोच नहीं सकते, यह जानकर हमारे कथनमें जो त्रुटि हो उसे क्षमा करें, क्योंकि कहाँ हम जंगली प्राणी और कहाँ यह कुशल-बुद्धिवालोंके कार्य ।

अधिगम्य गुह्यकगणादिति तन्मनसः प्रियं प्रियसुतस्य तपः ।
निजुगोप हर्षमुदितं मघवा नयवर्त्मगाः प्रभवतां हि धियः ॥३८॥

अन्वयः—मघवा इति गुह्यकगणात् तत् मनसः प्रियम् प्रियसुतस्य तपः अधिगम्य उदितं हर्षं निजुगोप, हि प्रभवतां धियः नयवर्त्मगाः ।

व्याख्या—मघवा देवेन्द्रः, इति पूर्वोक्तं गुह्यकगणात् यक्षसमूहात् तत् मनसः तद्-हृदयस्य, प्रियम् अभीप्सितं, प्रियसुतस्य प्रियपुत्रस्य, अर्जुनस्येत्यर्थः । तपः नियमाऽनुष्ठानम्, अधिगम्य विदित्वा, उदितम् उत्पन्नं, हर्षं प्रसन्नतां, निजुगोप

गोपायामास, हि यतः, प्रभवतां स्वामिनां, धियः बुद्धयः, नयवर्त्मगाः नीतिमार्गाऽनुसारिण्यः भवन्तीति शेषः । अर्थान्तरन्यासाऽलङ्कारः ।

भावार्थः—इन्द्रः, एवं यक्षवृन्दोक्तं चित्ताह्लादकारकं प्रियतनयस्यार्जुनस्य तपश्चरणं ज्ञात्वा, तज्जन्यमानन्दं मनस्येव गोपयामास, यतोहि समर्थानां स्वामिनां धियः नीतिमार्गमेवानुसरन्ति ।

समासः—गुह्यकगणात्—गुह्यकानां गणः तस्मात् ( ष० तत्पु० ) । तन्मनसः—तस्य + मनः + तस्य (ष० तत्पु०) । प्रियसुतस्य—प्रियः च असौ सुतः (कर्मधारयः) नयवर्त्मगाः—नयस्य वर्त्म तत् गच्छन्तीति ताः ( ष० तत्पु० ) ।

कोशः—'इन्द्रो मरुत्वान् मघवा' । 'यक्षराड् गुह्यकेश्वरः' । 'स्वान्तं हृन्मानसं मनः' । 'अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्' । 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः' । अयनं वर्त्म । सर्वत्राऽप्यमरकोशः ।

व्याकरणम्—अधिगम्य—अधि + गम् + ल्यप् । अत्र गोपनक्रियायाः समानकर्तृकत्वात् क्त्वा प्रत्ययस्य निर्देशः । निजुगोप नि + गुप् + लिट् + तिप् + णल् । प्रभवताम्—प्र + भू + शतृ + आम् । नयवर्त्मगाः—नयवर्त्मन् + गम् + ड + जस् ।

पदार्थ—मघवा = इन्द्रने । इति = इस प्रकार । गुह्यकगणात् = रक्षकोंसे तत् = उस । मनसः प्रियं = मनको अच्छे लगनेवाले । प्रियसुतस्य तपः = प्रिय पुत्र ( अर्जुन ) के तपश्चरण को । अधिगम्य = जानकर । उदितं = (मनमें) उत्पन्न । हर्षं = प्रसन्नताको । निजुगोप = छिपा लिया । हि = क्योंकि । प्रभवतां = स्वामियोंकी । धियः = बुद्धियाँ । नयवर्त्मगाः = नीतिमार्गका अनुसरण करनेवाली होती हैं ।

हिन्दी—इन्द्रने इस प्रकार यक्षोंके कथनसे, मनोमोहक, अपने प्रियपुत्र अर्जुनकी तपस्या सम्बन्धी समाचारसे उत्पन्न हर्षको मनहीमें छिपा लिया । क्योंकि राजाओंकी बुद्धियाँ नीति मार्गका ही अनुसरण करती हैं ।

अभिप्राय—एक तो अर्जुन इन्द्र का पुत्र है और दूसरे इन्द्रकी आराधना कर रहा है, इन दोनों बातोंको इन्द्र जानते थे । इसीलिये रक्षकों द्वारा उसकी तपस्याके उत्कर्षको सुनकर उन्हें प्रसन्नता हुई । किन्तु फिर भी उन्होंने उस प्रसन्नता को उन रक्षकोंपर प्रकट नहीं होने दिया, क्योंकि अधिकारी व्यक्ति नीतिसे काम लेते

हैं। यदि अर्जुनके प्रति इन्द्र स्नेह प्रकट कर देंगे तो रक्षकोंका भी उसके प्रति भाव बदल जायगा, जिससे उनके कर्तव्यमें भी च्युति होगी और अर्जुनकी तपस्यामें भी ॥३८॥

प्रणिधाय चित्तमथ भक्ततया विदितेऽप्यपूर्व इव तत्र हरिः।
उपलब्धुमस्य नियमस्थिरतां सुरसुन्दरीरिति वचोऽभिदधे ॥३९॥

अन्वयः—अथ हरिः चित्तं प्रणिधाय तत्र भक्ततया विदिते अपि अपूर्वे इव अस्य नियमस्थिरताम् उपलब्धुं सुरसुन्दरीः इति वचः अभिदधे।

व्याख्याः—अथ अनन्तरं, हरिः देवराड् इन्द्रः, चित्तं चेत् प्रणिधाय एकाग्रीकृत्य विषयाऽन्तरपरिहारपूर्वकमात्मन्यवस्थाप्येत्यर्थः। तत्र तस्मिन्, अर्जुने, भक्ततया सेवया विदिते अपि परिज्ञाते अपि, अपूर्वे इव अज्ञाते इव, अस्य अर्जुनस्य, नियमस्थिरतां तपसः दृढताम्, उपलब्धुं सम्प्राप्तुं, परीक्षितुमित्यर्थः, किं वा लोकप्रतीत्यर्थमिति भावः। सुरसुन्दरीः स्वर्वेश्याः, इति वक्ष्यमाणप्रकारं, वचः वाक्यम्, अभिदधे उक्तवान्।

भावार्थः—तदा इन्द्रः चित्तं स्थिरीकृत्य तमर्जुनं स्वभक्तं जानन्नपि अपरिचितस्येव तस्य तपोदार्ढ्यं परीक्षितुमप्सरस एवं जगाद।

समासः—अपूर्वे—न पूर्वः अपूर्वः तस्मिन् (नञ्०)। नियमस्थिरताम्—नियमे स्थिरता ताम् (स० तत्पु०) सुरसुन्दरीः—सुराणां सुन्दर्यः ताः (ष० तत्पु०)।

कोशः—'चित्तं तु चेतो हृदयम्'। 'अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः'। व्याहार उक्तिर्लपितं भाषितं वचनं वचः'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—तत्र—तद् + त्रल्। अत्र 'सप्तम्यास्त्रल्' इति त्रल् प्रत्ययः। भक्ततया—भक्त + तल् + टाप् + टा। अत्र—'इत्थम्भूतलक्षणे' इति तृतीया विभक्तिः। अपूर्वे—अत्र 'पूर्वादिभ्यो नवभ्यो वा' इति स्मिन्नभावपक्षे रूपम्। नियमस्थिरताम्—नियमस्थिर + तल् + टाप् + आम्। उपलब्धुम्—उप + लभ + तुमुन्।

पदार्थ—अथ = इसके बाद। हरिः = इन्द्र। चित्तं प्रणिधाय = मनको स्थिर करके। तत्र = अर्जुनके विषयमें। भक्ततया = भक्त होनेको। विदिते अपि = ज्ञात होनेपर भी। अपूर्वे इव = नवीन जैसे। अस्य = इस (अर्जुन) के। नियमस्थिरतां =

तपस्याकी दृढ़ताको। उपलब्धुं = जाननेके लिये ( अर्थात्-अर्जुनकी परीक्षा लेनेके लिये )। सुरसुन्दरीः = अप्सराओंसे। इतिवचः = ऐसे वचन। अभिदधे = बोले।

हिन्दी—तब इन्द्रने चित्तको एकाग्र करके उस अर्जुनको अपना भक्त जानते हुए भी अपरिचित व्यक्तिकी भाँति उसकी तपस्यामें दृढ़ताकी परीक्षा लेनेके लिये अप्सराओंसे इस प्रकार कहा।

अभिप्राय—'चित्तं प्रणिधाय' का अर्थ है योग द्वारा। अर्थात् ध्यान लगाकर इन्द्रने यह जान लिया कि अर्जुन मुझे ही प्रसन्न करनेके लिये तप कर रहा है। फिर भी उसने अर्जुनके दृढ़ निश्चय की परीक्षा लेनी चाही और अप्सराओंको उसके तपमें विघ्न करनेके लिये भेजनेकी इच्छासे उनसे कहा, यह तात्पर्य है ॥३९॥

सुकुमारमेकमणु मर्मभिदामति दूरगं युतममोघतया।
अविपक्षमस्त्रमपरं कतमद्विजाय यूयमिव चित्तभुवः ॥४०॥

अन्वयः—मर्मभिदाम् अस्त्रम् अपरं कतमत् यूयम् इव सुकुमारम् एकम् अणु अतिदूरगम् अमोघतया युतं तथा अविपक्षं चित्तभुवः विजयाय।

व्याख्या—मर्मभिदाम् मर्मच्छेदिनाम्, मारयन्तीति मर्माणि—सप्तोत्तरशत-सङ्ख्यकान्यपि तानि पञ्चात्मकानि भवन्ति—'मांसमर्माणि, सिरामर्माणि, स्नायुमर्माणि, अस्थिमर्माणि, सन्धिमर्माणि च इति' सुश्रुत। अस्त्रम् आयुधम्, अपरम् अन्यत्, कतमत् किं यूयम् इव भवत्यः इव, अप्सरसः इवेति भावः। सुकुमारं सुकोमलं, न तु कठिनम्, अन्यत्तु कठिनं भवति, तथा एकम् एकलं स बहु, अणु सूक्ष्मं, न तु स्थूलम्, अलक्ष्यलक्ष्यप्रवेशित्वादिति भावः, यत्तु लक्ष्यलक्ष्यप्रवेशि तत्तु समीपक्ष्यभेदि भवति। तथा अतिदूरगं दूरलक्ष्यभेदि, एकञ्च अमोघतया अन्वर्थ-गुणत्वेन, युतं युक्तं, न कदाचिदपि व्यर्थतां यातीति भावः। अन्यत्तु कदाचित् लक्ष्या-दपराध्यत्यपि। तथा अविपक्षं प्रतीकारशून्यम्, अन्यत्तु चिकित्स्यमपि भवति। चित्त-भुवः मनसिजस्य, कामस्येत्यर्थः। विजयाय जयाय पूर्वोक्तगुणगणजुष्टम् अस्त्रम् अस्तीति शेषः। प्रमिताक्षरावृत्तम्। श्लोकेऽस्मिन्नुपमाऽलङ्कारः। साभिप्रायविशेषणत्वात् परिकराऽलङ्कारः। उभयोरङ्गाङ्गिभावसङ्करः।

भावार्थः—हे अप्सरसः! मर्मच्छेदिनां जयाय कामस्य पार्श्वे भवतीभिः सदृशं

कोमलम् अद्वितीयं सूक्ष्मं दूरलक्ष्यभेदि सफलं निःसपत्नं न किमस्त्यन्यदस्त्रम्? (नास्ति किमपीत्यर्थः।)

समासः—अतिदूरगम्—अत्यन्तं दूरम्, 'कुगतिप्रादयः', इति समस्यते अतिदूरं गच्छतीति तत्। अमोघतया—न मोघम् (नञ्०) अमोघस्य भावः तत्तथा तया। अविपक्षम्—अविद्यमानः विपक्षः यस्य तत् (बहुव्रीहिः)। विजयाय—विशिष्टः जयः तस्मै, 'कुगतिप्रादयः' इति समस्यते।

कोशः—'स्त्रियां मात्रा त्रुटिः पुंसि लवलेशकणाऽणवः'। 'कामः पञ्चशरः स्मृतः। शम्बरारिर्मनसिजः कुसुमेषुरनन्यजः'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—मर्मभिदाम्—मर्मन् + भिद् + क्विप् + आम्। अत्र 'यतश्च निर्धारणम्' इति षष्ठी। कतमत्—किम् + अदड्। अत्र 'अद्ड्डतरादिभ्यः पञ्चभ्यः' इति अदड् प्रत्ययः। अतिदूरगम्—अतिदूर + गम् + ड + सु + गम्। अमोघतया—अमोघ + तल् + टाप् + टा। चित्तभुवः—चित्त + भू + क्विप् + ङस्।

पदार्थः—मर्मभिदाम् = मर्मस्थलपर आघात करनेवाले (अस्त्रोंमें)। अपरं = दूसरा। कतमत् = कौनसा। यूयम् इव = तुम जैसा। सुकुमारः = अत्यन्त कोमल। एकम् = अद्वितीय, अणु = सूक्ष्म। अतिदूरगम् = अत्यन्त दूर तक पहुँचने वाला। अमोघतया = कठोरता (सफलता) से। युतम् = युक्त। अविपक्षं = जिसका विरोध करनेवाला कोई नहीं, ऐसा। अस्त्रम् = अस्त्र। चित्तभुवः = कालदेवके। विजयाय = विजयके लिए (है)।

हिन्दी—मर्मस्थलको भेदनेवाला दूसरा कौनसा तुम जैसा कोमल, अद्वितीय, सूक्ष्म; दूरके लक्ष्यको भेद करनेवाला, अचूक निशानेवाला, निश्चित विजयवाला होनेसे निःसपत्न ऐसा अस्त्र है जिससे कामदेव सबको जीत लेता है?

अभिप्राय—इस पद्यका तात्पर्य यह है कि संसारमें मर्मस्थलको भेदन करनेवाले जितने भी अस्त्र हैं वे सब कठोर (ठोस) होते हैं, तभी शरीरको छेदकर अन्तस्तल तक पहुँच पाते हैं। वे अनेक प्रकारके होते हैं। स्थूल और समीपवर्ती लक्ष्यको ही बाँधनेवाले होते हैं। उनकी सफलता निश्चित नहीं रहती; कभी विफल भी हो जाते हैं। उनको दूसरे अस्त्रों द्वारा नष्ट भी किया जा सकता है। किन्तु कामदेवको विजयी बनानेवाला स्त्री-रूप अस्त्र ऐसा है जो मर्मभेदी होनेपर भी

अत्यन्त सुकुमार, अकेला, सूक्ष्म, दूरके भी लक्ष्यको भेदन करनेवाला, निश्चित रूपसे सफल होनेवाला है और उसे नष्ट करनेवाला भी दूसरा अस्त्र नहीं है। इसी स्त्रीरूप एक अस्त्रके बलपर काम जगद्विजयी कहलाता है। इसमें स्त्रीकी उपमा अस्त्रसे दी गयीं है। प्रत्येक विशेषण कुछ विशेष अभिप्राय से कहा गया है अतः परिकर अलङ्कार भी है। दोनोंका अङ्गाङ्गीभाव सङ्कर है ॥४०॥

भववीतये हतबृहत्तमसामवबोधवारि रजसः शमनम्।
परिपीयमाणमिव वोऽसकलैरवसादमेति नयनाञ्जलिभिः ॥४१॥

अन्वयः—भववीतये हतवृहत्तमसां रजसः शमनम् अवबोधवारि वः असकलैः नयनाञ्जलिभिः परिपीयमाणम् इव अवसादम् एति।

व्याख्या—भववीतये संसारनिवृत्तये, हतवृहत्तमसां अपगतमज्ञानं, योगिनां रजसः रजोगुणस्य धूलेः वा, शयनं निवर्तकन्, अवबोधवारि तत्वज्ञानजलं, वः युष्माकम्, असकलैः असमग्रैः, अपूर्णैरित्यर्थः। नयनाञ्जलिभिः संयुतनेत्रप्रसृतिभिः, परिपीयमाणम् इव आचम्यमाणमिव, अवसादं क्षयम्, एति प्राप्नोति। मुक्तानपि स्नेहपाशे बध्नन्तीनां वः कथम् असामर्थ्यचर्चा स्वीकार्येति भावः। प्रमिताक्षरावृत्तम्। रजः, इत्यत्र श्लिष्टरूपकाऽलङ्कारः। परिपीयमाणमिवेत्यत्रोत्प्रेक्षाऽलङ्कारः। अवबोधवारि तथा नयनाञ्जलिभिरित्यत्र समेषां रूपकाऽलङ्कारः। समेषां योगात् सङ्करः।

भावार्थः—संसारनिवृत्तये अज्ञानान्धकारविनाशकानां योगिनां रजः शमनम् तत्त्वज्ञानरूपं वारि युष्माकं सम्पूर्णनेत्राञ्जलिभिः पीयमानमिव क्षयमेति।

समासः—भववीतये—भवस्य वीतिः तस्यै (ष० तत्पु०)। हतबृहत्तमसान्—हतं वृहत् तमः तेषां ते, तेषाम् (बहुव्रीहिः)। अववोधवारि—अवबोध एव वारि (रूपककर्म०)। असकलैः—न सकलाः तैः (नञ्०)। नयनाञ्जलिभिः—नयनानि एव अञ्जलयः तैः (रूपककर्म०)।

कोशः—'वीतिरश्वेऽशने गतौ। प्रजने धावने दीप्तौ' इति हैमः। 'रजः क्लीबे गुणाऽन्तरे। आर्तवे च परागे च रेणुमात्रेऽपि दृश्यते' इति मेदिनी। 'सयनं नेत्रमक्षिणी'। 'तौ युतावञ्जलिः पुमान्'। उभयत्राऽप्यमरकोशः।

व्याकरणम्—शमनम्—शमु + ल्युट्। परिपीयमाणम्—परि + पा + णिच् + शानच् + सु + अम्। एति—इण् + लट् + तिप्।

पदार्थ—भववीतये = संसार (जन्ममरणकी) निवृत्तिके लिए। हतवृहत्तमसां = नष्ट कर दिया है महानतम (अज्ञान रूप अन्धकारको) जिन्होंने (ऐसे योगियोंका)। रजसः = रजोगुणका (धूलिका जैसे)। शमनं = शान्त करनेवाला। अवबोधवारि = ज्ञानरूप जल। वः = तुम्हारी। नयनाञ्जलिभिः = नेत्र रूप अञ्जलियोंसे। परिपीयमाणम् इव = पिया जाता हुआ सा। अवसादम् = नाशको। एति = प्राप्त हो जाता है।

हिन्दी—संसारकी निवृत्तिके लिए जिन्होंने महामोहको नष्ट कर दिया ऐसे योगियोंका तत्त्वज्ञानरूप जल तुम्हारी संपूर्ण नेत्ररूप अञ्जलियोंसे पिया जाता हुआ सा क्षयको प्राप्त हो जाता है।

बहुधा गतां जगति भूतसृजा कमनीयतां समभिहृत्य पुरा।
उपपादिता विदधता भवतीः सुरसद्मयानसुमुखी जनता ॥४२॥

अन्वयः—पुरा जगति बहुधा गतां कमनीयतां समभिहृत्य भवतीः विदधता भूतसृजा सुरसद्मयानसुमुखी उपपादिता।

व्याख्या—पुरा प्राचीनकाले, जगति संसारे, बहुधा बहुप्रकारैः, गतां प्राप्तां, नानामुखेन विप्रकीर्णामित्यर्थः। कमनीयतां लावण्यभावं, समभिहृत्य एकीकृत्य भवतीः युष्मान् सुरसुन्दरीः इति भावः, विदधता रचयता, सृजतेत्यर्थः, भूतसृजा प्रजापतिना, ब्रह्मणेत्याशयः जनता जनसमूहः, सुरसद्मयानसुमुखी देवलोकयात्रोद्यता, उपपादिता विहिता। अत्रा सम्बन्धे सम्बन्धप्रतिपादनेनाऽतिशयोक्त्यलङ्कारः।

भावार्थः—पुरा जगति यत्र तत्र विकीर्णं रमणीयतामेकीकृत्य भवतीः सृजता विधात्रा जनसमूहः स्वर्गायोन्मुखः कृतः।

समासः—सुरसद्मयानसुमुखी—सुराणां सद्म (ष० तत्पु०) तस्मिन् यानम् (स० तत्पु०) तस्मिन् सुमुखी (स० तत्पु०)। भूतसृजा—भूतानि सृजतीति तेन (उपपदतत्पु०)।

कोशः—'स्यात् प्रबन्धे चिरातीते निकटागामिके पुरा'। त्रिष्वथो जगतीलोको विष्टपं भुवनं जगत्। 'स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड्विधिः'। सर्वत्राऽप्यमरकोशः।

व्याकरणम्—बहुधा—अत्र 'सङ्ख्याया विधार्थे धा'। इति धा प्रत्ययः।

बहु + घा । कमनीयताम्—कमु + अनीयर + तल् + टाप् + अम् । भवतीः अत्र 'भातेर्डवतु' । इति डवतु प्रत्ययः । 'उगितश्च' । इति ङीप् । भा + डवतु + ङीप् + शस् । विदधता—वि + धा + शतृ + टा । भूतसृजा—भूत + सृज + क्विप् + टा । जनता—अत्र ग्रामजनबन्धुभ्यस्तल् । इति तल् प्रत्ययः । जन + तल् टाप् ।

पदार्थ—पुरा = पहिले । जगति = संसारमें । बहुधा गतां = बिखरी हुई । कमनीयतां = सुन्दरताको । समभिहृत्य = एकत्र करके । भवतीः = आपलोगोंको । विदधता = बनाते हुए । भूतसृजा = प्राणियोंके उत्पादक ( ब्रह्मा ) ने जनता = जनसमूहको । सुरसद्मयानसुमुखी = स्वर्ग जानेको उन्मुख ( प्रवृत्त ) । उपपादिता = किया ।

हिन्दी—पहिले संसारमें जहाँ तहाँ बिखरी हुई सुन्दरताको एकत्र करके आप लोगोंको उत्पन्न करते हुए विधाताने प्राणियोंको स्वर्गकी ओर उन्मुख कर दिया ।

अभिप्राय—अर्थात् संसारमें जितनी भी सुन्दरता बिखरी पड़ी थी उस सबको इकट्ठा करके मानो ब्रह्मा ने अप्सराओंका निर्माण किया है । यही कारण है कि मनुष्य मरकर स्वर्ग जाना चाहते हैं क्योंकि वहाँ अप्सरायें मिलेंगी । अर्थात् अप्सराओंके कारण ही प्राणियोंकी प्रवृत्ति स्वर्गकी ओर होने लगी ॥४२॥

तदुपेत्य विघ्नयत तस्य तपः कृतिभिः कलासु सहिताः सचिवैः ।
हृतवीतरागमनसां ननु वः सुखसङ्गिनं प्रति सुखाऽवजितिः ॥४३॥

अन्वयः—तत् कलासु कृतिभिः सचिवैः सहिताः उपेत्य तस्य तपः विघ्नयत । ननु हृतवीतरागमनसां वः सुखसङ्गिनं प्रति अवजितिः सुखा ।

व्याख्या—तत् तस्मात् कारणात्, युष्माकं सर्वथा समर्थत्वादिति भावः । कलासुगीतवाद्यप्रभृतिविषयेषु, कृतिभिः कुशलैः, सचिवैः सहायैः, गन्धर्वैरित्यर्थः । सहिताः संयुताः सत्यः, उपेत्य सन्निकृष्टं प्राप्य, तस्य तपसि तत्परस्य पुंसः, तपः नियमानुष्ठानं विघ्नयत विघ्नवत् कुरुत, न त्वाऽत्राऽसामर्थ्यशङ्काऽऽतङ्कः कार्यः । अत एवोच्यते—ननु इति सम्बोधने, हृतवीतरागमनसाम् आकृष्टनिर्लोभ हृदयवतां, वः युष्माकं, सुखसङ्गिनं प्रति ऐश्वर्यच्छुकम्प्रति, अवजितिः विजयः सुखासुखसाध्या

न तु दुष्करा । अनेनाऽयं सिद्ध्यति यत् सुखार्थी न मुमुक्षुरिति अर्थान्तरन्यासाऽलङ्कारः ।

भावार्थः—नानाविलासचेष्टाकुशलैः सहायकैः सह तमुपेत्य भवतीभिस्तस्य तपोभङ्गः कार्यः । विरक्तानामपि मुनीनां चित्तं भवती भिरपहृतं स तु न विरक्तः केवलं सुखार्थी तपस्यति, तज्जये न शङ्कनीयम् ।

समासः—हृतवीतरागमनसाम्—वीतः रागः येषां ते वीतरागाः ( बहुव्रीहिः ) तेषां मनांसि ( स० तत्पु० ) हृतानि वीतरागमनांसि याभिः तासाम् ( बहुव्रीहिः ) । सुखसङ्गिनम्—सुखे सङ्गः ( स० तत्पुः ) सः अस्य अस्ति इति, तम् ।

कोशः—'वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि' । 'मन्त्री सहायः सचिवौ' । स्वान्तं हृन्मानसं मनः' सर्वत्राऽप्यमरकोशः । 'वीतिरश्वेऽशने गतौ' इति हैमः ।

व्याकरणम्—कृतिभिः—कृत + इनि + भिस् । अत्र 'इष्टादिभ्यश्च' । इति इनि प्रत्ययः । विघ्नयत–विघ्न + मतुप् = विघ्नवत् + णिच् + लोट् + थ । अत्र 'तत्करोति तदाचष्टे' । इति णिच् प्रत्ययः, इष्टवद्भावात् मतुप् प्रत्ययस्य लोपः । सुखसङ्गिनम्—सुख + सङ्ग + इनि + अम् । अत्र प्रतियोगे द्वितीया । अवजितिः– अव + जि + क्तिन् + सु ।

पदार्थ—तत् = इसलिए । कलासु = कलाओंमें । कृतिभिः = कुशल । सचिवैः = सहायकोंके । सहिताः = सहित । उपेत्य = जाकर । तस्य = उस ( तपस्वीके ) । तपः = तपको । विघ्नयत—ननु = क्योंकि । हृतवीतरागमनसां = हर लिया है वीतराग ( = निःस्पृहः ) योगियोंके मनको जिन्होंने, ऐसी । वः = तुम्हारे लिये । सुखसङ्गिनं प्रति = सुख चाहने वालेके प्रति । अवजितिः = विजय । सुखा = सुखसाध्य ( आसान ) है ।

हिन्दी—नाना प्रकारकी क्रीड़ाओंमें निपुण सहायकोंके साथ जाकर उसकी तपस्याको भंग करो । बड़े-बड़े विरक्त योगियोंके चित्तको हरनेवाली तुम लोगोंके लिए सुखकी इच्छासे तप करते हुए उसको जीतना आसान है ।

अभिप्राय—कलाओंसे तात्पर्य काम-क्रीड़ामें सहायक ६४ कलाओंसे हो सकता है । जो व्यक्ति संसारसे विरक्त और रागद्वेष रहित होकर तपस्या करता है उसका लक्ष्य केवल तपस्या ही रहता है । अतः उसके चित्तको डिगाना कठिन है ।

जिस व्यक्तिका लक्ष्य तो सांसारिक सिद्धि है और तपस्या केवल उस सिद्धिका साधन मात्र है, उसके चित्तसे रागद्वेषादि तो जाते नहीं, अतः उसे डिगाना आसान है। यहाँ इन्द्रका यही अभिप्राय है कि बड़े-बड़े निःस्पृह योगियोंका तुम तपोभङ्ग कर चुकी हो यह तो लौकिक सिद्धिके लिए तप कर रहा है इसे जीतना तुम्हारे लिये आसान है। यह शङ्का न करना कि संसार जिसके तपसे प्रभावित हो चुका है उसे हम लोग कैसे वशमें कर सकेंगी ॥४३॥

अविमृष्यमेतदभिलष्यति स द्विषतां वधेन विषयाऽभिरतिम्।
भववीतये न हि तथा स विधिः क्व शरासनं क्व च विमुक्तिपथः ॥४४॥

अन्वयः—सः द्विषतां वधेन विषयाऽभिरतिम् अभिलष्यति एतत् अविमृष्यम्। हि सः विधिः भववीतये न, शराऽसनं च ? विमुक्तिपथः च क्व ?

व्याख्या—सः तपस्यन् पुरुषः द्विषतां रिपूणां, बधेन विनाशेन विषयाऽभिरतिं शब्दाऽऽदिविषयाऽऽसक्तिम्, अभिलष्यति कामयते, एतत् विषयाऽऽसक्तत्वम्, अविमृश्यम् अविचारणीयम्, असन्दिग्धव्यमिति भावः। हि यस्मात् कारणात्, सः पूर्वोक्तः, विधिः तपसोऽनुष्ठानप्रकारः, भववीतये संसारमुक्त्यै, न नो भवतीति शेषः, कस्मादिति प्रश्ने उत्तरयति–शराऽऽसनं धनुः, क्व कुत्र ?, विमुक्तिपथः चं मोक्षमार्गः च, क्व कुत्र ? अत्र धनुर्धारणं मोक्षमार्गाऽवलम्वञ्चेतिद्वयं परस्परं सर्वथा विरुद्धमिति क्व शब्दो सूचयतः। अर्थान्तर न्यासालङ्कारः।

भावार्थः—स जनः शत्रुन्निहत्यैश्वर्यमेव भोक्तुमिच्छतीति नात्र सन्देहलेशः यतो हि शस्त्रमादाय तपश्चरणं मोक्षार्थिभिर्न क्रियते, क्व धनुः क्व च मुक्तेः पन्थाः।

समासः—विषयाऽभिरतिं–विषयेषु अभिरतिः ताम् (स० तत्पु०)। विमुक्तिपथः–विमुक्तेः पन्थाः (ष० तत्पु०)।

कोशः—'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः'। 'सरणिः पद्धतिः पद्या वर्त्मन्येकपदीति च। अतिपन्थाः सुपन्था च'। उभयत्राप्यऽमरकोशः। वीतिरश्वेऽशने गतौ।' इति हमः।

व्याकरणम्—द्विषताम्–द्विष + शतृ + आम्। अभिलष्यति–अभि + लष + श्यन् + तिप्। अत्र 'वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः'। इति वैकल्पिकः श्यन् प्रत्ययः। अविमृष्यम्–न + वि + मृष + क्यप् + सु + अम्। अत्र श्यन्

'ऋदुपधाच्चाऽक्लृपि ऋतेः' । इति क्यप् प्रत्ययः । विधिः—वि + धा + कि + सु । शरासनम्—शर + असु + ल्युट् × सु + अम् ।

पदार्थ—सः = वह । द्विषतां = शत्रुओंके । वधेन = वध द्वारा । विषयाभिरति = इन्द्रियोंके सुखको । अभिलष्यति = चाहता है । एतद् = यह । अविमृष्यम् = अविचारणीय [ असन्दिग्ध—निश्चय ] है । हि = क्योंकि । स विधिः—वह नियम । भववीतये = संसारकी निवृत्ति [ मोक्ष ] के लिए । न = नहीं है । शरासनं क = धनुष कहाँ ? विमुक्तिपथः च = और मोक्षका मार्ग, क्व = कहाँ ।

हिन्दी—हे अप्सराओ ! वह व्यक्ति शत्रुओंको जीतकर सुखका उपभोग करना चाहता है इसमें कोई सन्देह नहीं, क्योंकि मोक्षकी इच्छावाले शस्त्र लेकर तपस्या नहीं करते, कहाँ हिंसाका प्रतीक शस्त्र और कहाँ अहिंसाका प्रतिपादक मोक्ष मार्ग ।

अभिप्राय—शस्त्र हिंसाका ही प्रतीक है, क्योंकि शस्त्रका उपयोग हिंसाके लिए ही होता है । आत्मरक्षाके लिए भी यदि उसका उपयोग किया जाय तब भी हिंसाकी सम्भावना रहती है, अतः शस्त्रधारी व्यक्ति कभी रागद्वेषसे मुक्त नहीं हो सकता । मोक्षको इच्छासे तपस्या करनेवाला राग द्वेषादिको जीतकर जब तक चित्तको वशमें नहीं कर लेता तब उसकी मोक्षमें प्रवृत्ति नहीं हो सकती । अतःशस्त्र धारण और मुक्तिके लिए तपश्चरण, ये दोनों विपरीत मार्ग हैं । यह तात्पर्य है ॥४४॥

पृथुधाम्नि तत्र परिबोधि च मा भवतीभिरन्यमुनिवद् विकृतिः ।
स्वयशांसि विक्रमवतामवतां न वधूष्वघानि विमृशन्ति धियः ॥४५॥

अन्वयः—पृथुधाम्नि तत्र अन्यमुनिवत् विकृतिः च भवतीभिः मा परिबोधि, स्वयशांसि अवतां विक्रमवतां धियः वधूषु अघानि न विमृषन्ति ।

व्याख्या—पृथुधाम्नि महातेजसि, तत्र तस्मिन् पुरुषसम्बन्धे, अन्यमुनिवत् अन्यस्मिन् ऋषिवत्, साधारणमुनिवदित्यर्थः । विकृतिः च क्रोधादिविकारः च, भवतीभिः युष्माभिः, सुन्दरीभिरित्यर्थः, मा परिबोधि मा विज्ञायि, मा शङ्क्योति बोध्यम् । तथा हि—स्वयशांसि आत्मनः कीर्तीः, अवतां रक्षतां, यशोधनानामित्यर्थः । विक्रमवतां पराक्रमशालिनां, धियः मतयः, चित्तानि, वधूषु स्त्रीणां विषयेषु, अघानि व्यसनानि, न विमृषन्ति न भावयन्ति । यतो हि स्त्रीजनवधः सर्वथा अवकीर्तिकरः

व्यसनानि, न विमृषन्ति न भावयन्ति। यतो हि स्त्रीजनवधः सर्वथा अपकीर्तिकरः भवति, अतः युष्माभिः मनागपि न धेतव्यम्। अर्थान्तरन्यासाऽलङ्कारः।

भावार्थः—महातेजसि तस्मिन् तापसे मुन्यन्तरवत् भवतीभिः कोपविकारस्य शापादेः शङ्कर न कार्या, यतो हि स्वयशांसि रक्षन्तः नारीषु हिंसाबुद्धिः न कुर्वन्ति।

समासः—पृथुधाम्नि—पृथु धाम यस्य सः, तस्मिन् (बहुव्रीहिः)। अन्यमुनिवत्—अन्यः च असौ मुनिः (कर्मधारयः) तस्मिन् इव। स्वयशांसि—स्वस्य यशांसि, तानि (ष० तत्पु०)। विक्रमवताम्—विक्रमः अस्ति येषां ते, तेषाम् (बहुव्रीहिः)।

कोशः—'विशङ्कटं पृथु वृहद् विशालं विपुलं महत्'। 'यशः कीर्तिः समज्ञा च'। उभयत्राप्यमरकोशः। 'दुःखैनोव्यसनेष्वघम्'। इति वैजयन्ती।

व्याकरणम्—अन्यमुनिवत्—अत्र 'तत्र तस्यैव'। इति वतिप्रत्ययः। तत्र—इत्यत्र वैषयिकी सप्तमी। मा परिबोधि—मा + परि + बुध + लुङ्। अत्र आशीर्वादाऽर्थे लुङ्लकारः। 'न माङ्योगे'। इति अडागमनिषेधः। अवताम्—अव + शतृ + आम्। विक्रमवताम्—विक्रम + मतुप् + आम्। वधुषु—वैषयकी सप्तमी।

पदार्थ—पृथुधाम्नि = अत्यन्त तेजस्वी। तत्र = उस मुनिके विषयमें। अन्यमुनिवत् = अन्य मुनियोंकी तरह। विकृतिं च = विकारको भी। भवतीभिः = आप लोग। मापरिबोधि = न समझे। स्वयशांसि = अपनी कीर्तिको। अवतां = रक्षा करते हुए। विक्रमवतां = पराक्रमशालियोंकी। धियः = वधूषु = स्त्रियोंके विषयमें। अघानि = पापोंको। न विमृषन्ति = नहीं सोच सकती।

हिन्दी—महातेजस्वी उस मुनिके विषयमें आप लोग अन्य मुनियोंकी भाँति 'क्रोधमें आकर शाप दे देगा?' ऐसी शङ्का न करें, क्योंकि अपने यशकी रक्षा करनेवाले पराक्रमी व्यक्ति स्त्रियोंके विषयमें हिंसा बुद्धि नहीं रखते।

अभिप्राय—हिन्दू संस्कृतिमें स्त्री-जाति शक्तिरूप मानी गई है—"विद्याः समस्तास्तवदेवि भेदाः स्त्रियः समस्ताः सकला जगत्सु—" (मार्कण्डेय पुराण) इसलिए स्त्री जातिको सर्वदा अवध्य माना गया है और उसकी रक्षा एवं समाजका विशेष विधान है (मनु० अ० ९)। इसके विपरीत जो स्त्रियोंको कष्ट या दण्ड देता है उसे अत्यन्त पाप या अपयश भागी कहा है। अतः कोई भी मनस्वी और यशःकामनतावाला व्यक्ति कभी स्त्रियोंके विषयमें अनिष्ट कामना नहीं करेगा ॥४५॥

आशंसिताऽपचितिचारु पुरःसुराणा-
मादेशमित्यभिमुखं समवाप्य भर्तुः ।
लेभे परां द्युतिममर्त्यवधूसमूहः
सम्भावना ह्यधिकृतस्य तनोति तेजः ॥४६॥

अन्वयः—अमर्त्यवधूसमूहः सुराणां पुरः आशंसिताऽपचितिचारु अभिमुखं भर्तुः इति आदेशं समवाप्य परां द्युतिं लेभे । हि अधिकृतस्य सम्भावना तेजः तनोति ।

व्याख्या—अमर्त्यवधूसमूहः सुरसुन्दरीवर्णः, सुराणां पुरः देवानाम् समक्षे, आशंसिताऽपचितिचारु अपेक्षितमनोहरताम् अभिमुखं समक्षं, भर्तुः स्वामिनः इन्द्रस्येत्यर्थः । इति पूर्वोक्तम्, आदेशं नियोगं, समवाप्य संप्राप्य, परां लोकोत्तरां, द्युतिं कान्तिं, लेभे समधिगतवान्, हि यतः, अधिकृतस्य उचिताऽधिकारे नियुक्तस्य सेवकस्य, सम्भावना स्वामिकृताऽऽदरः, तेजः कान्तिं, तनोति विस्तारयति । वसन्ततिकावृत्तम् । अर्थान्तरन्यासाऽलङ्कारः ।

भावार्थः—अप्सरोवृन्देन देवानां पुरतः एवंभूतया अपेक्षितादधिकया प्रतिष्ठया मनोहररूपेण स्वसम्मुखमेव स्वामिन इदृशीमाज्ञां प्राप्य परा द्युतिर्लब्धा, यतोहि कस्मिंश्चिदधिकारे नियुक्तस्य जनस्य स्वामिकृता प्रतिष्ठा कान्तिं विस्तारयति ।

कोशः—'अमर्त्या अमृतान्धसः । बर्हिर्मुखाः क्रतुभुजोः गीर्वाणा दानवारयः' । 'स्त्री योषिदबदला योषा नारी सीमन्तिनी वधूः' । पूजा नमस्याऽपचितिः' । स्युःप्रभा रुग्रुचिस्त्विड्भा भाश्छविद्युतिदीप्तयः' । तेजः कान्तिर्द्युतिश्छविः' । सर्वत्राऽप्यमरकोशः ।

व्याकरणम्—आशंसिता—आ + शंसु + क्त + इट् । समवाप्य—सम + अव + आप्लृ + ल्यप् । लेभे—लभ् + लिट् + त । अधिकृतस्य—अधि + कृ + क्त + ङस् । तनोति—तनु + लट् + तिप् ।

पदार्थ—अमर्त्यवधूसमूहः = देवस्त्रियों [ अप्सराओं ] का समूह, सुराणां पुरः = देवताओंके सामने । आशंसितापचितिचारु = अपेक्षित सम्भावनासे सुन्दर । अभिमुखं = प्रत्यक्ष । भर्तुः = स्वामी ( इन्द्र ) के । इति = इस प्रकार की । आदेशं = आज्ञाको । समवाप्य = पाकर । परां = उत्कृष्ट । द्युतिं = कान्तिको । लेभे = पा

गया। हि = क्योंकि। अधिकृतस्य = किसी अधिकारमें नियुक्त व्यक्तिकी। संभावना = प्रशंसा। तेजः = तेजको। तनोति = बढ़ा देती है।

हिन्दी—देवताओंके आगे इस प्रकार आशासे अधिक अपनी प्रशंसा अपने सामने होने से प्रसन्न हुआ, अप्सराओंका झुण्ड, देवराज इन्द्रकी आज्ञा पाकर अत्यन्त तेजस्वी हो उठा। क्योंकि किसी अधिकारमें नियुक्त व्यक्तिका सत्कार उसकी कान्तिको बढ़ा देता है।

अभिप्राय—किसी भी व्यक्तिकी प्रशंसाका उसपर बड़ा मनोवैज्ञानिक असर पड़ता है। उसे अपनी सफलताओंपर हर्ष होता है। जिससे उसका उत्साह बढ़ता है और वह अधिक सफलताके लिए प्रयत्नशील होता है। यह भाव उसके चेहरेपर स्पष्ट परिलक्षित होता है क्योंकि उससे चेहरा खिल उडता है। यहाँ भी इन्द्रने देवताओंके सामने जो अप्सराओंकी प्रशंसा की उससे वे फूली न समाई और उनके चेहरे दमक उठे। किसी भी कार्यमें नियुक्त व्यक्तिकी प्रशसा कर देनेसे वह दूने उत्साह से उस कार्यको करने लगता है। यहाँ भी अर्थान्तरन्यास अलंकार है और वसन्ततिलका छन्द है ॥४६॥

प्रणतिमथ विधाय प्रस्थिताः सद्मनस्ताः
स्तनभरनमिताङ्गीरङ्गनाः प्रीतिभाजः।
अचलनलिनलक्ष्मीहारि नाऽलं बभूव
स्तिमितममरभर्तुर्द्रष्टुमक्ष्णां सहस्रम् ॥४७॥

इति महाकविभारविकृत किरातार्जुनीयमहाकाव्ये षष्ठः सर्गः।

अन्वयः—अथ प्रणतिं विधाय सद्मनः प्रस्थिताः स्तनभरनमिताऽङ्गीः प्रीतिभाजः ताः अङ्गनाः अचलनलिनलक्ष्मीहारि स्तिमितम् अमरभर्तुः अक्ष्णां सहस्रं द्रष्टुम् अलं न बभूव।

व्याख्या—अथ देवेन्द्रस्य आदेशप्राप्त्यनन्तरम्, प्रणतिं नतिं, विधाय परिकल्प्य सद्मनः देवेन्द्रगृहात्, प्रस्थिताः प्रचलिताः, स्तनभरनमिताङ्गीः कुचभाराऽवनतपूर्वाऽवयवाः, प्रीतिभाजः तोषं गमिताः, स्वामिसम्भावनयेति भावः। ताः पूर्वोक्ताः, अङ्गनाः सुरसुन्दरीः, अचलनलिनलक्ष्मीहारि स्थिरकमलशोभाहरणशीलं, स्तिमितं

विस्मयेन अचलम्, अमरभर्तुः इन्द्रस्य, अक्ष्णां नेत्राणां, सहस्रं दशशहस्री कर्तृ, द्रष्टुम् अवलोकयितुम्, अलं समर्थं, न वभूव न समजनि, तासां सौन्दर्यस्य निःसीमत्वात् ।

पुरा गौतम्यामनुरक्तस्येन्द्रस्य शापवशात् सहसा शरीरे सहस्रभगोत्पत्तिः समजनि, सा एव भगसन्ततिः पश्चान्नेत्ररूपेण विपरिणमिता, अतएव देवराजइन्द्रः सहस्राक्षः भगवान् इति च सुप्रसिद्धः । मालिनीवृत्तम् । उपमालङ्कारः ।

भावार्थः—प्रणम्य ततो गन्तुमुद्यताः पीवरकुचभरेणानतकायाः प्रमत्तास्ताः विलोकयितुं स्थिरनलिनाभमचलं देवराजस्याक्ष्णां सहस्रमपर्याप्तमभूत् ।

समासः—स्तनभरनमिताङ्गीः—स्तनानां भराः ( ष० तत्पु० ) तैः नमितानि अङ्गानि यासां ताः ( बहुव्रीहिः ) । स्तनभरैः नमिताङ्ग्यः ताः ( तृ० तत्पु० ) । प्रीतिभाजः—प्रीतिं भजन्तीति ताः (उपपद०) । अचलनलिनलक्ष्मीहारि—अचलानि च तानि नलिनानि ( कर्मधारयः ) तेषां लक्ष्मीः ( ष० तत्पु० ) । तां हरतीति तच्छीलम् ( उपपद० ) । अमरभर्तुः—अमराणां भर्ता तस्य ( ष० तत्पु० ) ।

कोशः—'मङ्गलाऽनन्तराऽऽरम्भप्रश्नकात्स्न्र्येष्वथो अथ' । 'गृहं गेहोदवसितं वेश्मसद्मनिकेतनम्' । 'स्तनौ कुचौ' । 'विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना ।' सर्वत्राऽत्यमरकोशः । अलं भूषणपर्याप्तिवारणेषु निरर्थके अलं शक्तौ च निर्दिष्टम्' । इति विश्वः ।

व्याकरम्—प्रस्थिताः—प्र + स्था + क्त + इट् + टाप् + जस् । स्तनभर—नमिताङ्गीः—अत्र 'अङ्गगात्रकण्ठेभ्यो वक्तव्यम्' इति ङीष् । प्रीतिभाजः—प्रीति + भज + ण्वि + जस् । अत्र 'भजो ण्विः' । इति ण्वि प्रत्ययः । अचलनलिनलक्ष्मीहरि—अचलनलिनलक्ष्मी + हृ + णिनि । द्रष्टुम्—दृश् + तुमुन् । बभूव—भू + लिट् + तिप् + णल् ।

इति श्री डॉ० बदरीनारायणपाण्डयेनकृतायां राजविवर्धिनी संस्कृतटीकायां
किरातार्जुनीयमहाकाव्यस्य षष्ठः सर्गः समाप्तः ।

पदार्थ—अथ = इसके बाद । प्रणतिं विधाय = नमस्कार करके । इन्द्रभवनसे । प्रस्थिताः = चलती हुई । स्तनभरनमिताङ्गीः = स्तनोंके भारसे झुकते अंगोंवाली । प्रीतिभाजः = ( स्वामी द्वारा सत्कृत होनेसे ) प्रसन्न हुई । ताः अङ्गनाः = उन

स्त्रियों ( अप्सराओं ) को । अचलनलिनलक्ष्मीहारि = स्थिरकमलकी शोभाको हरण करनेवाले । स्तिमितम् = निश्चल । अमरभर्तुः = देवराजका । अक्ष्णांसहस्रम् = हजार आंखोंका होना । द्रष्टु = देखनेके लिए । अलं न बभूव = पर्याप्त नहीं हुआ ।

हिन्दी—प्रणाम करके वहाँसे चलती हुई, स्थूल स्तनोंके भारसे झुके अङ्गों-वाली, प्रसन्न हुई उन अप्सराओंको देखनेके लिये, निश्चल कमल जैसी देवराजकी हजार आंखें भी अर्याप्त नहीं प्रतीत होती थी ।

अभिप्राय—साधारण व्यक्तिको दो आँखें होती है, इन्द्र सहस्राक्ष हैं, इन अप्सराओंके सौन्दर्यको एक टक देखते हुए इन्द्र समझते है कि यदि और अधिक आँखें होती तो अधिक सौन्दर्य देख पाता । अतिशयोक्ति अलंकार है । यह मालिनी छन्द है ॥४६॥

इति सुश्री डाँ० कु० रामेश्वरीकुमारी 'रासेश्वरी' कृत राजेश्वरी हिन्दी-टीकायुक्त किरार्जुनीयमहाकाव्य का छठवाँ सर्ग समाप्त ।

# हमारे प्रमुख प्रकाशन

( शीघ्र प्रकाशित )

१. संस्कृत साहित्यस्येतिहासः—डा० नागेन्द्र पाण्डेय
२. सिन्धुवादवृत्तम् रहस्यम्—पं० वेदव्यास शुक्ल
३. दशरुपकरहस्यम्—पं० वेदव्यास शुक्ल
४. ध्वन्यालोकदीपिका—पं० वेदव्यास शुक्ल
५. रसगंगाधरदीपिका—पं० वेदव्यास शुक्ल
६. सहित्यदर्पणदीपिका—आ० राजकिशोर त्रिपाठी
७. काव्यमीमांसा—आ० राजकिशोर त्रिपाठी
८. नलचम्पूसौरभम्—डा० वद्रीनारायण पाण्डेय
९. शब्दखण्डम—डा० वद्रीनाराण पाण्डेय
१०. दशकुमारचरितम्—( पूर्व पीठिका ) पं० पारसनाथ द्विवेदी
११. काव्यालङ्कारसूत्राणि—पं० पारसनाथ द्विवेदी
१२. मेघदूतम्—( पूर्वमेघः )
१३. गणकतरङ्गिणी—महामहोपाध्याय सुधाकर द्विवेदी
१४. शिवराजविजयरहस्यम्—( प्रथम ) पं० वेदव्यास शुक्ल
१५. भारतीय कुण्डली विज्ञानम्—डा० नागेन्द्र पाण्डेय
१६. तन्त्रसारः अभिनवगुप्तकृत—पं० हेमेन्द्रनाथ चक्रवर्ती
१७. व्याकरणशास्त्रस्येतिहासः—पं० बाँकेलाल मिश्र
१८. मेयर आफ कैस्टरब्रिज—( नोट ) आ० राजकिशोर त्रिपाठी
१९. वृहदवकहड़ाचक्रम्-निर्मला-संस्कृत टीका सहित—चन्द्रमा पाण्डेय
२०. लघुसिद्धान्तकौमुदी—बालमनोरमा टीका सहित—

सं०—सूर्य नारायण शुक्ल
हिन्दी—रामगोविन्द शुक्ल

●

प्राप्ति स्थान
वाराणसेय संस्कृत संस्थान
सी० २७/६४ जगतगंज, वाराणसी